

# कन्दर्पचूडामणिः



श्रीवीरभद्रदेवनृपति विरचितः

कुशलापराख्येन रामचन्द्रशास्त्रिणा संपादितः

सुखप्रभाख्यया व्याख्यया परिष्कृतश्च ।






पुस्तक प्राप्तिस्थानम्—

बनारसीदास सुन्दरलाल,

संस्कृत पुस्तकालय लाहौर ।



१९२६ ई०

# ❀ वक्तव्यम् ❀

विदितमेवेदं विदुषां यद् विस्तारिणि आर्यवाङ्मयस्य कामशास्त्राख्ये विभागे श्रीवात्स्यायनमुनेः कृतिः कामसूत्रमेव मूलभूतः प्रबन्धोऽद्यत्वे समुपलभ्यते, यमुपजीव्य रतिरहस्यादीनि नाना प्रबन्धान्तराणि न्यबध्यन्त।

तस्यैतस्य सकलविद्वद्भिरादृतगुणगरिम्णः, जगतीतले अद्वितीयस्य लोकव्यवहारादर्शस्य काव्यकलाजीवातोः प्रबन्धरत्नस्य श्रीयशोधरविरचिता जयमङ्गलाख्या, श्रीभास्करनृसिंहशास्त्रिकृता वृत्तिश्चेति व्याख्याद्वयमुपलभ्यते*। तत्र वृत्तिर्नात्युपयुक्ता। यतस्तया मूलमपि न सम्यग् विशदीक्रियते, दूरमास्तां तदुपबृंहणम्। अथ च बहुत्र तत्कर्त्रा सूत्रकृत्प्रयुक्तानां पारिभाषिकाणाशब्दानां मर्थमनवबुद्धवता अन्यथैवार्थः कृतः, अनेकत्र च मूलाशयमनवगतवता मूलपाठोऽपि परिवर्तित इति। जयमङ्गला तु भाष्यकल्पा साधु स्पष्टयति सूत्रम् (क्वचित् क्वचित्तु अस्यामपि वैकल्यमस्ति)। अस्यैव श्रीरामचन्द्रतनयेन श्रीवीरभद्रदेवनृपतिना विरचिता इयं कन्दर्पचूडामणिनाम्नी अन्या पद्यमयी व्याख्या। तदाह ग्रन्थकृत् स्वयमेव—

"सप्ताधिकरणमेतत् षट्त्रिंशत्परिमितस्फुटाध्यायम्।
वात्स्यायनकृतशास्त्रं व्याख्यातं वीरभद्रेण॥"

(७।२।४६) इति।

वस्तुतस्तु अयं कन्दर्पचूडामणिर्नव्याख्या; किन्तु पद्यानुवाद एवायम्। नह्यत्र—

---

* "वात्स्यायनप्रोदितसूत्रजातं तदीयभाष्यं च विलोक्य सम्यक्। स्वयं व्यधत्ताभिनवार्थगर्भं निबन्धमेकं नृपवेषधारी॥" इति माधवकविप्रणीतशङ्करदिग्विजयपद्यात् प्रतीयते कामसूत्रस्य किमपि भाष्यमप्यासीदिति।

"स्पर्शानुभवप्रभवो यः पुरुषार्थो विशिष्यतेऽन्यस्मात् ॥"
(१।२।१५)

इत्यादि कामलक्षणविषयम्—

"सर्गः स्वभावभेदः कर्त्राधारौ स्वभावतो भिन्नौ।"
(२।१।४७)

इत्यादि सर्गशब्दार्थविषयं च व्याख्यानमपहाय स्थलान्तरे किमपि व्याख्यानं दृश्यते मूलस्य, येनायं व्याख्येति वक्तुं शक्येत। ग्रन्थकृताऽत्र सकलः कामसूत्रीयोऽर्थविस्तरः आर्याभिरनूदितः। वात्स्यायनीयं कामतन्त्रं प्रौढगद्यबद्धं सूत्ररूपत्वादतिगभीरार्थं मन्दमतीनामसुखावबोधमनेनाऽभ्युपायेन किञ्चित् सारल्यं नीतम्। आर्याः प्रायः सरला ललिताश्चापि सन्ति, परं बहुत्र तास्तथा क्लिष्टाः सन्ति यथा सूत्रेभ्योयोऽर्थः सुखमवबुध्यते स ताभ्यो नान्तरा व्याख्यानं सुखावगमः (अत एव टिप्पण्यां तादृशीरार्याः स्पष्टार्था विधातुं बहुत्र तन्मूलभूतानि सूत्राण्येवोद्धृतानि, तेषु तदर्थस्य सुस्पष्टत्वात्)। क्वचित् क्वचित् सूत्रविरुद्धोक्तयोऽपि सन्ति (यथा २।३।७ चुम्बनस्थाननिर्देशे। तत्रत्या टिप्पणी दृश्यताम्)। अनेकत्र छन्दोभङ्गः। बहुत्र व्याकरणनियमावहेलनम् (भवेदिति विध्यर्थे भूयादित्याशीर्लिङ् अनेकत्र प्रयुक्तः)। बन्धशैथिल्यं बहुलमस्ति। रचना हठादाकृष्टा प्रतिभाति, नतु रतिरहस्यकारादीनामिव स्वयमागता। कामसूत्रीयमर्थजातं कृच्छ्रादार्यासु निवेशितमिति ग्रन्थमिमं कामसूत्रं च सह पठद्भिः सुखं ज्ञातुं शक्यते—इत्येतेषु कतिपयदोषेषु सत्स्वपि समष्टिदृष्ट्या ग्रन्थोऽयं कामागमीये वाङ्मये उत्कृष्टं पदमधिकरोति। कामसूत्रीयो ग्रन्थविस्तरो यथाऽऽनुपूर्वि सामस्त्येन साधुपद्यबन्धे निबद्धोऽत्रैव साक्षात् क्रियते, नान्यत्रेति कामसूत्रस्येदमपरं रूपम्। अस्त्यत्र कविताचमत्कारोऽप्यनेकत्र (दृश्यन्तां ग्रन्थस्यास्य आरम्भावसानश्लोकाः, प्रत्यध्यायमारम्भश्लोकाः, प्रथमाधिकरणस्य चतुर्थेऽध्याये ५ श्लोकात् ११ श्लोकपर्यंतं नागरोचितगृहवर्णनं च)। उपरिदर्शिता दोषा अपि एतद्ग्रन्थप्रणेतुर्नृपतित्वेन राज्यकार्यव्यासक्त्यादिना पर्याप्तैकताननताद्यलाभात्, अन्येभ्यश्चैवंविधकारणेभ्यः क्षम्या

एव। राजानश्च कवयः प्रबन्धकृतश्चेत्येतत्खलु प्रविरलदर्शनम्। तदयं राजप्रवरः श्रीवीरभद्रदेवः प्रबन्धरत्नस्याऽस्य (कन्दर्पचूडामणेः) निर्माणेन भूयो भूयः प्रशस्यः।

अयं वघेलाख्यक्षत्रियवंशे रामचन्द्राख्यनृपतेर्जन्म लेभे। श्रीशालिवाहनाख्य*नृपतेरारभ्य आत्मानं यावत् वघेलवंशीयभूपानां वर्णनमयं स्वयमेव ग्रन्थारम्भे कृतवान्। वघेलवंशीयानां वासभूमिस्तु साम्प्रतं वघेलखण्डनाम्ना प्रसिद्धं रीवां (रेवा) राज्यमेव। कन्दर्पचूडामणिनिर्माणं च १६३३ विक्रमसंवत्सरे (1577 A. D.) पूर्णमजायतेति ग्रन्थकृता स्वयं ग्रन्थान्ते प्रोक्तम्—

"हरलोचनहरलोचनरसशशिभि(१६३३)र्विश्रुते समये।
फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्येरः॥" इति।

ग्रन्थस्याऽस्य संस्करणार्थमादर्शपुस्तकचतुष्टयमुपयुक्तमस्माभिः। तत्र—

[आ. पु.] आदर्शपुस्तकं काशीवास्तव्यप्राचीनपुस्तकसंग्रहरसिकाविपाश्चिद्वरबाबूगोविन्ददासमहोदयात् प्राप्तम्।

[क] संज्ञया संकेतितं पुण्यपत्तन (पूना) स्थ डा. भाण्डारकरसंस्थापितप्राच्यान्वेषणशालीयम्।

[ख] संज्ञया संकेतितं रीवाँनरेशानां श्रीवेङ्कटरमणसिंहदेवजू सी. एस. आई. इत्येतेषामाज्ञया रघुराज (सतना) नगरे १९०८ खृस्ताब्दे भाषाटीकासहितं मुद्रितम्।

[ग] संज्ञया संकेतितं बीकानेरराजकीयपुस्तकालयस्थपुस्तकस्य प्रतिकृतिभूतम्।

एवं पुस्तकचतुष्टयाऽऽलम्बनेन ग्रन्थस्याऽस्य संस्करणे यथामति कृतो यत्नः। "सुखप्रभा"ख्या टिप्पणी च संकलय्य योजिता।

---

* अयं शालिवाहननृपतिः व्याघ्रदेवात् (अस्यैव नाम्ना वघेलवंशो वघेलखण्डं च ख्यातिं गतमिति भाति) परवर्ती सप्तदशः पुरुषः। वीरभद्रदेवश्च श्रीवेङ्कटरमणसिंहदेवात् (यस्याज्ञया १९०८ खृस्ताब्दे भाषाटीकासहितः कन्दर्पचूडामणिर्मुद्रितोऽभूत्) पूर्ववर्ती षोडशः पुरुषः—इत्यादि भाषाटीकायुतकन्दर्पचूडामणेर्भूमिकायां वर्णितमस्ति।

तत्र मूलगतः पाठभेदो दर्शितः। पाठान्तराणां तारतम्यं परीक्षितम्। छन्दोभङ्गाः पाठान्तरकल्पनया समाहिताः। व्याकरणविषयं वैकल्यं व्याकृतम्, यथासंभवं समाहितं च। शङ्कास्पदानां विषयाणां पर्यालोचनया वस्तुतत्त्वमुद्घाटितम्। पारदारिकवैशिकादिप्रकरणप्रवचने शास्त्रकारस्य हृदयं सोपपत्ति प्रकटीकृतम्। तत्तत्स्थलानि च यथाशक्यं विशदीकृतानि। कष्टावगममूलार्थस्पष्टतायै बहुत्र सूत्राण्युद्धृतानि, बहुत्र च जयमङ्गला। विभिन्नावसरस्फुरा हि भवन्ति मनुजबुद्धिषु पदार्थाः। अतः पश्चाद् बुद्धिमारूढं पदार्थजातं टिप्पणी परिशिष्टे निवेशितम्। तच्च (परिशिष्टम्) अल्पभागव्यापि एवास्ति। समस्तटिप्पण्याः परिशिष्टं तु बुद्धौ संगृहीतमपि समयाऽलाभात् लिखितुं न पारितम्। ख. पुस्तकस्य विलम्बेन लाभात् टिप्पण्यामनिर्दिष्टाः कतिचित् तदीयाः पाठा अपि परिशिष्टरूपेणान्ते योजिताः। अन्यदपि चैवंविधं यद् यत् कर्तव्यतया बुद्धिपथातिथीभूतं तत् यथासामर्थ्यं संपादितम्। तत्र मन्दप्रचारे लुप्तसंप्रदाये नामतोऽपि विरलैरेव ज्ञायमाने (अङ्गुलिगण्यैरेव विद्वद्भिरर्थतोऽनुसन्धीयमाने) गहनेऽस्मिन् शास्त्रे प्रवर्तमानस्य मादृशस्य मन्दमतेः स्खलनं स्वाभाविकमेव। तस्य समाधानं शोधनं वा विदुषामायत्तमिति तद्भारं तेष्वारोप्य निःशङ्कमास्यते मया।

अस्य "उपोद्घातः" षष्टिपृष्ठात्मको मया सपरिश्रमं मुद्रणाय सज्जीकृतोऽपि पत्राणां न्यूनतायामापतितायां पुस्तकमुद्रणे पूर्वमुपयुक्तानां पत्राणामलाभात् मुद्रापयितुं नाऽपार्यत प्रकाशकैः। द्वितीयसंस्करणे सोऽपि मुद्रितो भविष्यति। अस्य मुद्रणं मम निरीक्षायां न जातमिति मुद्रणे जातस्य अधरोत्तरभावस्य नाहमुत्तरदः। अस्य ग्रन्थस्य पद्यमयत्वेन कामसूत्रीयार्थविस्तरस्य बहुत्राऽस्फुटतया तत्स्फुटीकरणायैव मया टिप्पणी निबद्धा। तत्र मे साफल्यमभून्नवेत्यध्येतार एव जानन्तु—

इति विज्ञापयति

कुशलापराख्यो रामचन्द्रशास्त्री।

# विषयानुक्रमणी.

---

# टिप्पण्यां प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकाराणां च नामावली.

## ग्रन्थनामानि

अथर्ववेदः
अनङ्गरङ्गः
अनर्घराघवम्
अपरार्कः
आपस्तम्बगृह्यसूत्रम्
आर्यासप्तशती
आश्वलायनगृह्यसूत्रम्
उशनःस्मृतिः
ऋग्वेदः
कलाविलासः
कादम्बरी
कामरत्नम्
कामसमूहः
काव्यमीमांसा
काशीखण्डम्
किरातार्जुनीयम्
कुट्टनीमतम्
कुमारसंभवम्
कुमारसंभवविवरणम्
कौशिकसूत्रम्
गरुडपुराणम्
गाथासप्तशती
गीता
गृह्यपरिशिष्टम्
गोभिलगृह्यसूत्रम्

चतुर्वर्गचिन्तामणिः
चारुचर्या
जयमङ्गला
जाम्बवतीपरिणयम्
तैत्तिरीयसंहिता
त्रिकाण्डशेषः
दक्षस्मृतिः
दशकुमारचरितम्
दुर्घटवृत्तिः
दूतघटोत्कचम्
द्राह्यायणगृह्यसूत्रम्
धर्मशर्माभ्युदम्
धर्मसंग्रहटिप्पणी
धातुपाठः
नलचम्पूः
नागरसर्वस्वम्
नाट्यशास्त्रम्
नारदस्मृति
निरुक्तम्
नैषधीयचरितम्
नैषधीयचरितटीका
न्यायदर्शनम्
पञ्चसायकः
पदचन्द्रिका
पदपाठः
पद्मपुराणम्
पराशरमाधवः
पारस्करगृह्यसूत्रम्
पुरुषार्थसिद्ध्युपायः
बालभारतम्

ब्रह्मपुराणम्
ब्रह्मवैवर्तपुराणम्
बृहत्संहिता
भट्टिकाव्यम्
भागवतम्
भावप्रकाशः
भेलसंहिता
मदनसाम्राज्यभाणः
मन्मथसंहिता
मनुस्मृतिः
महानिर्वाणतन्त्रम्
महाभारतम्
महाभाष्यम्
माघकाव्यम्
माधवनिदानम्
मानवगृह्यसूत्रम्
मार्कण्डेयपुराणम्
मालतीमाधवम्
मिताक्षरा
मुग्धोपदेशः
मेदिनी
यमस्मृतिः
यादवप्रकाशः
याज्ञवल्क्यस्मृतिः
योगतरङ्गिणी
रघुवंशम्
रतिकल्लोलिनी
रतिरत्नप्रदीपिका
रतिरहस्यम्
रतिरहस्यदीपिका
रभसकोशः

रसार्णवसुधाकरः
रुद्रटालङ्कारः
लटकमेलकम्
लिङ्गपुराणम्
वराहपुराणम्
वसिष्ठस्मृतिः
व्यासस्मृतिः
वार्तिकम्
विष्णुधर्मोत्तरपुराणम्
विष्णुस्मृतिः
वीरमित्रोदयः
वैयाकरणसिद्धान्तकौमुदी
वैष्णवधर्मशास्त्रम्
शङ्खस्मृतिः
शब्दरत्नावली ( कोष )
शाकुन्तलम्
शार्ङ्गधरपद्धतिः
शृङ्गारदीपिका
षट्त्रिंशन्मतम्
समयमातृका
संस्काररत्नमाला
सहृदयलीला
स्कन्दपुराणम्
सरदीपिका
सांख्यकारिका
सामुद्रिकशास्त्रम्
साहित्यदर्पणः
सिद्धान्तकौमुदीटिप्पणी
सुभाषितरत्नभाण्डागारम्
सुन्दरीशतकम्
सुश्रुतम्
सूत्रम् ( कामसूत्रम् )
हरविजयम्
हरविजयटीका

## ग्रन्थकारनामानि

अत्रिः
अनङ्गरङ्गकारः
अमरः
अलकसूरिः
आचार्याः
आपस्तम्बः
आश्वलायनः
औद्दालकिः
काश्चीनाथः
कात्यायनः
कश्यपः
गार्ग्यनारायणः
गोणिकापुत्रः
गोवर्धनाचार्यः
चरककारः
जयमङ्गलाकारः
दीक्षिताः
दुर्घटवृत्तिकृत
देवलः
द्राह्यायणः
नामिसाधुः
नारदः
नारायणः
नारायणः
पाणिनिः

बाणः
बाभ्रव्यः
बाभ्रवीयाः
बौधायनः
भरतः
भर्तृहरिः
भारविः
भासः
मनुः
मल्लिनाथः
माधवः
याज्ञवल्क्यः
रतिरहस्यकारः
रभसः
वत्सः
वराहमिहिराचार्यः
वाचस्पतिः
वात्स्यायनः
वृत्तिकारः
वृद्धगोतमः
व्याघ्रः
शङ्खः
शङ्खलिखितौ
शार्ङ्गधरः
शिवदत्तदाधिमथाः
शृङ्गारदीपिकाकारः
श्रीहर्षः
श्वेतकेतुः
सुदर्शनाचार्यः
हरदत्तः
हारीतः

# टिप्पणीस्थ संक्षिप्त ग्रन्थनाम संकेत सूची.

ज० मं०—जयमङ्गला कामसूत्रटीका यशोधरकृता

म० स्मृ०—मनुस्मृतिः ।

मनु०——- ,,

या० व० स्मृ०—याज्ञवल्क्यस्मृतिः ।

अ० स्मृ०—अत्रिस्मृतिः ।

उ० स्मृ०—उशनःस्मृतिः ।

र० र०—रतिरहस्यम्

ना० स०—नागरसर्वस्वम्

अ० र०—अनङ्गरङ्गः

अथ

# श्रीवीरभद्रदेवनृपति-
प्रणीतः

# कन्दर्पचूडामणिः ।

## साधारणं नाम प्रथममधिकरणम् ।

### प्रथमोऽध्यायः ।

अरुणाऽपि दत्तकोपाद् भक्त्यनुरक्तेषु साऽनुरागेव ।
कल्याणाय जगत्या दृष्टिः श्रीकालभैरवस्याऽस्तु ॥१॥

प्रणमत रहसि सतृष्णं कृष्णं स्मरशास्त्रपारगं विज्ञाः ।
पीयूषादपि मधुरेऽधरबिम्बे गोपकन्यायाः ॥२॥

मन्त्री वसन्तसमयो यस्य च राजीवलोचना राज्यम् ।
वाहा मलयसमीराः पञ्चशरोऽसौ नृपो जयति ॥३॥

वंशः कंसद्विष इव जयति बघेलस्य भूभुजां मान्यः ।
अजघन्योऽस्ति जगत्यां यस्मादन्यो न भूपालः ॥४॥

प्रादुर्बभूव वंशे तत्र श्रीशालवाहनो नृपतिः ।
इन्दुर्मरन्दबिन्दुर्यस्य यशःपुण्डरीकस्य ॥५॥

---

कुशलापरनामाऽहं रामचन्द्रोऽनुगः सताम् ।
सुखप्रभाऽभिधामत्र टिप्पणीं कर्तुमुद्यतः ॥

१ 'काल' इति त्रुटितम् क. ग. ।

२ 'पीयूषादधिमधुरे' ग. ।

भिन्नस्य शीतमहसः सुषिरं लक्ष्मेति मन्यते लोकः ।
विधुरैर्यदीयविधुरैर्निशि निहतैर्भास्करभ्रान्त्या ॥६॥
प्रादुर्बभूव तस्माद्वीरः श्रीवीरसिंहाख्यः ।
यस्य यशोऽम्बुजकोशे स्फारा मकरन्दबिन्दवस्तारा: ॥७॥
यस्य करेण करादिह समरे रिपुभूपवारणाधिपतेः ।
दानाम्बुसंगशोभा सातिशया लुण्ठिता झटिति ॥८॥
वीरस्तदङ्गजन्मा प्रतिभटपृतनातमस्विनीभानुः ।
श्रीवीरभानुनामाऽधिपतिरभूद् भूभुजां जगति ॥९॥
श्रुत्वाऽपि वीरभानोर्दानकथा नेह जातलज्जानि ।
वृक्षोपलपशुभावाद्दैवततरुधेनुरत्नानि ॥१०॥
कामादप्यभिरामो भीमादपि बाहुशालिनां मान्यः ।
कर्णादपि च वदान्यो जयति सुतो रामचन्द्रोऽस्य ॥११॥
श्रीरामेणाऽऽरब्धे दाने गजवाजिनोर्मुखैक्येन ।
वक्रानननो गणपतिर्भीत्याऽभूत्तुम्बुरुः खचरः ॥१२॥
राजोचितगुणसीमा भीमाऽवरजादिहाऽधिको धनुषि ।
तनयो विनयसमुद्रो जयतितरां वीरभद्रोऽस्य ॥१३॥
विद्यायां सुरगुरुरिव सौन्दर्ये पञ्चबाणतोऽप्यधिकः ।
दाने कल्पतरोरयमुपमेयस्तेन केनेह ॥१४॥
चूडामणिं स्मृतिभुवो ग्रंथं श्रीपञ्चबाणशास्त्रेऽसौ ।
वात्स्यायनानुरुद्धं कुरुते कुतुकाऽऽत्तहृद्वृत्तिः ॥१५॥
कामाऽऽगमानुसारिणि मनसिजचूडामणाविह ग्रंथे ।
अधिकरणे प्रथमेऽस्मिन् प्रथमोऽध्यायो विधीयते प्रकटः ॥१६॥

---

१ शत्रुभिरित्यर्थः ।

२ तन्नामा तुरङ्गवदनः (किन्नरः) ।

लक्षं त्रिवर्गशासनमध्यायानां प्रजापतिश्चक्रे ।

सृष्ट्वा प्रजाः समस्तास्तासां स्थितये समस्तस्य ॥१७॥

एकं देशं चक्रे पृथगिह धर्माधिकारिकं मतिमान्[2] ।

अर्थाधिकारिकं गुरुरमरपतेः कामसूत्रं तु ॥१८॥

नन्द्यध्यायसहस्रं कृतवान् संक्षेपमस्य चाऽर्धेन ।

पञ्चभिरध्यायशतैरौद्दालकिरादरादकृत ॥१९॥

बाभ्रव्यः पाञ्चालः साधारणसांप्रयोगिकप्रमुखैः[3] ।

संचिक्षेप तदर्थानधिकरणैः सप्तभिर्मतिमान् ॥२०॥

अध्यर्धं शतमस्मिन्नध्यायानां प्रकीर्तितं तस्मात् ।

षष्ठं दत्तकनामा वैशिकमेकं पृथक् चक्रे ॥२१॥

भार्याधिकारिकं किल गोनर्दीयः सरागमाऽऽचार्यः ।

घोटकमुखः पृथक्कां[4] कन्यासंयुक्तके चक्रे ॥२२॥

चारायणः प्रसङ्गात् साधारणमेव केवलं कृतवान् ।

चक्रे सुवर्णनाभः सांयोगिकमेव भेदेन ॥२३॥

औपनिषदिकं चक्रे कुचुमारो मारदर्शने स्रष्टा ।

संप्राह पारदारिकमादरतो गोणिकापुत्रः ॥२४॥

खण्डश एताः कृतयः प्रोत्सन्नास्तत्र[5] किमपि किं चित्रम् ।

सम्यग् ज्ञानविरहितो नहि लोकः सज्जते क्वापि ॥२५॥

---

१ 'तस्य' क. समस्तस्य व्यवहारजातस्येति शेषः ।

२ स्वायंभुवो मनुरिति शेषः । 'तस्यैकदेशिकं स्वायंभुवो मनुः' इति सूत्रम् ।

३ प्रमुखशब्दात्—वक्ष्यमाणाः कन्यासंप्रयुक्तक—भार्याधिकारिक—पारदारिक—वैशिकौपनिषदिका गृह्यन्ते ।

४ कन्यासंयुक्तके पृथक्कां (भेदं) चक्रे=कन्यासंप्रयुक्तकं नाम अधिकरणं पृथक् प्रोवाच।

५ 'प्रोच्छिन्नास्तत्र' क. ।

बाभ्रव्यस्य कृतादपि न ज्ञानं कामतन्त्रतत्त्वस्य।
महदिदमिति नाध्येतुं यस्माच्छक्यं नृणामेतत् ॥२६॥
एवं स्मरागमीयं मत्वोच्छेदं जगद्धिते युक्तः।
वात्स्यायनः प्रचक्रे सूत्रं कामस्य संक्षिप्य ॥२७॥
मत्वा दुरधिगमं तद् दृष्ट्वा महतां च ताः कृतीः सुकृती।
श्रीवीरभद्रदेवः सोद्योगः कामशास्त्रेऽसौ ॥२८॥
वात्स्यायनानुरुद्धानर्थानिह पुष्पधन्वनोऽभिमतान्।
श्रीवीरभद्रमतिमानार्यावृत्तेन संतनुते ॥२९॥
अधिकरणे प्रथमेऽस्मिन् शास्त्रे साधारणाह्वये पञ्च।
अध्यायाः परिदिष्टाः शास्त्रोदितसंग्रहः प्रथमः ॥३०॥
तदनु त्रिवर्गसिद्धिर्विद्योद्देशस्ततः परं तस्मात्।
वृत्तं नागरिकाणां दूतीकर्मावमर्शनं पश्चात् ॥३१॥
अधिकरणान्तरविषयास्तेष्वध्यायाश्च संख्यया सहिताः।
ज्ञेयाः प्रत्यधिकरणं नेहाऽतस्ते निरूप्यन्ते ॥३२॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
साधारणेऽधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥३३॥



## अथ द्वितीयोऽध्यायः।

श्रीवीरभद्रकृतिना मनसिजचूडामणाविह ग्रंथे।
क्रियतेऽध्यायः प्रकटः प्रथमाऽधिकृतिद्वितीयोऽसौ ॥१॥

१ 'जगद्धितोद्यक्तः' क.।

अर्थान् विद्यादीनिह बाल्ये सेवेत यौवने कामम्।
तदुपरि धर्मं मोक्षं समयविभागं त्रिवर्गस्य ॥२॥
अनपेक्ष्यैव च समयानायुर्नियमानपेक्षया विबुधः।
अन्योन्यानभिघातं सेवेताऽर्थादिकान् वर्गान् ॥३॥
प्राग् विद्याऽभ्यसनादिह संतनुयात् कामसेवनं नैव।
मन्वादिभिरभियुक्तैर्विहितं तद् ब्रह्मचर्येण ॥ ४ ॥
केवलकामवशत्वे प्रक्षीणार्थो नचाऽऽप्नुयात् कामम्।
धर्मं चेति तदर्जनरक्षणनिरतो भवेल्लोकः ॥ ५ ॥
धर्माऽनाचरणे खलु कामैरर्थैः क्व वाऽस्ति संयोगः।
कामकलाऽनाचरणे वैयर्थ्यं स्यात्तयोरेव ॥ ६ ॥
सेवेताऽस्मात् त्रितयं नैवाऽभिभवोऽत्र तेषु कस्यापि।
धर्मक्रियाऽल्पतायाः शूद्राणां गौरवं कामे ॥ ७ ॥
राज्यस्याऽर्थवशत्वादर्थप्राधान्यमाचरेद्राजा।
इति वात्स्यायनहृदयं नन्वर्थो राज्ञ एवेति ॥ ८ ॥
[1]यागादयोऽदृष्टतया लौकिकमानस्य गोचरा नैव।
तस्य प्रवर्तनं यद्धर्मोऽसौ कथ्यते लोकैः ॥ ९ ॥
मांसादिभक्षणानां दृष्टाऽर्थानां निवृत्तिरपि शास्त्रात्।
धर्मः कथितो विदुषा बोधस्तस्य श्रुतिप्रभृतेः ॥ १० ॥

---

१ अदृष्टफलत्वादप्रवृत्त्यविषयेषु यागादिषु शास्त्रात् प्रवर्तनम्, दृष्टफलत्वात्प्रवृत्तिविषयेभ्यो मांसभक्षणादिभ्यश्च शास्त्रात् निवर्तनं धर्म इत्यर्थः।

नच संदिग्धफलत्वादारम्भो नैव यज्ञदानादेः ।
अभिचारादिवदेषां[1] श्रुतिमूलत्वात् फलाऽवधृतेः ॥ ११ ॥

विद्याभूम्यादीनामर्जनमेतस्य वर्धनं चाऽर्थः ।
वात्स्यायनेन कथितं तस्य ज्ञानं वणिक्प्रभृतेः ॥ १२ ॥

अर्थः कालाऽधीनः किमिह कृतेनेति केचनाऽऽचार्याः[2] ।
आवश्यकी प्रवृत्तिः पुरुषस्याऽर्थार्थमित्यन्ये ॥ १३ ॥

श्रोत्रादीनामर्थे स्वे स्वे याः स्युः प्रवृत्तयः सरसाः ।
ता वात्स्यायनमुनिना कामे सामान्यतः कथिताः ॥ १४ ॥

स्पर्शाऽनुभवप्रभवो यः पुरुषार्थो विशिष्यतेऽन्यस्मात् ।
कामः स तु प्रधानं मदनोदय इत्थमाम्नातम् ॥ १५ ॥

श्रीमल्लक्ष्मणदेवः कथयति तत्रैव तं च (तच्च ?) वैशिष्ट्यम् ।
यत्रोभावपि भोग्यौ भोक्तारौ चैव निर्दिष्टौ ॥ १६ ॥

सुखमिह वस्त्रादिभवं भोक्तुः पुरुषस्य केवलं भवति ।
आयामनं ( ? ) जनानामत्र तु युगपद् द्वयोः प्रथितम् ॥ १७ ॥

---

१ अभिचारः (हिंसात्मकं कर्म) "श्येनेनाऽभिचरन् यजेत" इत्यादिना उक्तः। आदिना अनुव्याहारः (शान्तिकपौष्टिकं कर्म) । तयोः श्रुत्युक्तयोः हिंसाशान्तिपुष्टिरूपफलदर्शनात् श्रुत्युक्तमन्यदग्निहोत्रादिकमपि सफलम् । नहि अपौरुषेयत्वेन अभिन्नयोः शास्त्रावयवयोर्वितथावितथत्वभेदो युज्यते । वितथत्वे चेतरस्यापि वितथत्वप्रसङ्गात् । एतदेव "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" (१।२।६७) इति सूत्रेण न्यायदर्शनकृता दर्शितम् । एतद्विषयको विस्तरस्तु मीमांसाप्रबन्धेषु द्रष्टव्यः ।

२ 'कालकारणिकाः' इति सूत्रे व्यपदिष्टाः ।

कथितं लक्षणमन्यैर्यातीदं[1] बाललालनाऽऽचरणे।
पितुरिव तत्राऽऽनन्दो भवति न किं लालनीयस्य॥ १८॥
लीलायामिह यस्यां भवतितरां पुष्पधन्वनोऽनुसृतिः।
सेह निगदिता कामो मतमेतद् वीरभद्रस्य॥ १९॥
दृष्ट्वा दशवदनादेः[2] कामाऽऽसक्त्या तथा महाऽनिष्टम्।
तादृशमेव न कुर्यान्नतु कामं नाऽऽचरेदेव॥ २०॥
तत्प्रतिपत्तौ हेतुर्मनसिजसूत्रं च नागराऽऽसंगः।
समवाये त्वनयोरिह पूर्वो ज्ञाने गरिष्ठः स्यात्॥ २१॥
धर्मे भवन्तु विद्या येन विना ता न जायते बोधः।
सन्तु तथाऽर्थे हेतोरस्योद्बोधो यतः शास्त्रात्॥ २२॥
कामे तु तिर्यगादेः शास्त्रकथंता (कथान्ता ?)ऽवबोधविधुरस्य।
भवति यथा कृतिरेवं स्यादन्येषां स्वतः सिद्धा॥ २३॥

१ यातिसमन्वेतीत्यर्थः। बाललालने लालयितुः पितुर्यथाऽऽनन्दो भवति तथा लालनीयस्य बालस्यापि। एवं यथा भोक्तुः पुरुषस्यानन्दो भवति तथा भोग्यायाः स्त्रिया अपीति यस्यां लीलायामुभयोर्भोक्तृभोग्ययोः (नरनार्योः) आनन्दानुभवः स काम इति भावः। यद्यपि संप्रयोगलीला न कामः, तथापि स्त्रीपुंसयोः संप्रयोगरूपायां लीलायां कामशब्द उपचरितः। तत्पूर्वकत्वात् कामस्येति बोध्यम्।

२ आदिना "यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः (कामयमानः अभिगच्छन्) सबन्धुराष्ट्रो विननाश। देवराजश्चाहल्याम्, अतिबलश्च कीचको द्रौपदीम्......" इति सूत्रोक्ता ज्ञेयाः। तस्मात् तथाविधां कामेऽत्यासक्तिं परिहरेत्, न तु सर्वथा कामसेवनं त्यजेदेव। यथाऽतिभुक्त आहारोऽजीर्णादिदोषं जनयन्नपि शरीरस्थितये मर्यादया सेव्यते, तथाऽतिसेवितः स्थितिविरुद्धं सेवितो वा कामोऽपि महानिष्टं जनयन्नपि खेदनिवृत्त्या शरीरस्थितये मर्यादया सेव्यः। अन्यथा रागोद्रेकवशादुन्मादादिदोषेण न शरीरस्थितिः। किञ्च धर्मार्थयोः फलमपि काम एव, तदसेवने तौ निष्फलौ केवलमायासायैव स्याताम्। यदुक्तं रतिकल्लोलिन्याम्—"फलं धर्मस्य विभवो विभवस्य फलं सुखम्। सुखमूलानि तन्वङ्ग्यो विना ताभ्यः कुतः सुखम्॥" इति।

तस्मान्न शास्त्रकृत्यं कामेऽखिललोककाम्यमानेऽपि ।
इति केचिदाहुरार्या नैतद्वात्स्यायनो मनुते ॥ २४ ॥
परतन्त्रा परयुक्ता निरुपाया साधुसंप्रयोगस्य ।
कृतिरेतत्प्रतिपत्तिः शास्त्राधीना यतोऽभिमता ॥ २५ ॥
पशुषु त्वनावृतत्वात् स्त्रीणामास्तामपार्थकं शास्त्रम् ।
ऋतुकालाऽवगतिः खलु शास्त्रादेव स्मराऽनुगुणा ॥ २६ ॥
यदि शास्त्राभिमतानां बोद्धा नैवाऽस्त्युपायजालानाम् ।
नेह सुखाय समर्थः सम्यक् कान्तोऽपि कान्तायाः ॥ २७ ॥
भवतु च बीजविसर्गः शास्त्रोपायं विनैव केषाञ्चित् ।
आनन्दस्य विशेषो भवति पुनः संप्रयोगेण[1] ॥ २८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनाऽनुसृते ।
साधारणेऽधिकरणे रचितोऽध्यायो द्वितीयोऽसौ ॥ २९ ॥



# अथ तृतीयोऽध्यायः ।

परिखाऽऽकृतिभुजवैभवभग्नप्रतिभूपवैभवेनेह ।
विशदीक्रियतेऽध्यायः प्रथमाऽधिकृतेस्तृतीयोऽसौ ॥ १ ॥
सहितान्यंश ( ग[2] ) ग्रंथैः पुरुषोऽधीयीत कामसूत्राणि ।
विद्यानामनुपघ्नन् कालान् धर्मस्य चाऽर्थस्य ॥ २ ॥

---

१ तस्मादानन्दविशेषलाभाय शास्त्रविहिता उपाया आदरणीयाः । कामशास्त्रज्ञानं विना न सुरतस्य सुरतत्वम् । अत एवाह शृङ्गारदीपिकाकारः—"दाक्ष्यं रसज्ञताहीनं ज्ञानं गीतामतिं विना । कामशास्त्रं विना भोगो येषां ते पशवो मताः ॥" इति ।

२ 'सहितान्यंगग्रंथैः' ग.। कामाङ्गगीतादिग्रंथैरिति तदर्थः। 'सहितान्यन्यग्रंथैः' इति पाठान्तरम ।

प्राग् यौवनाच्च युवतिः प्रत्ता सा पत्युराशयादेवम्।
स्त्रीभिः शास्त्राग्रहणादेतन्मिथ्येति केऽप्याहुः[1] ॥ ३ ॥
तासां प्रयोगनिरतिं मत्वा शास्त्रेण तस्य बोधं च।
तन्मूलं वात्स्यायन आहाऽऽसां शास्त्रकृत्यानि ॥ ४ ॥
साक्षात् परम्परा वा शास्त्रं मूलं प्रयोगयोगस्य।
असति व्याकरणादौ दुर्ज्ञेयाः साधुशब्दाद्याः ॥ ५ ॥
सत्यपि च शास्त्रसिद्धे बोधे निपुणाशयाः सुता राज्ञाम्।
तस्मादन्यासामपि युक्तः शास्त्रग्रहः स्त्रीणाम् ॥ ६ ॥
चातुःषष्टिकयोगानेकाकिन्यभ्यसेद् रहस्येषा।
आचार्याः पुनरस्या विश्वासाद् वृद्धदास्याद्याः[2] ॥ ७ ॥
गीतानि नृत्यवाद्ये सालेख्यानीह चित्रकर्माणि।
दशनवसनाङ्गरागा माल्यग्रथने विशेषाश्च ॥ ८ ॥
नेपथ्यसंप्रयोगा युक्ति[3]....(युक्तिर्गन्धे ?) तथेन्द्रजालश्च।
पुष्पास्तरको[4] रचना शयने मणिभूमिकाकर्म ॥ ९ ॥
भक्ष्यविकाराऽऽचरणं[5] रत्नादीनां परीक्षणं तद्वत्।
एतास्तदङ्गविद्या ज्ञेयाश्चाऽन्यास्तथा मूलात् ॥ १० ॥

---

१ कामशास्त्रे स्त्रियमुद्दिश्य इदं कार्यमिदं नेत्येवंरूपं शासनमनर्थकमित्यर्थः। २ आद्यशब्दात् 'प्रवृत्तपुरुषसंप्रयोगा सहसंवृद्धा धात्रेयिका, तथाभूता वा निरत्ययसंभाषणा सखी, सवयाश्च मातृष्वसा, पूर्वसंसृष्टा वा भिक्षुकी, स्वसा च विश्वासयोगात्' इति सूत्रोक्ता ज्ञेयाः। ३ 'युक्तितया' क.। ग. पुस्तके तु अत्रैव त्रुटिरस्ति। ३ 'युक्तिर्गन्धे' इति पाठो भवेत्। सूत्रे 'गन्धे युक्तिः' इति दर्शनात्।

४ 'पुष्पास्तरणम्' इति सूत्रे पाठः। 'पुष्पास्तरकः' इति च तत्रैव पाठान्तरम्। रचना शयने शयनरचनम्, शय्यास्तरणकलेत्यर्थः।

५ भक्ष्यविकारक्रिया इत्यर्थः। विविधशाकपूपादिभक्ष्यपदार्थविशेषनिर्माणमिति यावत्।

विस्तरभयान्न कथिताः सर्वा इह वीरभद्रदेवेन ।
चतुरधिकाः षष्टिकला वात्स्यायनसूत्रतो ज्ञेयाः ॥ ११ ॥
अबलाः कलासु कुशलाः कुशलाः कुलटास्तथाविधाः पुरुषाः ।
सार्धं कामपुमर्थं निरवग्रहमेव सेवन्ते ॥ १२ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनाऽनुसृते ।
साधारणेऽधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ १३ ॥



## अथ चतुर्थोऽध्यायः ।

अर्गलनिरर्गलाऽद्वयदोर्द्वयविध्वस्तवैरिदर्पेण ।
आरभ्यते चतुर्थोऽध्यायः कामागमस्याऽसौ ॥ १ ॥
स्वस्वोचितैरुपायैर्विद्यावानाऽऽप्य संपदं पुरुषः ।
वंशक्रमागतां वा द्वेधा वा स्याद् गृहस्थोऽसौ ॥ २ ॥
विप्रः प्रतिग्रहार्थो[1] राजा जयजातसंपदां पात्रम् ।
क्रयविक्रयेण वैश्यः शूद्रो निर्वेशतो[2] धनिकः ॥ ३ ॥
अधिगम्यं (म्य च) गार्हस्थ्यं वृत्तं वर्तेत नागरानुगतम् ।
नगरादावुपरचयेदेव[3] ( ष ) गृहं शोभनं स्वस्य ॥ ४ ॥
सति संभवे विरचयेत् सुधया सुधयेव शुद्धया श्वेतम् ।
मन्दिरमस्याऽनन्तरमुद्यानं कारयेद् रुचिरम् ॥ ५ ॥
विलसन्मरन्दतुन्दिलमधुपरवोन्निद्रमन्मथोल्लासम् ।
लीलाऽऽकुलकोकिल[4]कुलकलनिस्वनवर्धितानन्दम् ॥ ६ ॥

---

१ प्रतिग्रहेण अर्थो (धनं) यस्येति बहुव्रीहिः । 'प्रतिग्रहद्धर्यो' क. ग. ।
२ निर्वेशतो भृतेः (वेतनलब्धद्रव्यात्) । "निर्वेशो भृतिभोगयोः" इत्यमरः ।
३ 'रचयेदेष' ग. । आदर्शपुस्तके तु 'रचयेदेव' इत्यस्ति ।
४ 'कोकिलकुल' इति ग. पुस्तकस्थः पाठः । आदर्शपुस्तके तु 'कुल' इति त्रुटितम् ।

कुर्यात् कामपि वापीं कोकद्वन्द्वस्फुरत्स्तनां रम्याम् ।
मन्दानिलचलवीचीचञ्चलकमलोल्लसन्नयनाम् ॥ ७ ॥

परिपूरितविषमाशुगतूणीराः पुष्पसम्पदा परया ।
रचयेदस्यास्तटभुवि मण्डपविधये लता वितताः ॥ ८ ॥

वापीमध्ये मण्डपमुचितं ग्रीष्मोपयोगि लीलायाम् ।
रचयेत् परितो हिमितं शीकरपाटच्चरैः पवनैः ॥९॥

वासभवनदक्षिणभुवि मुक्ताफलजालवल्गुकल्लोला ।
उत्फुल्लफुल्लनिकरा पुष्करिणी काङ्क्षिता कापि ॥१०॥

ज्वलदुज्ज्वलप्रदीपैः कालागुरुधूपधूसरालोकैः ।
वासगृहं रचयेदिह रुचिरं कर्पूरपुष्पाद्यैः ॥११॥

वासगृहस्य च मध्ये विततवितानोपशोभिते देशे ।
शय्या रुचिरास्तरणा करणीया तोषदा मनसः ॥१२॥

अन्यैरप्युपकरणैः शीतलजलपर्ण[1]पूगसंभारैः ।
संभावयेद् गृहं तन्मन्मथमनसः प्रमोदाय ॥१३॥

उद्दीपनं स्मृतिभुवो यद् यद्वाऽन्यत् स्वरञ्जने शक्तम् ।
तत्तत्सर्वं रचयेत् किं बहुना भाषितेनेह ॥१४॥

शयनीयस्य च भागे रचयेत् सिंहासन[2]स्थलं शिरसः ।

---

१ पर्णानि ताम्बूलीपत्राणि ।

२ शयनीयस्य पश्चात्पार्श्वभागानां निकृष्टत्वात् शिरोभाग एव देवतानुस्मरणार्थं सिंहासनम् (कूर्चासनम्) उचितम् । उक्तमपि:—

"शयनीयशिरोभागे न्यस्तकूर्चे शुभे शुचिः ।
कृतेष्टदेवतायोगो यायाच्छयनमात्मवान् ॥" इति ।

तस्मिन्नेव च भागे रचनीया वेदिका श्लक्ष्णा ॥१५॥
इत्थं कामानुगुणं वामाहृदयस्य चानुकूल्येन ।
रचयेन्निवासभवनं सन्निधिविलसद्घनोपवनम् ॥१६॥
कुर्यात् सदन्तकाष्ठाः[2] प्रातरिहोत्थाय तत्क्रिया नियताः ।
अनुलेपनं सधूपं कियदादद्यात्तथा मालाम् ॥१७॥
सालक्तकादि[3]रुदयन्मुखवासो वीक्ष्य दर्पणे वदनम् ।
कुर्यात् कार्यमतन्द्रो नित्यस्नानादिका नियताः ॥१८॥
प्रातःक्रियाः क्रियाङ्गैरुदिता दश चाऽत्र भेदतो विदिताः ।
पक्षेऽहीने हीने न्यूनास्ताः सन्तु कामेन ॥१९॥
न स्यात् संवृतकक्षः स्वेदः सततं भवेत्तथा भूयान् ।
पूर्वापराह्णयो[4]रिह भोजनमुक्तं बह्वल्पैव (न बहु नाल्पम्[5] ?) ॥२०॥

---

१ "कुड्योपाश्रया शयनीयतुल्योत्सेधा हस्तमात्रविस्तारा कृतकुट्टिमा चतुरिका स्यात्" (ज. मं.)।

२ दन्तककाष्ठम्=दन्तधावनकाष्ठम् । तत्प्रमाणं यथा "भक्षयेद्दन्तधवनं द्वादशाङ्गुलमायतम् । कनिष्ठिकाग्रवत् स्थूलमृज्वग्रंथि तथाऽव्रणम् ॥" (भावप्रकाशे)

३ आदिना सिक्थकं ग्राह्यम् । "सिक्थकमलक्तकं च दत्वा" इति सूत्रम् । "अलक्तकं विशिष्टरागार्थम् । दत्वेत्यर्थादोष्ठयोः । ईषदार्द्राऽलक्तकपिण्ड्या घृष्ट्वौष्ठं ताम्बूलमुपयुज्य सिक्थकगुटिकया ताडयेदित्यर्थक्रमः ।" (ज. म.)।

४ "दिनं रात्रिमष्टधा विभज्य पूर्वाह्णे त्रिभिर्भागैः कार्याण्यनुतिष्ठेत् । चतुर्थे स्नानादिकं कृत्वा भुञ्जीत । अपराह्णे च पश्चिमे भागे बलाधानार्थं पुनर्भुञ्जीतेत्याचार्याणां मतम् ।" (ज. म.)

५ न बहु नाल्पं किन्तु मात्रया भुञ्जीत । येन तृप्तिः, सम्यग जीर्णतया रससारेण शरीरधातुपुष्टिश्च स्यात्, रोगभयं च न स्यात् । एतेन युक्ताहारविधानमुक्तम् । तत्फलञ्चोक्तं गीतायाम्—"युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥" इति ।

चारायणस्तु कथयति सायंसमयेऽपि भोजनं प्रथितम्।
कृतमध्यन्दिनकृत्यो भुञ्जीत प्रेयसीप्रहितम् ॥२१॥

शुकसारिकाप्रलापनमथ युद्धं मेषकुक्कुटप्रभृतेः।
अन्याश्चापि विरचयेत् क्रीडाः कलया यथायोगम् ॥२२॥

विटपीठमर्दनियतान् व्यापारांस्तान् विदूषकस्याऽथ।
दिवसे शय्या च तथा स्यादपराह्णे विहारोऽथ ॥२३॥

स्यादयमुचितो गोष्ठ्यै विरचितसम्यक्प्रसाधनस्याऽस्य।
तदनन्तरकर्तव्यं वात्स्यायनभाषितं कलये ॥२४॥

संगीतकं प्रदोषे प्राप्ते तस्य प्रसाधिते भवने।
अभिसारिकाप्रतीक्षणमाप्तसहायः सुखं रचयेत् ॥२५॥

प्रेषणमिह दूतीनामथ [वा] स्वयं नायको गच्छेत्।
तस्याः सविधेऽनुगता नानोपायैर्वशीकार्या ॥२६॥

---

१ पूर्वाह्णे प्रदोषे च भुञ्जीतेति चारायणस्य मतम्। नहि अपराह्णे द्वितीयभोजनं तथा बलमाधत्ते यथा रात्रौ। अत्रोक्तमपि(भावप्रकाशे)—"अजीर्णे भुज्यते यच्च यच्च जीर्णे न भुज्यते। रात्रौ न भुज्यते यच्च तेन जीर्यन्ति जन्तवः॥" इति। भवति चाऽत्र स्मृतिवचनमपि—"सायं प्रातर्द्विजातीनामशनं श्रुतिनोदितम्।" इति।

२ प्रेयस्या प्रेम्णा यथाविधि पक्त्वा प्रहितं प्रदत्तं परिवेषितमित्यर्थः।

३ 'दिवा स्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः।' इति निषिद्धोऽपि दिवा स्वापः ग्रीष्मे न निषिद्धः। 'ग्रीष्मवर्ज्येषु कालेषु दिवास्वापो निषिध्यते इति वचनात्। क्षीणशरीररुग्णाध्वक्लान्तादीनामपि दिवा स्वापो विहित आयुर्वेदे। तस्य शरीरपुष्ट्यर्थत्वात्।

४ 'वा' इति छन्दोभङ्गावहत्वान्नात्राञ्चितम्।

अधिदुर्दिनमभिसरणे निरतानां नष्टभूषणानां तु।
स्वयमारचयेन्मण्डनमथवा मित्रेण कारयेदुचितम् ॥२७॥

इति वीरभद्रकृतिना ख्याताऽहोरात्रकृत्यता तेन।
साम्प्रतमभिधीयन्ते सम्भूयक्रीडितानीह ॥२८॥

व्यसनोत्सवगुरुपूजा यात्राकरणं च दैवतप्रभृतेः।
सम्मत्या क्रियते यदि घटानिबन्धस्तथा (दा) कथितः ॥२९॥

वेश्याभवने सदसि च भवने चैतेषु कस्यचिद्रुचिरे।
तुल्यप्रबोधवयसां समविद्याशीलवित्तानाम् ॥३०॥

अनु[1]कूलैरालापैः पण्यस्त्रीभिः सहाऽऽसनं गोष्ठी।
[2]काव्यसमस्या चैषां कलासमस्या च तत्रोक्ता ॥३१॥

लो[3]कानामिह कान्ताः संपूज्यास्तास्तथोज्ज्वला याश्च।
[4]प्रीतिस्तोमा एवं भवन्ति किल हारिताः सम्यक् ॥३२॥

अन्योन्यस्य गृहे वा पानं कथितं सुराऽऽसवप्रभृतेः।
विविधफलाद्यु[5]पदंशं वेश्याया अन्ततः स्वस्य ॥३३॥

---

१ 'अनुरूपैः' क. ग.।

२ समसनं संभूय निरूपणं समस्या चर्चेत्यर्थः। 'अस गतिदीप्त्यादानेषु' इति धातुः। धातूनामनेकार्थत्वादत्र निरूपणमर्थः। काव्यचर्चा कलाचर्चा चेत्यर्थः।

३ लोकानां कान्ताः (मनोहराः) उज्ज्वलाः (अग्राम्याः) ताः कलाः पूज्याः (आदरणीयाः)। 'चर्चावसाने प्रीतिवर्धनार्थं वस्त्रादिदानेन परस्परस्य कलापूजाः स्युः' (ज. मं)। यद्वा तत्रोपस्थिताः परिचारकैरानायिता लोकानां कान्ताः विलासिन्यः वस्त्राभरणादिदानेन पूज्या इत्यर्थः।

४ एवं कृते नितरां प्रीतिर्वर्धते इत्यर्थः।

५ मद्यपानरोचकभक्ष्यम्। 'अवदंशः; चक्षणम्, मद्यपानसम्' इत्युपदंशपर्यायेषु हेमचंद्रः। 'द्वित्रानुपदंशानुपपाद्य' 'ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं च उपजहार' इति दशकुमारचरिते। 'उपदंशान् शाकादीन्' इति तट्टीका पदचन्द्रिका। वेश्याया अन्ततः स्वस्य = पूर्वं वेश्याः पाययेयुः अनन्तरं स्वयं पिबेयुः।

एतेनैव निरूपितमुद्याने यानमत्र विस्तारः।
वात्स्यायनानुरुद्धः क्रियते श्रीवीरभद्रदेवेन ॥३४॥
पूर्वाह्णे कृतभूषास्तुरगानारुह्य वेश्यया सहिताः।
प्रति (परि) चारकैरनुगता गच्छेयुः शोभनोद्यानम् ॥३५॥
दैवति(सि)कीरथ यात्रा यत्नादनुभूय तत्र युद्धानि।
कुक्कुटमेषप्रभृतेः पश्यन्तोऽन्यास्तथा प्रेक्षाः ॥३६॥
कुर्वन्तः शुभचेष्टाःसमयानाक्षिप्य चेयता कियतः।
उद्यानभोगचिह्नैः सहिताः प्रत्याव्रजेयुस्ते ॥३७॥
एतेनैव निरूपितमस्तग्राहे च पुष्करिण्यादौ।
गमनं जललीलायै ग्रीष्मगते तेजसां धाम्नि ॥३८॥
कृतसमयैरिह पुरुषैः पक्षान्ते चाथ मासनिर्याणे।
कस्मिंश्चिन्नियतेऽहनि सृजति सभां भारतीभवने ॥३९॥
दद्युः प्रेक्षणमेकं येऽपूर्वास्ते कुशीलवाः सम्यक्।
पूजां ते च लभेरन्नियतां तस्माद् द्वितीयेऽह्नि ॥४०॥
दर्शनमथवोत्सर्गो निजेच्छया स्यात्ततः परं तेषाम्।
आगन्तवश्च पूज्याः कृतसमवायाः स्फुरद्विनयम् ॥४१॥

---

१ 'वेश्यया' इति जातावेकवचनम्। 'पूर्वाह्ण एव स्वलंकृतास्तुरगाधिरूढा वेश्याभिः सह परिचारकानुगता गच्छेयुः' इति सूत्रम्।

२ सूत्रे 'दैवसिकीं च यात्रां तत्रैवानुभूय' इति दर्शनात् 'दैवसिकी' इत्येव पाठः शोभनः प्रतिभाति।

३ इयं ग्रीष्मे जललीला रघुवंशे (१६।५४-७१) वर्णिता।

४ मासान्त इत्यर्थः।

५ 'स्फुरद्विषयम्' आ. पु.।

कुर्याच्च यक्षरात्रिं[1] सुखरात्रिः सा च कथ्यते लोके।
ऐक्यं कोजागरया[2] कौमुद्यास्तत्र निर्दिष्टम् ॥४२॥
सुवसन्तकोऽत्र[3] शास्त्रे भवति वसन्तस्य वासरः प्रथमः।
विसखादिका सरस्यां विसभुक्तिः कीर्तिता लोकैः ॥४३॥

---

१ यक्षरात्रिः कार्तिकपूर्णिमारात्रिः।'तत्र प्रायशो लोकस्य द्यूतक्रीडा' (ज.म.)।

२ कोजागरः आश्विनपूर्णिमा तत्र क्रियमाणो द्यूतोत्सवोऽपि उपचारात् कोजागरः। कोजागरो द्यूतोत्सवो विद्यते यस्यां तिथ्यां सा कोजागरा आश्विनपूर्णिमा इत्यर्थः (अर्श आद्यचि टाप्)। यद्वा कोजागरशब्दः स्त्रीलिङ्गोऽपि भवेत्। "शारदी द्यूतपूर्णिमा। कोजागरः" इति त्रिकाण्डशेषः। तया कौमुद्याः चन्द्रिकायाः ऐक्यम् शरत्कालप्रवृत्ते-र्मेघावरणराहित्यात् आश्विनपूर्णिमायां चन्द्रिकायाः पूर्णः प्रसारो भवतीति भावः। तत्र लोकस्य दोलाप्रभृतयः क्रीडाः, विशेषतश्च द्यूतक्रीडा। अतएव कोजागरस्य द्यूतपूर्णिमेति पर्यायान्तरम्। को जगार्ति अस्यां पौर्णमासीनिशायामिति लक्ष्म्या उक्तिर्यत्रेति कोजागरः पृषोदरादित्वात् साधुः। तदुक्तं लिङ्गपुराणे—'आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि। कौमुदी सा समाख्याता कार्या लोकैर्विभूतये॥ कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतं स्थिरम्। सुगन्धिर्निशि सद्वेशश्चाक्षैर्जागरणं चरेत्॥ निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी। तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः॥" इति॥ कोजागरः सूत्रे 'कौमुदीजागरः' इति। अत्र स्थले ग्रंथकृत् भूयसा जयमङ्गलानुकूलः। यथा जयमङ्गलायाम्—"यक्षरात्रिरिति। सुखरात्रिः।...... कौमुदीजागर इति। आश्वयुज्यां हि पौर्णमास्यां कौमुद्या ज्योत्स्नायाः प्रकर्षेण प्रवृत्तेः"। इति॥

३ सुवसन्तकः=वसन्तोत्सवः। अयं माघशुक्लपञ्चमीदिने भवति। सु=शोभनो वसन्तो यत्रेति विग्रहः। संज्ञायां कन्। "सुवसन्तक आख्यातो वासन्त्यां मदनोत्सवे" इति मेदिनी। अत्र नृत्यगीतवाद्यप्रायाः क्रीडाः।

मदनार्थिताऽऽम्रकुसुमैरवतंसे चाम्रभञ्जिका[1] प्रोक्ता ।
अभ्यूषखादिकैवं[2] ज्ञातव्या ग्रंथतः परतः ॥४४॥
अन्योन्यं जलसेकः पानीयक्ष्वेडिके[3]रिता विबुधैः ।
कृत्रिमविवाहलीला कथिता नवपत्रिका[4] तज्ज्ञैः ॥४५॥
कृत्रिमपुत्रकलीला स्यादनुयानं तथा तु पाञ्चाल्याः ।
शाल्मल्यामधिरुह्य क्रीडिका शाल्मली कथिता ॥४६॥
युद्धं कदम्बमुकुलैः प्रविभज्य बलं परस्परं यत्र ।
स्यात्तत्कदम्बयुद्धं कुर्यादन्यास्तथा लीलाः ॥४७॥
एकत्रचारिणामिह विभवबलाद् वारयोषितश्चैव ।
नागरकैश्च सखीभिश्चरितमनेनेह निर्दिष्टम् ॥४८॥

---

१ 'सहकारभञ्जिका' इति सूत्रे । "सहकारफलानां भञ्जनं यत्र क्रीडायाम्" (ज० म०) ।

२ अभि+ऊष+(बाहुलकात् कर्मणि) कः=अभ्यूषः पाकावस्थागतकलायचणकादिः । 'अभ्यूषोऽभ्योष इत्येते ईषत्पक्वयवादिषु' इति शब्दरत्नावली । तस्य खादनं यस्यां क्रीडायां साऽभ्यूषखादिका । "अभ्यूषखादिका फलानां विटपस्थानामग्नौ प्लोषितानां खादनं यत्र" इति जयमङ्गला ।

३ "वंशनाडी स्मृता क्ष्वेडा सिंहनादश्च कथ्यते" इति कोषात् पानीयपूर्णा क्ष्वेडा वंशनाडी भाषायां पिचकारीतिसंज्ञिता ( तया ऽन्योन्यं जलसेकः ) यस्यां क्रीडायां सा पानीयक्ष्वेडिका ।

४. जयमङ्गलायां तु "नवपत्रिका प्रथमवर्षणेन प्ररूढनवपत्रासु वनस्थलीषु या क्रीडा सा प्रायेणाटवीसमीपवासिनामाटविकानां च" इति ।

विभवविहीनो विद्यां जानन्निजदेहमात्रसाहाय्यः।
पूज्याद्देशात् प्राप्तः फेनकमुखसंयुतश्चैव ॥४९॥

निपुणः कलासु कथितस्तस्यात्मानं प्रसाधयेद्यस्तु।
गोष्ठ्यां वेशे च तथा जानीयात्पीठमर्दं तम् ॥५०॥

भोगसमापितविभवस्तत्रत्यः सगुणवल्लभासहितः।
बहुसंमतश्च वेशे गोष्ठ्यां वशगो विटः प्रोक्तः ॥५१॥

यस्त्वेकदेशविद्यः क्रीडनको भूरिजातविश्वासः।
स स्याद्विदूषकः किल वैहासिकसंज्ञकश्चैव ॥५२॥

एते वेश्यानामिह नगरसदां चैव मन्त्रिणः कथिताः।
सन्धौ विग्रहकृत्ये विनियुक्ता आदरेणैव ॥५३॥

---

१ 'पूज्योद्देशात्, आ० पु०।

२ मुखशब्देन "मल्लिकाफेनककषायमात्रपरिच्छेदः" इति सूत्रे उक्तौ मल्लिकाकषायौ ग्राह्यौ। "मल्लिका दण्डासनिका शरीरधारणात् पूर्वनागरकाचार्यैः संकेतिता 'मल मल्ल धारणे' इति धातुपाठात्। सा तस्य पृष्ठत एवासनार्थं भ्राम्यते। (अतएव दण्डासानिकारूपेण पीठेन पृष्ठस्य मर्दनात् पीठमर्द इत्यस्यान्वर्था संज्ञा।) "प्रवृत्तविषयेच्छत्वात् जङ्घाघर्षणार्थं फेनककषायाविति।"(ज.मं.) फेनको गोधूमचूर्णकृतापिष्टकविशेषो गात्रमार्जनार्थकः। तस्य गुणा यथा—"ऊर्वोः संजनयत्याशु फेनकः स्थैर्यलाघवे। कण्डूकोष्ठानिलस्तम्भमलरोगापहश्च सः॥" इति (शुश्रुते चिकित्सितस्थाने २४ अध्याये)। कषायो विलेपनविशेषः। "कषायो रसभेदेऽपि निर्यासे च विलेपने। अङ्गरागे च" इति मेदिनी। "विच्छित्तिस्तु कषायः स्यात् समालम्भनमित्यपि।" इति त्रिकाण्डशेषः।

३ ('विट शब्दे' इति धातुपाठात्) वेश्यानागरकयोः संदेशं परस्परं विटति कथयतीति विटः।

एतेन वृद्धगणिकाः कलाविदग्धास्तथैव भिक्षुक्यः ।
मुण्डाश्चैव वृषल्यो व्याख्याताः काममार्गेण ॥५४॥

ग्रामीणो बहुमानी प्रोत्साह्यान्यान् कुतूहलाविष्टान् ।
सुविचक्षणान् सुजातानेतद्वृत्तं समाचारन्नेतुः ॥५५॥

श्रद्धां जनयन् भूयः कुर्वीतैवानुकारमेतस्य ।
अनुवर्तयंश्च गोष्ठीरनुरञ्जनमाचरेत्सङ्गे ॥५६॥

अनुगृह्णीयादन्यान् साहाय्येनोपकारवान् निपुणः ।
इत्थं नागरवृत्तं कथितं श्रीवीरभद्रदेवेन ॥५७॥

भाषासंस्कृतयोरिह रचयत्येकेन यो जनो गोष्ठीम् ।
स च न भवेद्बहुमानस्तस्मादुभयं प्रवर्तयतु ॥५८॥

एवं लोकविरुद्धां गोष्ठीं स्वैरं विसर्पिणीं चैव ।
परहिंसनस्वरूपां कुर्वन्निन्द्यो भवेल्लोके ॥५९॥

लौकिकहृदयसरसया क्रीडामात्रैककार्यया तद्वत् ।
सह गच्छन्निह गोष्ठ्या विद्वान् सिद्धिं समभ्येति ॥६०॥

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
साधारणेऽधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ ॥६१॥



---

१ सुजातान् सत्कुलजानित्यर्थः । सूत्रे तु 'सजातान्' इति पाठः । समानजातीयान् इति तदर्थः ।

२ नेतुर्नायकस्य ।

३ परदूषणपराम् ।

# अथ पञ्चमोऽध्यायः ।

अथ तन्यते प्रपञ्चो भूमीतलचक्रवर्तिनाऽनेन ।
श्रीवीरभद्रयूना कामागमपञ्चमेऽध्याये ॥१॥
काम[1]: प्रयुज्यमानो भवति सवर्णासु[2] शास्त्रतश्चैव ।
हेतुः सन्ततियशसोर्लौकिकतामेति वर्णेषु ॥२॥
प्रतिषिद्धोऽस्मादन्यः परपूर्वा[3]श्रेष्ठवर्णयोर्ज्ञेयः ।

---

१ कामः अत्रैव (१।२।१४–१६) वर्णितः। अन्यत्रापि कामलक्षणमुक्तम्–"स्त्रीषु जातो मनुष्याणां स्त्रीणां च पुरुषेषु वा। परस्परकृतः स्नेहः काम इत्यभिधीयते ॥" इति। (स्नेहः संप्रयोगेच्छालक्षणः) "अनङ्गः कामः, स च पुंसः स्त्रीपुंनपुंसकेषु सेवनेच्छा हस्तकर्मादीच्छा वा, योषितोऽपि योषिन्नपुंसकपुरुषसेवनेच्छा हस्तकर्मादीच्छा वा, नपुंसकस्यापि नपुंसकपुरुषस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा।" इति जैनागमीयश्रीधर्मसंग्रहस्य ४६ श्लोकस्य टिप्पण्याम्।

२ समानवर्णासु यथा–ब्राह्मणस्य ब्राह्मण्याम्, क्षत्रियस्य क्षत्रियायाम्, वैश्यस्य वैश्यायाम्, शूद्रस्य च शूद्रायाम्। "सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि।" इति मनुवचनात् (म.स्मृ.३।१२) शास्त्रत इति शास्त्रेण शास्त्रोक्तेन वरणादिविधानेन।

३ परपूर्वा अन्यपूर्वा (पूर्वमन्येनोढा) तस्यां सवर्णायामपि कामः प्रतिषिद्धः सन्ततियशसोरहेतुत्वात्। "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥" इति याज्ञवल्क्यः (या० व० स्मृ० आचाराध्याये ५२ श्लो०) श्रेष्ठवर्णा उत्तमवर्णा तस्याम्। यथा–क्षत्रियेण ब्राह्मण्याम्, वैश्येन ब्राह्मणीक्षत्रिययोः, शूद्रेण ब्राह्मणीक्षत्रियावैश्यासु अनन्यपूर्वास्वपि कामः प्रतिषिद्धः, तत्रापि सन्ततेर्यशसो लौकिकत्वस्य चाभावात्। उक्तञ्च "प्रतिलोमविवाहेषु न कुर्यादुन्नतिस्पृहाम्। ययातिः शुक्रकन्यायां सस्पृहो म्लेच्छतां गतः ॥" इति (चारुचर्यायाम्)। (क्षत्रियादेः स्वतः उत्तमवर्णया ब्राह्मण्यादिकया विवाहः प्रतिलोमविवाहः, ब्राह्मणादेः स्वतो हीनवर्णया क्षत्रियादिकया विवाहश्च अनुलोमविवाह इति कथ्यते)।

## वेश्यास्वप्रतिषिद्धोऽशिष्टोऽवरवर्णजायाश्च (याश्च) ॥३॥

१ वेश्यासु साधारणस्त्रीषु, अवरवर्णजायां हीनवर्णायाम् (यथा—ब्राह्मणस्य क्षत्रियावैश्याशूद्रासु, क्षत्रियस्य वैश्याशूद्रयोः, वैश्यस्य शूद्रायाम्। एषोऽनुलोम-विवाह इत्युच्यते) कामो न प्रतिषिद्धः (यतस्तत्र सुखार्थैव प्रवृत्तिर्न पुत्रार्था। यथाह मनुः—"कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः।

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।

ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः॥" इति (म.स्मृ.३।१२-१३)

नापि शिष्टः (विहितः) सवर्णामपरिगृह्य तत्परिग्रहस्यानभिमतत्वात्। किञ्च अव-रवर्णासूत्पन्नानां पुत्राणां नौरसत्वम्। 'औरसो धर्मपत्नीजः' इति याज्ञवल्क्यस्मर-णात् (सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जातः औरस इत्यर्थः)। अत एव च ते पुत्रकार्यं पिण्डदानादिकं नार्हन्ति। एवं च न तेषां वस्तुतः पुत्रत्वं पितुः पार-लौकिककर्मकरणानर्हत्वेन तं नरकात् त्रातुमशक्तत्वात् तत्र पुत्रशब्दार्थाऽसंगतेः। यदाह मनुः—"पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥" इति (९।१३८)। "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः॥" इति याज्ञवल्क्य-स्मरणात् असवर्णासु उत्पन्नैः पुत्रैः कुलं न वर्धते (शुद्धरक्तस्रोतो विनश्यति) अस-वर्णोत्पन्नानां मूर्धावसिक्ताम्बष्ठसूतवैदेहिकादिसंज्ञानां कुलबाह्यत्वात्। अतश्च वंश-वृद्धिकामैः सदाचारपथप्रवर्तिभिः पुरुषैः असवर्णाविवाहो न विधेयः। ये तु 'स्त्री-रत्नं दुष्कुलादपि' इत्युक्तेः कामोपहतचेतसः शूद्रामप्युद्वहेयुः, तैः ऋतुकाले तद-भिगमनं न कार्यमिति शास्त्राशयः। ऋतुकालाभिगमने सुतोत्पत्तेः पतितत्वात्। यदाह शङ्खः "आपद्यपि न कर्तव्या शूद्रा भार्या द्विजन्मना। तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते॥" (शं.स्मृ.४।९) इति। (एष ऋतुकालगमननिषेधानुवादः। तत्र हेतुः 'तस्यां तस्य प्रसूतस्य' इति। "तज्जाया जाया भवति यदस्यां जायते पुनः।" इति श्रुतेः) एतद्विषयको विस्तरस्तु धर्मशास्त्रप्रबन्धेषु मिताक्षराऽपरार्कादिषु द्रष्टव्यः।

एवं निरवसितायां[1] पुनर्भुवि[2] स्यात्ततः कामः ।
अवरापाणिग्रहणं मनुना[3]ऽप्यादिष्टमेवास्ति ॥४॥
तिस्रोऽत्र नायिकाः किल कन्यावेश्यापुनर्भुवः कथिताः ।
वात्स्यायनस्य केचित् परदारान् कारणा[4]दाहुः ॥५॥
[5]अस्यां स्वैरविहारस्तत्र च हेतुर्निसर्गतः कथितः ।

---

१ बहिष्कृतायामित्यर्थः । सूत्रे 'अनिरवसितासु' इति पाठः । 'निरवसितासु' इति च तत्रैव पाठान्तरम् ।

२ "कौमारं भर्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति । या च क्लीबं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति।" इति वसिष्ठस्मृतिः (१७अ.)। इयं द्विविधा अक्षता क्षता च। "अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।" इति याज्ञवल्क्यः । "तत्र क्षता संस्कारात् प्रागेव पुरुषसंबन्धदूषिता। अक्षता पुनः संस्कारदूषिता ।" इति मिताक्षरा। 'पुनर्भुवि' इत्युवङ्विधानम् "दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः" इति वार्तिकाऽस्मरणमूलकं बोध्यम् ।

३ तच्च मनुवचनम् 'कामतस्तु प्रवृत्तानाम्' इत्यादि उपरि उदाहृतम् ।

४ पुत्रार्थं सवर्णाः सुखार्थमसवर्णाः वेश्याश्च । पुत्रात् सुखाच्च यदन्यत्कारणं (वक्ष्यमाणं) तस्मात् परदारा अप्यभिगम्याः, न तु कामतः—इति गोणिकापुत्रः (पारदारिकप्रवक्ता) । इयं परस्त्री 'अन्या' 'अन्योढा' 'परोढा' इत्यप्युच्यते ।

५ स्त्रीणां स्वैरविहारे निसर्गतः निसर्गः (सार्वविभक्तिकस्तसिः प्रथमार्थे) स्वभावः एव हेतुः, तासां स्वभावतोऽष्टगुणकामत्वादिति यदीयं स्वैरविहारिणीति नायकेन विदिता भवेत्तदा ऽभिगम्या । अन्यथा दोषः । धर्मशास्त्रे पारदार्यस्य (परस्त्रीगमनस्य) उपपातकेषु परिगणनं कृतम् । यथा "पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया ।" (२३५ श्लो०) इति प्रायश्चित्ताध्याये उपपातकपरिगणने याज्ञवल्क्यवचनम् । अस्य प्रायश्चित्तमपि तत्रैव 'उपपातकशुद्धिः स्यात्—' इत्यादि (२६५) श्लोकस्य मिताक्षराटीकायां विस्तराद् वर्णितम् । यत्तु तत्रैव "ब्राह्मणीं बन्धकीं गत्वा किञ्चिद्दद्याद् द्विजातये । राजन्यां चेद्धनुर्दद्याद् वैश्यां गत्वा तु चौलकम् ।" इत्यादि षट्त्रिंशन्मतवचनेन बन्धकीनां गमनेऽपि प्रायश्चित्तमुक्तम्, तत्तु कामतो गमने बोध्यम् । अस्वैरिणीनामेतासां गमने तु कामतोऽकामतो वा उभयथापि पुरुषः प्रायश्चित्तीयते इति बोध्यम् ।

**वेश्यानामिव तासां गमने तादृक्कुतो दोषः ॥६॥**
**नूनं पुनर्भुवामिव गमनं व्याख्यातमेवमेतेन ।**
**उत्तमवर्णाऽप्येवं नादध्यात् संगतौ दोषम् ॥७॥**

---

१ यथा वेश्यानां गमने तादृग् दोषो न भवति (तासाम् 'पञ्चचूडा नाम काश्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिः' इति स्कन्दपुराणस्मरणादतिरिक्तजातित्वेन वर्णस्त्रीत्वाऽभावात् (वर्णस्त्रीणामेवानुलोम्यप्रातिलोम्यगमने दण्डविधानात्), नियतपुरुषपरिणयनविधिविधुरतया साधारणस्त्रीत्वेन तासां समानोत्कृष्टजातिपुरुषाभिगमने दण्डादृष्टदोषयोरभावात्, अनवरुद्धासु तासु गच्छतां पुरुषाणामपि दण्डाभावाच्च), तथा स्वैरिणीनां परनारीणामपि वक्ष्यमाणकारणैरभिगमने न तादृग्दोषः, यादृगस्वैरिणीनां तासामभिगमने। अदृष्टदोषस्तु कश्चिद् वेश्यागमनेऽपि भवत्येव "पशुवेश्याभिगमने प्राजापत्यं विधीयते" इति अत्रिस्मरणात् (अ० स्मृ० २६८ श्लो०)।

२ एवं पुनर्भ्वो यथा पूर्वमन्येनोढाः पश्चात् अन्येन संगृहीता न भवन्ति संग्रहीतुर्दोषोत्पादिकाः तथैव अन्यैर्बहुशः खण्डितचारित्राः स्वैरिण्योऽपि। यद्यप्येतदेवम्, तथापि सुखं निमित्तीकृत्य तासु न प्रवर्तितव्यं निषिद्धत्वात्, किन्तु वक्ष्यमाणमेव कारणं निमित्तीकृत्य ता अभिगम्याः।

१२ एवं खण्डितचरित्राया उत्तमवर्णाया अपि वक्ष्यमाणकारणवशादभिगमने न दोषः। अन्यथा गमने तु महादोषः। "शूद्रश्चेद् ब्राह्मणीमभिगच्छेद् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्......वैश्यश्चेद् ब्राह्मणीमभिगच्छेत् लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत्...राजन्यश्चेद् ब्राह्मणीमभिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत्..."इति(२१अ.) वसिष्ठस्मृतौ वधस्य प्रायश्चित्तत्वेन स्मरणात्, 'प्रातिलोम्ये वधः पुंसः' इति (या. व. स्मृ. व्यवहाराध्याये २८६ श्लो.) वधस्यैव दण्डत्वेन स्मरणाच्चेति ज्ञेयम्। एतेन सुखनिमित्तिकां परदाराभिगमने प्रवृत्तिं प्रतिषिध्य केवलं वक्ष्यमाणकारणवशादेव तां विधेयतया वदता शास्त्रकृता विषयस्य विशुद्धधर्ममुपदेशः कृतः। विशुद्धे हि विषये न दोषः स्पृशति। अत एवोक्तम्–"विशुद्धि विषयस्यादौ

**यद्वा स्वपतिमामित्रं कुर्यान्मित्रं ममाऽऽदृता प्रीता ।**
**त्यक्ता मे प्रतिकूलं कुर्यादनुकूलमादरादेषा ॥८॥**
**एतद् द्वारा यदि वा हत्वैतस्याः पतिं धनोदग्रम् ।**
**आदास्ये धनमेतत् कारणमेवं मनोवृत्तिः ॥९॥**

---

कारणानि च तत्त्वतः । प्रसमीक्ष्य प्रवर्तेत परस्त्रीषु न भावतः ॥" इति । (भावतः रागादित्यर्थः) । एवं च वक्ष्यमाणकारणवशादेव परस्त्रीगमनं वदन् रागतस्तत्र प्रवृत्तिं प्रतिषेधंश्च शास्त्रकारो भङ्गया सत्पथभ्रंशकं परस्त्रीगमनमेव निषेधति । यदाह सूत्रे "पाक्षिकत्वात् प्रयोगाणामपायानाञ्च दर्शनात् । धर्मार्थयोश्च वैलोम्यान्नाऽऽचरेत् पारदारिकम् ॥" इति । (पारदारिकं परस्त्रीगमनमित्यर्थः) । वक्ष्यति च ग्रंथकारोऽपि (५।६।४६) । तस्मात् "स्यात्स्वदारनिरतः सदा" (मनु० ३।४५) इत्येव शास्त्र-हृदयमिति । अतश्च सत्पथानुसरणेनात्मनो हितमिच्छद्भिः स्वदारेष्वेव निरतैर्भा-व्यम्, परस्त्रीवेश्याद्यभिरतिस्तु स्वप्नेऽपि न कार्या तस्या अधर्म्यत्वादयशस्यत्वाच्चेति दिक् ।

---

१ परदाराभिगमे कारणान्याह—यद्वेत्यादिना । मम अमित्रं (शत्रुं) स्वपतिं मया संसृष्टा प्रसन्ना सती मम मित्रं करिष्यति । मया त्यक्ता सती मम अनुकूलं (मित्रं) स्वपतिं मम प्रतिकूलं (शत्रुं) करिष्यति ।

२ अत्र "संसृष्टो वाऽनया हत्वाऽस्याः पतिमस्मद्भाव्यं तदैश्वर्यमेवमधि गमिष्यामि ।" इति सूत्रम् । अस्याः पत्या अस्मत्कुलं हत्वापि मत्तोऽपि वा हठा-दाच्छिद्याऽस्मदैश्वर्यं प्रसह्य भुज्यत इति संप्रयोगादाहितस्नेहाया अस्या द्वारा तं हत्वा सर्वमैश्वर्यं प्राप्स्यामि । न च तद्वधे दोषः इत्याशङ्क्यम् । "अग्निदो गरदश्चैव शस्त्र-पाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः ॥" इति वचनात् धनापहार-कत्वेन तस्याऽऽततायित्वात्, आततायिवधे च "आततायिनमायान्तं हन्यादेवा-विचारयन् ।" "नाततायिवधे दोषः" इत्यादिस्मरणेन दोषाभावात्—इति बोध्यम् ।

एषैव[1] वा प्रदास्यति धनमिति बुद्ध्या प्रवर्तते तस्याम्।
यदि वा तस्या भीत्या संगममस्यां समाचरति ॥१०॥
दोषं प्रकाशयिष्यति सन्तं[2] मसन्तं मया परित्यक्ता।
संभावितो विनाशो येन ममाऽदूषणस्यापि ॥११॥
आयतिमन्तं[3] यदि वा वश्यं मत्तो विभिद्य भर्तारम्।
मदमित्रमित्रभावं गमयेदेषा मया त्यक्ता ॥ १२ ॥
मदमित्रमेव[4] यदि वा कुर्यात् स्ववशे स्फुरन्महाकामा।
इत्याद्यैर्भयबोधैः परदाराऽऽसेवनं कुरुते ॥ १३ ॥
निजदारा[5]निरतदारानुद्धटरोषाद् भजेज्जनो नियतम्।
एतद्द्वारा राजद्वेष्यं हन्तुं तथा यत्नः ॥ १४ ॥

---

१ अहं निर्धनत्वात् क्षीणजीविकोपायः कुटुम्बभरणाऽसमर्थः। मया संसृष्टा इयं स्नेहात् कुटुम्बभरण (धर्मकरणादि) साधनमतिमहत् धनं मह्यं दास्यति इति बुद्ध्याऽस्यां (परस्त्रियां) प्रवर्तते। कुटुम्बभरणस्याऽत्यावश्यकत्वेन तदर्थमकार्यस्यापि कार्यत्वनाऽभ्यनुज्ञानात्। तथा चोक्तम्—"वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥" इति।

२ 'शत्रुमसन्तम्' ख.

३ मयाऽस्वीकृतप्रणया इयम् आयतिमन्तं प्रभावशालिनम्, वश्यं वशवर्तित्वेन यथोक्तकारिणं भर्तारं मम मित्रीभूतं मत्तोऽनिच्छतोऽपि विश्लेष्य मम शत्रोर्मित्रं विधास्यति, ततश्च गृहीतप्रभावा मां हनिष्यतीत्यर्थः।

४ स्वयं वा मदुपघातार्थं मच्छत्रुणा सह संसृज्येतेत्यर्थः।

५ अस्याः पतिर्मम दाराणामभिगमनेन दूषयितेति तीव्रक्रोधात् अनुरूपेण प्रत्यपकारेण शत्रोरानृण्यं गन्तव्यमित्यस्यापि दारानेवमभिगमनेन दूषयन्नहं प्रतिकरिष्यामीति धिया निजस्त्रीकामुकस्य स्त्रियमभिगच्छतीत्यर्थः।

एतद्द्वारा यदि वा काम्यामन्यामियमुपारम्भः।
यदि वाऽमित्रं मित्रं द्वारैतस्या विधास्यामि॥ १५॥
इत्येवमादिहेतोः परकान्तामेष सेवते कामी।
न तु केवलानुरागाद् वात्स्यायनभाषितेनैतत्॥ १६॥
विधवापि पञ्चमी स्यात् सम्बद्धा या भवेन्महामात्रैः।
अन्या वेति तु कथयति मतमिह चारायणाचार्यः॥ १७॥
तामेव प्रव्रजितां सुवर्णनाभोऽप्यवक् स्वयं षष्ठीम्।
अन्याऽभुक्तां दुहितां गणिकायाः सप्तमीं दासीम्॥१८॥
घोटकमुख उपकलयति कुलयुवतिं चोपका(चा)रभेदेन।
कथयति गोनर्दीयो वात्स्यायनसम्मतं नैतत्॥ १९॥

---

१ काम्यामन्यामधिगन्तुमिति शेषः। "यामन्यां कामयिष्ये साऽस्या वशगा। तामनेन संक्रमेणाधिगमिष्यामि। कन्यामलभ्यां वाऽऽत्माधीनामर्थरूपवतीं मयि संक्रामयिष्यति।" इति सूत्रम्। 'काम्यामन्यामुपासीत' ख.

२ 'मपि' ख.

३ राजभिर्वा। "महामात्रसंवद्धा राजसंवद्धा वा" इति सूत्रम्।

४ अन्या अन्यजनसंवद्धेत्यर्थः।

५ तामेव विधवामेव प्रव्रजितां राजमहामात्रयोरन्यस्य वा संवद्धाम्।

६ उक्तवानित्यर्थः (वचधातोर्लङि रूपम्)। 'ऽप्यवर्णयत' ख.

७ 'पिषेःकिच्च' इति कित इत्प्रत्ययस्य बाहुलकाद् दुहेरपि स्वीकारात् दुहिताशब्दः साधुः। 'दुहिरमथाऽप्यभुक्ताम्' ख.।

८ दासीं परिचारिकामित्यर्थः। "गणिकाया दुहिता परिचारिका च" इति सूत्रम्। इयमप्यन्याऽभुक्ता ग्राह्या। यथा चन्द्रापीडस्य पत्रलेखा।

९ 'उपचारभेदेन' इत्येव पाठ उचितः।"कुलयुवतिरुपचारान्यत्वादष्टमी" इति सूत्रम्। कुलकन्यैव परिणीता कालेनापक्रान्तबालभावा समुपारूढयौवना कुलयुवतिः। सा चोपचारभेदात् कन्यातो भिद्यते। सा हि न कन्यावदुपचर्यते। कन्यायामालिङ्गनादय उपचारा अपरिस्फुटा विकल्पेन च प्रयुज्यन्ते। इतरस्यां तु युवतित्वात् परिस्फुटाःसमुच्चयेन चेति भावः।

१० 'सम्मतं' ख.

कार्यान्तरस्य विरहादेताः कथिताः पुनश्चतुर्ष्वेव[1]।
तस्माद् वात्स्यायनतस्तासां भेदश्चतुर्धैव ॥ २० ॥
भिन्नत्वात्तु तृतीया[2] प्रकृतिः स्यात् पञ्चमी मते क्वापि।

१ कन्यादिषु च चतुर्ष्वेव नायिकाभेदेष्विति शेषः। कन्यादिषु चतसृषु नायिकासु यत्कार्यमुक्तं सन्ततिसुखरूपं विधवादीनां ततोऽन्यस्य कार्यस्याभावात् इमाः कन्यादिषु चतुर्ष्वेव नायिकाभेदेषु अन्तर्भवन्ति। तत्र विधवा प्रव्रजिता च परस्त्रियाम्, गणिकादुहिता परिचारिका च सुखकार्यत्वाद् वेश्यायाम्। उक्तमपि सूत्रे "कुम्भदासी परिचारिका कुलटा गणिका चेति वेश्याविशेषाः।" इति। कुलयुवतिश्च सन्ततिफलत्वात् कन्यायामन्तर्भवति। उपचारभेदस्तु न भेदप्रयोजकः। एकस्यामपि देशकालप्रकृतिसात्म्यभेदेनोपचारभेददर्शनादिति भावः। तस्मात् कन्या, वेश्या, पुनर्भूः, परस्त्री चेति चतस्र एव नायिकाः। तत्र कन्या "कन्या त्वजातोपयमा सलज्जा नवयौवना।" इति (साहित्यदर्पणे ३।६७) लक्षिता। तदुदाहरणं यथा मालतीमाधवादौ मालत्यादिः, नैषधीयचरितादौ दमयन्त्यादिश्च। वेश्या "धीरा कलाप्रगल्भा स्याद् वेश्या सामान्यनायिका। निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि। वित्तमात्रं समालोक्य सा रागं दर्शयेद् बहिः।" इत्यादिना (साहित्यदर्पणे ३।६७।७१) वर्णिता,। तदुदाहरणं यथा लटकमेलकादौ रागमञ्जर्यादिः। पुनर्भूः पूर्वं (७२ आर्यायाः टिप्पण्याम्) लक्षिता। परस्त्री "परोढा तु परेणोढाऽप्यन्यसम्भोगलालसा।" इति (रसार्णवसुधाकरे १।१०६) लक्षिता। साहित्यदर्पणादौ तु स्वकीया, परकीया, साधारणस्त्री चेति नायिकायास्त्रैविध्यमेवोक्तम्। तत्र परकीया परोढा कन्या चेति द्विविधा (कन्यायाः पित्राद्यायत्तत्वात् परकीयात्वमित्याशयः)। अत्र मते तु कन्यैव विधिवत् परिणीता स्वकीयेति बोध्यम्। स्वकीयालक्षणं यथा (रसार्णवसुधाकरे १।६५) 'सम्पत्काले विपत्काले या न मुञ्चति वल्लभम्। शीलार्जवगुणोपेता सा स्वीया कथिता बुधैः।" इति। तदुदाहरणं यथा श्रीरामस्य सीता। अस्या मुग्धामध्यादिभेदबाहुल्यं साहित्यदर्पणादिभ्यो ज्ञेयम्॥

२ तृतीया प्रकृतिर्नपुंसकम्। "यत्स्यान्नपुंसकं नाम तृतीया प्रकृतिस्तु या।" इति (२४। ५०) भरतः। इयं स्त्रीत्वपुंस्त्वाभावात् औपरिष्टकेन सुखजनकत्वाच्च रूपव्यापारभेदेन इतरनायिकाभ्यो भिन्ना पञ्चमी नायिकेत्येके। अन्यथा सुखकार्यत्वाद् वेश्याविशेष एव। औपरिष्टकं (२।६) वक्ष्यते

प्रच्छन्नप्रव्यक्तौ द्वावेतौ नायकौ कथितौ ॥ २१ ॥
तौ त्रिविधौ प्रत्येकं श्रेष्ठाधममध्यमैर्गुणाद् भेदैः ।
ते तु गुणा उभयोरपि विज्ञेया वैशिके विशदाः ॥ २२ ॥
कुष्ठिन्युन्मत्ता वा भिन्नरहस्या तु या पतिता ।
या प्रार्थिनी प्रकाशे गतकल्पं यौवनं यस्याः ॥ २३ ॥
अतिशुभ्राप्यतिकृष्णा या च भवेद्दुर्भगाऽथ सखी ।
प्रव्रजितासम्बद्धे श्रोत्रियभूमीभुजोर्दाराः ॥ २४ ॥
गम्या नैता लोके कथयति वात्स्यायनो मुनिश्चैवम् ।

---

१ परस्त्रीषु सुखव्यतिरेकेण कार्यविशेषलाभाद् गुप्तं प्रवर्तमानः प्रच्छन्नः । कन्यापुनर्भूवेश्यासु सर्वलोकविदितत्वेन (प्रकाशं) प्रवर्तमानः प्रव्यक्तः ।

२ कुष्ठिनीति जुगुप्सितव्याधिमत्या उपलक्षणार्थम् । सा संसर्गेण रोगकारिणी । उन्मत्ता यत्किञ्चनकारिणी न सुखावहा । भिन्नरहस्या रहस्यं लोके प्रकाशयन्ती नायकस्य लज्जावहा । पतिता महापातकदूषिता । तत्संसर्गात् पातित्यम् । प्रकाशे प्रार्थिनी प्रकटं नायकमभिलषन्ती तस्य लज्जावहा अनर्थकारिणी च । यस्या यौवनं गतप्रायं सा प्रौढा, उपलक्षणाद् वृद्धा च । सा सेव्यमाना आयुस्तेजसोर्हन्त्री । यदुक्तम्—"वयोऽधिकां स्त्रियं गत्वा तरुणः स्थविरायते ।" इति, "जरां वितनुते प्रौढा वृद्धा स्यान्मृत्युदायिनी ।" इति च ।

३ अतिशुभ्रा अतिकृष्णा च अप्रशस्ते । दुर्भगायाः संपर्कात् सुभगाभिरवमन्यते । सूत्रे तु 'दुर्गन्धा' इत्यस्ति । गुह्ये मुखे सर्वशरीरे वा दुर्गन्धयुक्तेति तदर्थः । सा संयोगे वैमुख्यं जनयति । सखी स्वतो मैत्रीव्यवहारस्याऽप्रस्तुतत्वात् भार्यायाः सखीत्यर्थः । यद्वा स्वस्यैव सखी । भवति स्त्रीभिरपि पुरुषाणां सख्यम् । अत एव "···सखीं मातुस्तथैव च । न वा पितुः सखीं···" इति व्याघ्रवचनम् (पराशरस्मृतेर्माधवाचार्यकृतटीकायाम् प्रा० कां० २ अ० १०) । प्रव्रजिता क्वचित् शासने गृहीतव्रता । तस्या अभिगमने धर्मार्थयोर्वैलोम्यम् । सम्बद्धा सम्बन्धिनी विद्यासम्बन्धेन योनिसम्बन्धेन वा तत्सेवने सम्बन्धवैलोम्यम् । श्रोत्रियः ( वेदविद् ब्राह्मणः ) तस्य स्त्री सा ज्वलदग्निसमा । तदभिगमने धर्मवैलोम्यम् । भूमीभुजः (राज्ञः) स्त्री । तस्य वर्णाश्रमगुरुत्वात्तत्स्त्रिया अभिगमने धर्मवैलोम्यम्, महानपायश्च । एवं गुरु-

**यदि पञ्चपुरुषदृष्टा[1] गम्यास्ता बाभ्रवीयाणाम् ॥ २५ ॥**
**सम्बन्धि[2]श्रोत्रिययो राज्ञां दाराश्च तद्विधा नैवम्।**

शिष्यपुत्रभ्रातृमित्रभार्या अपि वोज्याः। तदभिगमनेऽपि धर्मवैलोम्यद्रोहादिभयम्। तथाचोक्तम्—"रेतः सिक्त्वा स्वयोनीषु कुमारीष्वन्त्यजासु च। सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥" इति। अन्यच्चोक्तम्—"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा। दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या। आसामन्यतमां गत्वा गुरुतल्पग उच्यते ॥" इति (नारदस्मृतौ १२। ७३–७५)। एवमगम्यागमनकर्मविशेषाद् योनिविशेषप्राप्तिरप्युक्ता। यथा—"गुरुदाराभिमर्शी च कृकलासो भवेद् ध्रुवम्। राज्ञीगामी भवेद दुष्टो वृश्चिको वृषलीपतिः॥"इति(स्कन्दपुराणे रेवाखण्डे७१।२६) "सखिभार्यां गुरोर्भार्यां राजभार्यां च पापकृत्। प्रधर्षयित्वा कामात्मा सूकरो जायते नरः।" इति मार्कण्डेयपुराणे (१५।११) "तृणगुल्मलतानां च क्रव्यादां दंष्ट्रिणामपि। क्रूरकर्मरतानां च क्रमशो गुरुतल्पगः ॥ (योनीः प्राप्नोति)" इति वराहपुराणे (२०२। ३०)। एवं ब्रह्मपुराणेऽपि (२१७।६६—८०)। एवमेवाऽगम्यागमनाद व्याधिविशेषोत्पत्तिरप्युक्ता। यथा—"उदरव्याधियुक्तस्तु तथा गुर्वङ्गनागमे। आचार्यभार्यागमने भगन्दरयुतो भवेत्॥"इति पद्मपुराणवचनम्। एवं विष्णुधर्मोत्तरेऽपि (२।७।४१–४६)। उल्लिखिताः सर्वाः सत्स्वपि कारणेषु अगम्या इत्याचार्याणां मतम्।

---

१ पञ्चभिः पुरुषैः भोग्यत्वेन दृष्टाः भुक्ता इत्यर्थः। 'दृष्टपञ्चपुरुषा' इति सूत्रे। दृष्टाः पञ्चपुरुषाः पतित्वेन यया सा बन्धकी "चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी मता" इति स्मरणात् (यमस्मृतौ १।३७)। सा च कारणवशात् सर्वैरभिगम्या (दृष्टैकद्व्यादिपुरुषा तु सत्स्वपि कारणेषु नाभिगम्येत्यर्थोक्तम्) इति बाभ्रवीयाणां (बाभ्रव्यानुयायिनां) मतम्। "द्रौपदी तु युधिष्ठिरादीनां स्वपतित्वादन्येषामगम्या। कथमेका सत्यनेकपतिरिति चैतिहासिकाः प्रष्टव्याः।" (ज. मं.)

२ सम्बन्धिश्रोत्रियराजभार्याः, "सम्बन्धिसखिश्रोत्रिय..." इति सूत्रात् सखिभार्या च तद्विधाः=दृष्टपञ्चपुरुषाः अपि नाभिगम्याः दृष्टादृष्टविरोधित्वात्—इति गोणिकापुत्रस्य मतम्।

इत्याह सर्वदर्शी निजमत्या गोणिकापुत्रः ॥ २६ ॥
सहपांसुक्रीडितकं सम्बद्धं चोपकारयोगेण।
व्यसनस्वभावतुल्यं मर्मरहस्यानुवेत्तारम् ॥ २७ ॥
प्रविदितमर्मरहस्यं धात्रीपुत्रं सहैव संवृद्धम्।
[पितृपैतामहयंत वैकृतकैरावेसंवादैः]
पितृपैतामहमन्तरवैकृतकार्याऽविसंवादि ? ॥२८॥
वश्यं ध्रुवमपलोभं परि(र)हार्यं नाऽप्रकाशकं मन्त्रे।
सम्पदियं मित्राणां कथिता वात्स्यायनेनेह ॥ २९ ॥

---

१ समानशीलव्यसनमित्यर्थः।

२ यः नायकस्य मर्म रहस्यं च वेत्ति।

३ यस्य मर्म रहस्यं च नायको वेत्ति।

४ एवंविधं पुरुषं मित्रमाकलयेदित्यर्थः। "सहपांसुक्रीडितमुपकारसम्बद्धं समनशीलव्यसनं सहाध्यायिनम्, यश्चाऽस्य मर्माणि रहस्यानि विद्यात्, यस्य चाऽयं विद्याद् वा धात्र्यपत्यं सहसंवृद्धं मित्रम्।" इति सूत्रम्।

५ पितुः पितामहादागतमित्यर्थः। "यथाऽनयोर्मैत्री तथा पित्रोः पितामहयोश्चाऽऽसीदिति।" (ज. मं.)

६ 'कैर्या' क. ग.। 'पितृपैतामहयातं वैकृतिकैर्वाविसंवादैः।' ख.

७ न परिहार्यं न परैः प्रलोभनादिना हर्तुं शक्यमित्यर्थः। मन्त्रे अप्रकाशकं मन्त्रगोपनकरमित्यर्थः। एवंविधगुणसम्पद्युक्तं मित्रं भवतीति। अत आह–सम्पदियं मित्राणामिति। वक्ष्यमाणानां गान्धिकमारभ्य पीठमर्दान्तानां मित्राणामियं संपत् (इमे [illegible]) इत्यर्थः। [illegible] तदुक्तं (रसार्णवसुधाकरे १।९२–९३) "देशकालज्ञता भाषामाधुर्यं च [illegible]। प्रोत्साहने कुशलता यथोक्तकथनं तथा। निगूढमन्त्रतेत्याद्याः [illegible] मताः ॥" इति। "पितृपैतामहमविसंवादकमदृष्टवैकृतं वश्यं ध्रुवमलोभशीलमपरिहार्यममन्त्रस्राावीति मित्रसंपत्।" इति सूत्रम्।

गान्धिकताम्बूलिकयोर्नापितगोपालस्रक्कृतां[1] चैव।
शौण्डिक[2]रजकविदूषकभिक्षुकविटपीठमर्दानाम्[3] ॥ ३० ॥
एषां[4] रमणीनामपि सुहृदः प्रोक्तास्तथैव नागरिकाः।
दासीवृद्धपणस्त्रीकलाविदग्धाङ्गनानां च ॥ ३१ ॥
उभयोर्यत्साधारणमुभयत्रोदाहृतेस्तथा पात्रम्।
नायिकया सविशेषं विस्रब्धं स्यात् स्फुटं मित्रम्[5] ॥ ३२ ॥
तत्र[6] च कर्मणि पटुता धृष्टत्वं ज्ञानमिङ्गिताऽऽकृत्योः।
आकुलताया विरहो ज्ञानं देशस्य कालस्य ॥३३॥

---

१ स्रक्कृत् मालाकारः।

२ शौण्डिको मद्यविक्रेता।

३ एवं स्वर्णकारादयोऽपि नायकस्य मित्राणि बोध्याः। एतैर्गान्धिकादिभिर्गन्धविक्रयाद्यर्थं परभवनेऽप्रतिषिद्धप्रवेशैर्नायकस्य कार्यं साध्यते।

४ एषां गान्धिकादीनां स्त्रीणाम, दास्याः, वृद्धवेश्यायाः, कलाऽभिज्ञायाः स्त्रियाश्चापि नागरिका मित्राणि भवन्ति। नहि तथा पुरुषाः, यथा योषितः परभवनं विशन्ति, विश्वासयन्ति च स्त्रियः।

५ यत् नायिकानायकयोरुभयोर्मित्त्रवेन साधारणम्, यच्च उभयत्र तत्तत्कार्यसाधकत्वेन, अभिन्नहृदयत्वेन च उदाह्रियते (प्रशस्यते गोष्ठीषु), यच्च साध्यमानाया नायिकायाः विशेषतो विश्वासपात्रं तन्मित्रं दूतकर्मणि प्रयोज्यमिति शेषः। निसृष्टार्थादयो दूतभेदाः साहित्यदर्पणादिभ्यो ज्ञेयाः।

६ दूतगुणानाह—तत्रेत्यादिना। पटुता प्रज्ञाऽनुबद्धा वाक्कुशलता। धृष्टत्वं प्रागल्भ्यम्। परस्य (परहृदयस्य) सुखं (निरायासं) बोधः, प्रतारणं प्रतारणकौशलं च। सोपाया उपायसहिता लघ्वी शीघ्रा प्रतिपत्तिः कृतिः सिद्धिरित यावत्। कार्यस्येति शेषः। "पटुता धार्ष्ट्यमिङ्गिताकारज्ञता प्रतारणकालज्ञता विषयबुद्धित्वं लघ्वी प्रतिपत्तिः सोपाया चेति दूतगुणाः।" इति सूत्रम्। मालतीमाधवेऽप्युक्तम्—"शास्त्रे प्रतिष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी। कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥" इति।

बलतः कार्ये निरतिः[1] परसुखबोधप्रतारणे तद्वत् ।
लघ्वी च प्रतिपत्तिः सोपायैते गुणा दूते ॥ ३४ ॥
आत्मवता पुरुषेण तु युक्तेनोत्सिक्तमित्रवर्गेण[2] ।
देशविदा कालविदा भावविदा चैव निर्यत्नम् ॥ ३५ ॥
मनसाऽप्यन्याऽलभ्या युवतिषु धन्या समग्रलोकेषु ।
विच्छिद्याऽपरलोकात् स्वबले(वशे) संप्राप्यते नारी ॥३६॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
साधारणेऽधिकरणे पञ्चम इह निर्मितोऽध्यायः ॥३७॥

इति प्रथमं साधारणाधिकरणं समाप्तम् ॥



१ 'ऽतिरतिः' ख. ।

२ अयं पाठः ग. पुस्तकस्थः । 'युक्तऽतोऽस्मिन् कुमित्र—' इत्यादर्शे । 'युक्तेऽतोऽस्मिन्नमित्र—' क. । 'युक्तेः स्मिन्नमि—' ख.

# अथ सांप्रयोगिकं नाम द्वितीयमधिकरणम्।

## प्रथमोऽध्यायः ।

साधारणाधिकरणं प्रथमं श्रीवीरभद्रदेवेन ।
व्याख्याय सांप्रयोगिकमधुना निर्णीयते क्रमशः ॥१॥
अथ सांप्रयोगिकस्य प्रथमाध्यायस्य साधु वैशद्ये ।
यतते शारदशशधरविशदयशा भूमिपालोऽसौ ॥२॥
अत्र प्रथमेऽध्याये सुरतविशेषा भिदा[1]: कृताः प्रीतेः ।
आलिङ्गने विचारः कथितस्तत्र द्वितीये तु ॥३॥
चुम्बनयुजो विकल्पानाहाऽध्याये द्वितीयतश्चरमे ।
नखजातयश्चतुर्थे विधयो दशनच्छिदायास्तु ॥४॥
सह देश्यैरुपचारैः पञ्चमसंचारचुञ्चुराश्चक्रे[2] ।
चित्ररतैः सह कथिताः संवेशनसंविधा[3]: षष्ठे ॥५॥
प्रहणनयोगा युक्ता उदितास्तैश्चेह सीत्कृतारम्भाः ।
श्रीवात्स्यायनमुनिना सांयोगिकसप्तमेऽध्याये ॥६॥
अध्यायेऽष्टमसंज्ञे पुरुषायिततदुपसृष्ट(प्त)के ज्ञेये ।
उदितं तथौपरिष्टकमिह नवमे सारविज्ञेन ॥७॥
सुरतविशेषं कथितं तदुपक्रमकावसानिकं चरमे ।

---

१ भेदाः । २ 'चक्रे' इति प्रयोगः प्रामादिकः। 'चक्रिरे' इति बहुवचनप्रयोगस्यौचित्यात् । 'सह देश्यैरुपचारैः संप्रोक्ताः पञ्चमेऽध्याये।' इति पाठ उचितः । यद्वा 'चक्रे' इति अस्तिवत् तिङ्विभक्तिप्रतिरूपकमव्ययम्। चक्रिरे इति तदर्थः। एवं च यथास्थितपाठोऽपि न दुष्टः। ३ संयोगप्रकाराः।

प्रणयकलहपरिनिष्ठितमेवं कथिता दशाऽध्यायाः ॥८॥

श्रीवीरभद्रसुकृती स्मरशास्त्रे निर्णयं कुरुते।

एवं कृत्वा संग्रहमध्यायानां द्वितीयस्य ॥९॥

शशवृषतुरगास्त्रिविधा नायकभेदास्तु[1] लिङ्गतो ज्ञेयाः।

वडवा[2] मृगी च करिणी कथिता इह नायिकास्तिस्रः ॥१०॥

शशमृग्योर्वडवाया वृषभेनाश्वस्य संगमश्चेभ्या।

समरतमेतत्त्रितयं निर्दिष्टं मानतो विज्ञैः ॥११॥

---

१ 'भेदास्त्रिलिङ्ग' आ. पु.। २ मृगी, वडवा, करिणी-इति क्रमः। 'वडवा मृगी च करिणी' इति क्रमविरुद्धः पाठस्तु छन्दःपारवश्येन। अयं शशादिमृग्यादिविभागस्तत्तद्गुह्यपरिमाणमूल इति वेदितव्यम्। वक्ष्यति चैतदनुपदमेव ग्रंथकृत्—"आयामैः परिणाहैः षण्नवरसयुग्मकाङ्गुलैः क्रमशः। गुह्यैः शशवृषतुरगा हरिणीवडवाकरिण्यश्च ॥" इति (आयामो दैर्घ्यम्, परिणाहो विशालता (गाम्भीर्यम्)।) तत्र षण्नवद्वादशाङ्गुलीदीर्घैर्मदनाङ्कुशैः शशवृषतुरगाः, षण्नवद्वादशाङ्गुलगम्भीरैर्वराङ्गैः हरिणीवडवाकरिण्यः क्रमशो ज्ञेयाः। यत्र पूर्वकथितगुह्यपरिमाणस्य व्यभिचारः (अङ्गुलेरेकस्य आधिक्यं न्यूनत्वं वा) तत्र आधिक्ये शशमृग्यादिजातेरुत्तमत्वम्, न्यूनत्वे चाऽधमत्वं लक्षणीयम्। तदुक्तं रतिरहस्ये (३।३६)—"उक्तोपस्थप्रमाणस्य व्यभिचारेऽपि लक्षयेत्। शशमृग्यादिजातित्वमुत्तमाधमभेदतः ॥" इति। उल्लिखितो गुह्यदैर्घ्यगाम्भीर्यपरिमाणविशेषः शशमृग्यादिजातेर्विशिष्टं लक्षणम्। सामान्यलक्षणानि रतिरहस्याऽनङ्गरङ्गादौ द्रष्टव्यानि। सामान्यलक्षणानि व्यभिचारीणि, विशिष्टलक्षणानि चाव्यभिचारीणि। तस्मात्तत्तज्जातिभेदो विशिष्टलक्षणैः (अत्रोक्तगुह्यदैर्घ्यगाम्भीर्याभ्यां, रतिरहस्याद्युक्तमदनजलसौरभविशेषैः, (तत्सूचकैः शरीरगन्धैर्वा) निर्णेयः। अत एवोक्तं नागरसर्वस्वे (१४।८)—"नरः संलक्षितो व्यक्तमनेकैरश्वलक्षणैः। एकतो लिङ्गकौमल्याच्छशको जायते ध्रुवम् ॥" इति (अनेकैः=सामान्यैः। कौमल्यात्=ह्रस्वत्वात्।) अनेकैः अश्वलक्षणैरुपेतोऽपि नरः एकेन लिङ्गह्रस्वत्वेन शशक इति निश्चेतव्य इति भावः।

विषमरतानि तु षोढा मृग्या वृषभस्य चा(स्तथा)ऽश्वया तुरगः ।
उच्चरतद्वयमेतद्द्वयमृग्योरुच्चतोऽप्यधिकम् ॥१२॥
नीचं करिणीवृषयोरश्वाशशयोस्तथैव निर्दिष्टम् ।
नीचतरं शशकेभ्यो रतमाम्नातं प्रमाणेन ॥१३॥
शशवृषतुरङ्गहरिणीवडवाकरिणीषु सक्रमो योगः ।
समरतमक्रमयोगो[1] विषमरतं षड्विधं प्रोक्तम् ॥ १४ ॥
उच्चं पुरुषाधिक्यादाधिक्याद् योषितो नीचम् ।
अव्यवहितवैषम्ये[2] तरशब्दो नेष्यते तत्र ॥ १५ ॥
उच्चतरं नीचतरं व्यवधानाद् योग्यत. समादिष्टम् ।
तत्र समानि रतानि श्रेष्ठान्युक्तानि[3] सारज्ञैः ॥ १६ ॥

१ 'योगे' ग. ।

२ पुरुषाधिक्ये अश्वस्य वडवया, वृषस्य मृग्येति वैलोम्येन अव्यवहितवैषम्यं संप्रयोगस्य । (इमे द्वे उच्चरते लिङ्गस्योच्चतया रन्ध्रमवपीड्य व्याप्रियमाणत्वात् ।.) स्त्र्याधिक्ये शशस्य वडवया, वृषस्य हस्तिन्येत्यानुलोम्येनअव्यवहित–वैषम्यं संप्रयोगस्य । ( इमे द्वे नीचरते लिङ्गस्याल्पतया रन्ध्रे सम्यगनवपूर्य व्यवहारात् ) एवमश्वस्य मृग्या, शशस्य हस्तिन्येति व्यवहितवैषम्यं संप्रयोगस्य वडवया वृषेण च व्यवधानात् । ( अत्र द्वये आद्यमुच्चतररतं लिङ्गस्यात्युच्चतया रन्ध्रमत्यवपीड्य कथञ्चिद् व्याप्रियमाणत्वात् । द्वितीयं नीचतररतं लिङ्गस्यात्यल्पतया रन्ध्रेऽनवपूर्यैव व्यवहारात् ) ।

३ समरतेषु यन्त्रसाम्यादुभयोः परस्परसुखातिशयात् तानि श्रेष्ठानि । नीचतरोच्चतरे अधमे, तत्र यन्त्रस्यातिशैथिल्याततिपीडनाच्च स्पर्शसुखस्याभावात् । उच्चरते नीचरते च मध्यमे, तत्र यन्त्रस्यानतिपीडनादनतिशैथिल्याच्च स्पर्शसुखस्य समत्वात् । नीचोच्चरतयोर्दोषा रतिरहस्ये (३।६–७) इत्थमुक्ताः—"कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात् । न द्रवन्ति न तृप्यन्ति योषितो नीचमेहने ॥ उच्चेऽपि मृदुगुह्यान्तःसंपीडासव्यथे हृदि । न द्रवन्ति न तृप्यन्ति मनस्तन्त्रो हि मन्मथः ॥" इति । तस्मात् समरतमेव स्त्रीणां प्रमोदस्थानम् । अत्र सुभाषितम्–"नाश्चर्यं त्वयि यल्लक्ष्मीः क्षिप्त्वाऽधोक्षजमागता । असौ मन्दरतस्त्वं तु प्राप्तः समरतस्तया ॥"इति (काव्यमीमांसायां १।८)। (मन्दरतः नीचरतः पक्षे समुद्रमन्थनदण्डान्मन्दरपर्वतात् । समरतः पक्षे समरात् संग्रामात् ) ।

नीचतरोच्चतरे खलु सुरतकनिष्ठे स्मरागमे कथिते ।
नीचोच्चयोः प्रभेदाः मध्या वात्स्यायने कथिताः ॥ १७ ॥
अङ्गोच्चताधमत्वे रतयोस्तादृक् च(त्व)कारणे यद्वत् ।
तत्साम्येन समत्वं विज्ञेयं तद्वदेवात्र ॥ १८ ॥
आयामैः परिणाहैः षण्नवरसयुग्मकाङ्गुलैः क्रमशः ।
गुह्यैः शशवृषतुरगा हरिणीवडवाकरिण्यश्च ॥ १९ ॥
स्त्रीपुंसयोर्विसृष्टेः शैघ्र्यं दैर्घ्यं च माध्यस्थ्यम् ।
इत्येवं नवधा स्याद्रतमिह भेदेन कालस्य ॥ २० ॥
एवं भावज[1]भेदा विज्ञेया अत्र संप्रयोगस्य ।
सप्ताधिकेह विंशतिराख्याता तस्य संख्यैवम् ॥ २१ ॥
मृगवर्करवृषतुरगाः पञ्च पुमांसःसरासभाः क्वापि[2] ।
हरिणी छागी वडवा करिणी करभी च नार्योऽपि ॥ २२ ॥
लक्षणमेषां ज्ञेयं तद्ग्रंथादेव[3] (न्नात्र) वीरभद्रस्य ।
वात्स्यायनीयविवृतौ निरतस्याऽस्त्याग्रहः क्वापि ॥ २३ ॥

---

१ नायकानां मन्दमध्यमचण्डवेगत्वेन भावतोऽपि रतानि नवधा । प्रमाणभेदाद्रतभेदोऽत्र प्रपञ्चितः । कालभावभेदाद्रतभेदप्रपञ्चः काञ्चीनाथकृतायां रतिरहस्यस्य दीपिकाख्यटीकायां (३।११—१२) द्रष्टव्यः ।

२ क्वापि मते । यदाह शार्ङ्गधरपद्धतौ शार्ङ्गधरः "हरिणी छागी वडवा करिणी करभी च पञ्चधा नार्यः ; मृगवर्करवृषतुरगाः रासभसंज्ञा (एते) नराः पञ्च ॥ ऋतुलोकपाल पङ्क्ति द्वादशभुवनाऽङ्गुलोन्मितैर्गुह्यैः । अनुपूर्वतस्तु युक्ता हरिणीहरिणादयो ज्ञेयाः ॥" इति । एतद्भेदपञ्चकानुसारं रतभेदेष्वप्याधिक्यम् । यदाह स एव—"पञ्चविंशतिभेदेन प्रोक्तमेवं रतं बुधैः । तत्रोच्चे च समे प्रीतिर्योषितां नाऽन्यतः सुखम् ॥" इति ।

३ 'तद् ग्रन्थान्नात्र वीरभद्रस्य' इति पाठ उचितः छन्दोऽनुकूलत्वात् ।

भावे स्त्रियां विवादः कलयति भावं न सा यथा पुरुषः ।
सातत्यादपनोदः कण्डूतेस्तन्यते यूना ॥ २४ ॥
तस्याः सा संसृष्टा पुनरभिमानव्रजोद्भवानन्दैः ।
जनयति रसान्तरं यत् तस्मिन् सुखबुद्धिरेतस्याः ॥२५॥
परसुखबुद्धेर्विरहात्तत्र कथंता न कारणे भवति ।

---

१ कण्डूतेः कारणं रतिरहस्ये उक्तम्–(३।८) "रक्तजाः कृमयः सूक्ष्माः मृदुमध्योग्रशक्तयः । स्मरसद्मनि कण्डूतिं जनयन्ति यथाबलम् ॥" इति पद्मपुराणेऽपि–"प्राणिनां हि कपालेषु कृमयः…………'इत्यारभ्य "सुखेनापि तस्यैव नाडिकाजालपञ्जरे । कामकण्डूर्भवेद्दूति सर्वेषां प्राणिनां किल ॥ पुंसश्च स्फुरते लिङ्गं नार्या योनिश्च दूतिके । स्त्रीपुंसौ संप्रमत्तौ तु व्रजतः संगमं ततः ॥ कायेन कायसंघृष्टिर्मैथुनेन हि जायते । क्षणमात्रं सुखं काये पुनः कण्डूश्च तादृशी ॥" इति (२य भू. खं. अ. ५३ श्लो. ९६–१०७)। एवं "हिंस्यन्ते तिलनाल्यां तप्तायसि विनिहते तिला यद्वत् । बहवो जीवा योनौ हिंस्यन्ते मैथुने तद्वत् ॥" (जैनमते तिलादिष्वपि जीवसत्त्वात् 'हिंस्यन्ते' इति प्रयोगः सोपपत्तिकः) इति (१०८ श्लो०) पुरुषार्थसिद्ध्युपायेऽपि (जैनागमीये) योनौ जीवानां (कृमीणां) सत्त्वमुक्तमिति त एव कण्डूतिहेतवः ।

२ अपनुद्यमाना कण्डूतिः ।

३ आभिमानिकचुम्बनादिषु वेरित्यर्थः । एतद्गुणनमस्मिन्नेव ग्रंथे (२।१।७६–७७) द्रष्टव्यम् ।

४ पुरुषवत् स्त्री अपि रतिमधिगच्छतीति नोपलब्धुं शक्यते परसुखप्रतीतेरप्रत्यक्षत्वात् । ननु प्रश्नेन ज्ञातुं शक्यते ? तत्राह कारणे सुखकारणे विषये कथंता=कथं ते सुखमिति प्रश्नः न संभवति । "पुरुषप्रतीतेश्चानभिज्ञत्वात् कथं ते सुखमिति प्रष्टुमशक्यत्वात्" इति सूत्रम् । केन प्रकारेण तव सुखं किं ममेव विसृष्ट्या, किं वाऽन्यथेति प्रष्टुं न शक्यते विसृष्टिसुखस्य स्त्रियाऽसंवेदनात्, प्रकारान्तरसुखस्य च पुरुषेणाऽसंवेदनात्–इत्याशङ्कयोपलब्ध्युपायमाह–इतिचेद् विरमति पुरुष इत्यादिना । पुरुषो हि विसृष्टिसुखमधिगम्य स्वेच्छया व्यापाराद् विरमति, न स्त्रियमपेक्षते व्याप्रियमाणामपि । नत्वेवं ('ह्येव' ख.) स्त्री । यदि हि स्त्रियापि पुरुषवद् विसृष्टिसुखमधिगम्येत तर्हि तयापि तदाधिगम्य पुरुषमन-

तस्मादासां भवता भावाभावः कथं प्रमितः ॥२६॥

इति चेद् विरमति पुरुषो भावप्राप्त्या निजेच्छया यस्मात्।

न त्वेवं (ह्येव) स्त्रीत्युच्चैर्निजमतमौद्दालकिः प्राह ॥२७॥

तस्या भावप्राप्तौ तदपेक्षः स्यात् पुमान् स्वतो विरतौ।

स्त्री तु विरत्यां स्पृहयति पुंसो भावाय भावज्ञा ॥२८॥

ननु यदि भावो नासां तस्या रागश्चिरद्रुतौ पुंसि।

शीघ्रद्रुतौ च रोषो भावापेक्षाकृतौ तौ हि ॥ २६ ॥

चिरतो भावप्राप्त्या रज्यन्ते पुंसि तादृशे नार्यः।

शीघ्रद्रुतावलाभाद् द्वेषो युक्तो मृगाक्षीणाम् ॥ ३० ॥

---

पेक्षमाणया स्वेच्छया यन्त्रं विश्लेष्य व्यापाराद् विरम्येत। न चैवमुपलभ्यतेऽन्यत्र पुरुषविरामात्। विरतेऽपि च पुंसि पुरुषान्तरसापेक्षत्वं स्त्रियाः। भवन्ति काश्चिदेकेन पुंसा संप्रयुज्य यथावस्थिता एवाऽपरैः संप्रयुज्यमानाः। अत एवोक्तम्—“नाग्निस्तृप्यति काष्ठानां······न पुंसां वामलोचनाः॥” इति (महाभारते)। तस्मात् स्वेच्छया विरामाभावात् न स्त्री पुरुषवत् विसृष्टिसुखमधिगच्छति। ननु चिरवेगे नायके चिरमुपसृत्य विसृष्टिसुखाधिगमाद् विरते स्त्रियोऽनुरज्यन्ते। शीघ्रवेगे च नायके शीघ्रमुपसृत्य सुखाधिगमाद् विरते स्त्रियस्तस्मैअभ्यसूयिन्यो भवन्तीत्येकत्राऽनुरागः स्त्रीणां सुखाधिगमम्, अपरत्र विरागश्च सुखानाधिगमं ज्ञापयति। यथा चिरवेगाः पुरुषाः पुरुषायिते चिरं व्यापृत्य विरतायां स्त्रियामधिगतसुखा अनुरज्यन्ते, शीघ्रं विरतायां चानधिगतसुखा विरज्यन्ते, तद्वदेतत्। तस्मात्पुंसामिव स्त्रीणामपि अनुरागोपलम्भात् विसृष्टिसुखाधिगमः प्रतीयते—इति चेन्न। कण्डूतिप्रतीकारस्यापि स्त्रीणां प्रियत्वेन कण्डूतिप्रतीकाराऽप्रतीकाराभ्यामप्यनुरागविरागयोरुपलम्भात् किं विसृष्टिसुखाधिगमनिमित्तोऽस्या अनुरागः, उत कण्डूतिप्रतीकारसमुत्थः इत्येवं सन्दिग्धत्वेन अनुरागविरागयोः विसृष्टिसुखाधिगमानधिगमयोरज्ञापकत्वात्। तस्मात् पूर्वोक्तौ स्वेच्छया विरामाविरामावेव ज्ञापकौ। एवं च न स्त्री पुरुषवद् भावमधिगच्छति (विसृष्टिसुखमनुभवति)[1]। किन्तु कण्डूत्यपनोदसमुत्थमाभिमानिकसुखानुविद्धं स्पर्शसुखमेव स्त्रीभिः सुखमिति बुध्यते—इत्यौद्दालकेर्मतम्।

---

१. भावस्येति शेषः।

एतद् भावप्राप्तौ सत्यां येनेह संभवेत् स्त्रीणाम् ।
तस्मान्मतमौद्दालकिरमतं प्राहेति केचनाऽऽचार्याः ॥३१॥
चिरकण्डूतिनिवारणमिष्टमनिष्टं तदल्प[1]कालेन ।
भावं साधयतोऽतो नेताविति तन्[2]मते निरताः ॥३२॥
कण्डूतेरपनोदे भावप्राप्तौ च तुल्यतैतस्य[3] ।
हेतोरिति सन्दिग्धव्याप्तिरसौ भावयोगेन ॥३३॥
अभिमानैरभियुक्ते सुखमित्यभिधा प्रयुज्यते लोके।
तस्मात् कण्डूनाशे सञ्जाते वल्लभाऽऽसङ्गात् ॥ ३४ ॥
कण्डूदुःखाभावे सुखमिति बुद्धिर्मृगाक्षीणाम् ।
भा[5]वापगमोद्भावे सुखिनो वयमित्यधीराणाम् ॥ ३५ ॥
मतमिदमपरिच्छेद्यं स्वल्पमतीनां विविच्य यत्नेन ।
श्रीवीरभद्रसुकृती स्वकृतावौद्दालकेराह ॥ ३६ ॥
सा[6]तत्यादारम्भात् प्रभृति मृगाक्षीषु जायते भावः ।

---

१ 'तदर्थकालेन' इति ग. ।

२ औद्दालकिमते ।

३ 'तस्यः' ग. ।

४ 'सुखिता' ख. ।

५ अयं ख. पुस्तकस्थः पाठः । 'भारापगम इवास्ते' आ. पु. 'भावापगम' ग.।

६ बाभ्रव्यमतमाह—सातत्यादित्यादिना । स्त्री दन्त्रयोगादारभ्य पुरुषेणोपसृज्यमाना प्रभिन्नजलभाण्डवत् शनैः शनैः छिद्यमानसंबाधा नैरन्तर्येण भावमधिगच्छति । पुरुषस्तु अन्त एव शुक्रविसर्गाद् भावमधिगच्छति । ननु उपतुद्यमानस्य संबाधस्य व्रणस्वभावत्वात् सिद्धः क्लेदो न भावप्राप्तेर्लक्षणम्—इति चेत् । मास्तु । परं गर्भसंभवस्तु भावप्राप्तिं लक्षय-त्येव । भावप्राप्तिर्हि शुक्रविसृष्टिनिबन्धना । यदि न शुक्रविसर्गस्तर्हि स्त्रियाः स्त्रीसंयोगाद् गर्भसंभवः कथमुपपद्येत । भवति हि पुरुषसंयोगादिव स्त्रीसंयोगादपि स्त्रिया गर्भः ।

**प्रान्ते तु नायकानामरतौ[1] तासां न गर्भः[2] स्यात् ॥ ३७ ॥**
**इत्युपपत्त्या प्राहुर्मतमुपपन्नं तु बाभ्रवीयस्य ।**
**साऽपि समधिगतभावा पुरुषं नापेक्षते विरतौ ॥ ३८ ॥**
**ननु सततेऽस्या भावे स्यादारम्भे न चित्तमाध्यस्थ्यम् ।**

यदुक्तं शुश्रुते–'यदा नारी च नारी च मैथुनायोपपद्यते । अन्योन्यं मुञ्चतः शुक्रमनस्थिस्तत्र जायते ॥ 'इति । किञ्च यथा पुरुषः प्राप्तभावः स्त्रियमनपेक्ष्य व्यापाराद् विरमति, तथा स्त्री अपि सत्यां भावप्राप्तौ पुरुषं विरतये नापेक्षते । तस्मात् स्त्रिया अपि भावप्राप्तिजन्यमेव सुखम्, नतु पूर्वमतानुसारमाभिमानिकम् । ननु यदि स्त्रिया आरम्भात् प्रभृति एकरूपतया सातत्येन विसृष्टिसुखं प्रवर्तते, तर्हि आरम्भे औदासीन्यम् (नखक्षतादीनामप्रयोगः), असहिष्णुता (प्रयुज्यमानानां नखक्षतादीनामसहनम्), ततः क्रमेण (अधिकाधिकतरतमभेदेन) रागवृद्धिः (नखक्षतादीनामनर्गलः प्रयोगः), शरीरस्यापि अनपेक्षत्वम् (शरीरच्छेदघातकदनानां सहिष्णुता), अन्ते च विरत्यपेक्षा–इत्येषोऽवस्थाभेदो नोपपद्यते–इति चेत् । यथा भ्रमतः कुलालचक्रस्य सातत्येन वर्तमानेऽपि भ्रान्तिसंस्कारे आरम्भे मन्दवेगता, ततः क्रमेण वेगस्य पूरणं भवति । तथा स्त्रिया अपि पुरुषेणोपसृप्तादिभिरुत्पाद्यमाने विसृष्टिसुखे आदिमध्यावसानेषु समानेऽपि आरम्भे मन्दवेगतया (रतेर्मृदुतया) औदासीन्यमसहिष्णुता च, ततः क्रमेण रतेरुद्दीप्तत्वे शरीरानपेक्षत्वमित्यवस्थाभेदः उपपद्यते । ननु भावे सातत्येन प्रवर्तमानेऽपि विरामेच्छा कथम्–इति चेत् । सा धातुक्षयाद् भवति ("समुत्पन्ने कामिताख्ये भावे यः शुक्रधातुः स्वस्थानाच्च्युतः स्वनाडीं प्रतिपद्यते, तस्यारम्भात् प्रभृति शनैः शनैः स्यन्दनात् क्षये निवृत्तरागत्वाद् विरामाभीप्सा" ज. मं.) । तस्मात् भावप्राप्तिजन्यम् "सुरतान्ते सुखं पुंसां स्त्रीणां तु सततं सुखम् । धातुक्षयनिमित्ता च विरामेच्छोपजायते ॥" (सूत्रे) इति बाभ्रव्यमतम् ।

---

१ 'अमतौ' ख. । असत्यां भावप्राप्तौ न गर्भसंभव इत्यर्थः । "रसप्राप्तौ विसृष्टिसुखाधिगमे तृप्ता हि स्त्री गर्भं धत्ते । यथाह चरककारः–"निष्ठीविका गौरवमङ्गसादस्तन्द्रा प्रहर्षो हृदयव्यथा च । तृप्तिश्च बीजग्रहणं स्वयोन्यां गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥" इति । तृप्तिश्च भावः । स च न शुक्रविसृष्टिं विनेत्यभिप्रायः" । (ज. मं.)

२ 'गर्त.' ग. 'गर्वः' ख. (गर्वः आभिमानिकं सुखमित्यर्थः) ।

असहिष्णुत्वं च यथा (ततो) रागविवृद्धिः[1] क्रमादपि च[2] ॥३९॥
अनपेक्षत्वं च तथा वपुषो विरताववे[3]क्षणं चान्ते ।
इति चेन्न तुल्यतायां मन्दामन्दत्वयोर्दृष्टेः[4] ॥ ४० ॥
संस्कारे किल सदृशे भ्रान्तेश्चक्रस्य कुम्भनिर्मातुः[5] ।
भ्रान्तावेव निवर्स[6]तो दृष्टौ मन्दाधिकौ वेगौ ॥ ४१ ॥
चक्रभ्रमणेनैव व्याख्यातं भ्रमणमत्र चाऽन्यस्य[7] ।
वेगैकत्वभिदोरिह चिन्ता व्यर्थाऽक्षते साम्ये ॥ ४२ ॥
अन्ते विरतेरीप्सां प्रति हेतुर्धातुसंक्षयः प्रोक्तः ।
तस्माद् भावोत्पत्तिर्नार्या अपि नायकस्येव ॥ ४३ ॥
प्रत्युत नार्याः सततं सुरतप्रा[8]न्ते तु जायते पुंसः ।
त[9]स्माद्भावाधिक्यं भाविन्यां भावयेद् युक्त्या ॥ ४४ ॥
सदृशाकृतावभिन्ने कस्मा[10]दर्थे प्रवृत्तयोर्यूनोः ।
वैलक्षण्यं कार्ये नैषा शङ्का चमत्कृ[11]त्यै ॥ ४५ ॥

---

१ 'ततो रागविवृद्धिः' इति पाठ उचितः प्रतिभाति स्पष्टार्थत्वात्, सूत्रानुसारित्वाच्च । तथा च सूत्रम्—'ततः क्रमेणाधिको रागयोगः शरीरे निरपेक्षत्वम्' इति ।

२ 'वा' ग. । ३ 'वे' ख. । ४ 'दृष्ट्योः' ख. । ५ 'निर्माणे' ख. ।

६ 'विलसतो' ख. । ७ 'बाणस्य' ख. । अन्यस्य सूत्रोक्तस्य 'भ्रमरकस्य । तथा च सूत्रम्—"सामान्येऽपि भ्रान्तिसंस्कारे कुलालचक्रस्य भ्रमरकस्य वा भ्रान्तावेव वर्तमानस्य प्रारम्भे मन्दवेगता, ततश्च क्रमेण पूरणं वेगस्येत्युपपद्यते" इति । 'भ्रमरकं काष्ठमयं क्रीडनकम् । यद्दीर्घेण सूत्रेणावेष्ट्य लाडिका भ्रमयन्ति' ( ज. मं. ) ८ 'सुरतं प्रति जायते' ख. ।

९ तदुक्तम्—"स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा" इति (महाभारते १३।५२) सुरते स्त्री पुरुषापेक्षया अधिकानन्दभागिनीति भावः ।

१० 'कार्त्स्न्यात्' ख. । ११ 'चमत्कृते नैव' ख. ।

वैलक्षण्यमुपाये स्यादभिमाने च कारणं तत्र[1]।
वैलक्षण्यमुपाये सर्गात् प्रव्यक्तमेवाऽत्र ॥ ४६ ॥
सर्गः स्वभावभेदः कर्त्राधारौ स्वभावतो भिन्नौ।
भिन्नस्वभावयोगाद् यदि वा सर्गः क्रियासर्गः ॥ ४७ ॥
कर्ता[2] पुमान् क्रियायां प्रतिपन्नो भवति येन रूपेण।
नारी ततोऽन्यथाऽस्या[3]माधारीभूय संयतते ॥ ४८ ॥
यदि वा धातुनि(वि)सर्ग[4]ः सर्गस्तस्मादिह द्वयोर्भेदः।
कर्ता पुमानमुष्मिन्नाधारो नायिका प्रोक्ता ॥ ४९ ॥
भेदकतयाऽवसेयः कर्तुरिहाधारतोऽथवा युक्त्या।
लक्षणसर्गासर्गैर्भिन्नौ तौ ग्रंथतः प्रथितौ ॥ ५० ॥
यद्वा सर्गात् सृष्टेरा[5]रभ्याऽऽधारतः परः कर्ता।
इति कथिताः सर्गार्थौ विदुषा श्रीवीरभद्रेण ॥ ५१ ॥
वैलक्षण्यमुपाये स्यादभिमानेऽपि कारणं तस्य।
अहमभियोक्तेति पुमानभियुक्तेति प्रवर्तते नारी ॥५२॥
नत्व (न्व) नयोरिह भेदादत्यन्तं किं न भिद्यते कार्यम्।
ल[6]क्षणभेदाद् भिन्नौ तौ न तु कार्यस्य तद्भेदः ॥५३॥

---

१ 'तद्वै' ख.। २ अयं श्लोकः ग. पुस्तके त्रुटितः। ३ क्रियायाम्।
४ 'विसर्गः' ख.। ५ 'सृष्टेस्तस्मादाधा-' ख.।

६ कर्त्राधारयोर्भिन्नलक्षणत्वात्। स्वतन्त्रः कर्त्ता अधिकरणमाधारः। तयोर्भिन्नत्वात्तद्व्यापारावपि भिन्नौ। एवं च तज्जन्यस्य सुखाख्यस्य कार्यस्यापि भिन्नत्वमुचितम्। तच्च न भवति आकृतेरभेदात्। समानायामेव मनुष्यजातावेकाभिसन्धानयोः स्त्रीपुरुषयोर्व्यापारौ कालस्वरूपाभ्यां सदृशं सुखं जनयतः। एषु पद्येषु आत्यन्तिकशब्दस्थाने औत्पत्तिकशब्दः पठ्यते ख. पुस्तके।

**आत्यन्तिके तु भेदे कारणभेदः प्रयोजको नैव ।**
**स्यादाकृतेरभेदादात्यान्तिकभेदवैधुर्यम् ॥५४॥**
**नन्वेवं स्याद् भेदः प्रकृते (तेः) कार्ये न कश्चनाऽपीह ।**
**एकार्थस्योत्पत्तौ कारकसंहान (संघात) संदृष्टेः ॥५५॥**

---

१ यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादौ देवदत्तादिभिः कर्तृकरणाधारैः कारकैः संभूयौदनमेकं निर्वर्त्यते, न तथा कर्त्राधाराभ्यां पुंस्त्रीभ्याम् । तौ तु सुखरूपं पृथक्कार्यं जनयतः । यतः पुरुषः कर्ता व्यापारापेक्षः सुखाख्यं स्वार्थं साधयति, स्त्री चाधारः पुरुषव्यापारापेक्षः । एवं च स्त्रीपुंसयोः सुखं कालस्वरूपाभ्यां भिन्नमेव । तत्राह–'इति चेन्न–' इत्यादिना । हेत्वोः संघातेऽपि कार्यविभेदः ('युगपदनेकार्थसिद्धिः' सूत्रे) दृश्यते । यथा मेषयोरभिघाते कपित्थयोर्भेदे मल्लयोर्युद्धे च । मेषादेरभिघातादयो युगपद् द्विधा च भवन्ति, न तु तेषामेकत्वम् । तथापि उभयोर्मेषयोः अभिघातक्रियायां सहकारित्वात्, एकजातित्वाच्च यथा अभिघातस्य ऐक्यं गण्यते, एवं स्त्रीपुंसयोरपि सहकारित्वात् एकजातित्वाच्च उभयोः पृथगपि सुखाख्यं कार्यं सदृशम् । ननु मल्लादेर्युद्धादौ कारकभेदो नास्ति, उभयोरपि मल्लयोः युद्धक्रियायाः कर्तृत्वात् । इह तु स्त्री आधारः, पुमांश्च कर्तेति भिन्नं कारकद्वयम् । अतश्च तयोर्भिन्नयोः सुखाख्यं कार्यं कथं समानम् । तत्राह–'इति चेन्न केनचित्–' इत्यादिना । स्त्रीपुंसौ अपि न परमार्थतो भिन्ने कारके, अपि तु द्वावप्येतौ कर्तारौ । कर्तृत्वाधिकरणत्वाभ्यामुभयोर्भेदस्तु बुद्धिकल्पितो व्यवहारार्थं व्यवस्थाप्यत इति नासौ वास्तविकः । एवञ्चोभयोः सुखाख्यस्य कार्यस्य न भेद इति सिद्धम् । ननु स्त्रीपुंसयोः सर्गादेव भेदः । एषैव हि सृष्टिः स्त्रीपुंसयोर्यदेकः कर्ताऽन्यश्चाधारः इति पूर्वमुक्तम् । तस्मात्कथमैक्यम्–इति चेत् । सर्गाद् भेदेऽपि रूपाभेदस्य युक्तत्वात् (रूप्यतेऽनेनेति रूपं जातिः । उभयोर्मनुष्यत्वजातेरभेदादित्यर्थः) स्त्रीपुंसयोः सदृशमेव सुखम् (स्त्री पुरुषवदेव रतिमधिगच्छति) इति शास्त्रकारसिद्धान्तः । "जातेरभेदाद्दम्पत्योः सदृशं सुखमिष्यते ।" इति सूत्रम् । "एतावत्तु स्यात् अवान्तरस्त्रीजातिभेदाद् यदपरमस्याः कण्डूत्यपनोदसुखम्, यच्चोपमृद्यमाने सम्बाधे स्यन्दनं शुक्रस्य । विसृष्टिसुखन्तु पुरुषवदन्त एवेति । यथोक्तम्––'कण्डूत्यपगमात् स्त्रीणां क्षरणाच्च सुखं द्विधा । स्यन्दनं च विसृष्टिश्च शुक्रस्य क्षरणं द्विधा ॥ छिन्नता केवलस्यन्दाद् विसृष्टेर्मथनात् सुखम् । अन्ते त्वाच्छिन्नवेगाया विसृष्टिर्निश्चलत्वम् स्मृता ॥' इति" (ज. मं.) ।

इह तु पृथङ्निजकार्ये भिन्ने हेतुत्वमेतयोरुभयोः ।
सहकारित्वं तस्माद् यूनोर्युक्तं कथं भवतु ॥५६॥
इति चेन्न दृश्यते खलु कार्यविभेदोऽपि संहतौ हेत्वोः ।
मेषादेरिह युद्धे नह्यभिघातस्तयोरेकः ॥५७॥
उभयोः सहकारित्वादस्ति तयोरेकजातितश्चैक्यम् ।
यत्तन्मल्लादीनामभिघातेऽपीष्यते सुलभम् ॥५८॥
ननु मल्लादेर्युद्धे कारकभेदप्रथा तथा नास्ति ।
अस्ति तु सुरते तस्मादास्तामात्यन्तिको भेदः ॥५९॥
इति चेन्न केनचित् खलु रूपेणेहापि वस्तुनोरैक्यम् ।
आत्यन्तिकस्त्वभेदो मल्लादौ दृश्यते नेत्र ॥६०॥
नन्वैक्ये पूर्वोक्ता भेदनिरुक्तिर्विरुध्यते नैवम् ।
सर्गाद् भेदोक्तावपि रूपाभेदस्य युक्तत्वात् ॥६१॥
आत्यन्तिको हि भेदो यूनोः सुखयोस्तु नेष्यते तस्मात् ।
सादृश्यप्रतिपत्तेः सिद्धत्वात् सर्वलोकेषु ॥६२॥
एकार्थार्थः सङ्गो दम्पत्योरास्ति युक्तितः साम्यम् ।
वल्लभ इव वनिताऽपि हि सदृशं सुखमश्नुते तस्मात् ॥६३॥
एवं तथोपचर्या योषित् पुरुषेण यततः सम्यक् ।

---

१ विषमरतविषयोऽयमुपदेशः । समरते दम्पत्योः समकाला भावप्राप्तिः । सोऽयमुत्तमः पक्षः । विषमरते तु भिन्नकालायां भावप्राप्तौ पुरुषस्य प्रागधिगतभावत्वात् ध्वजभङ्गे न स्त्री भावमधिगच्छति । तस्माद्विषमरते (नीचरते) । स्त्री उपायविशेषैः तथोपचर्या यथा पुरुषात् पूर्वमेव भावमधिगच्छेत् । एवं स्त्रियां प्रागधिगतभावायां पुरुषो युक्तयन्त्रः आत्मनो भावनिर्वृत्तये वेगं कुर्यात् । अप्राप्तभावानां स्त्रीणां केवलं कामो वर्धते, सन्तोषाभावो वा भवति । ततश्च ताः पतिविद्वेषिण्यो भवन्ति, प्रवृद्धायाः कामाऽनलज्वालायाः

शान्त्यर्थं च व्यभिचारमार्गे पदं निदधति, यन्मूला नानाविधा अनर्थपरम्पराः परापतन्त्यः स्वर्गावहासिनः परिवारान् मूर्तिमतो नरकान् विदधति। तदुक्तं नागरसर्वस्वे (१२।२) "नारी नीचरतोद्विग्ना स्वामिनं नाशयत्यपि। श्रूयते चैव कर्णाटे कान्तया निहतः पतिः॥" इति। स्त्रियो हि पुरुषापेक्षयाऽष्टगुणकामाः। यथोक्तम्--'आहारो द्विगुणः स्त्रीणां, लज्जा चापि चतुर्गुणा। साहसं षड्गुणं पुंभ्यः कामश्चाष्टगुणः स्मृतः॥" इति॥ अत एवोक्तं महाभारते--'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्वभूतानां न पुंसां वामलोचनाः॥" इति॥ अत एव च ऋतौ गमनं विदधतोऽपि धर्मशास्त्रकाराः स्त्रीच्छामनिरोद्धव्यामाहुः - "यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।" इति (या० स्मृ० आचाराध्याये ८१ श्लो०), "ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहै काममाविजनितोः संभवाम" इति (तै.सं.२।५।१।५) च। तस्मादात्मनो हितमात्मकुलस्य कलङ्काभावं चेच्छद्भिः पुरुषैः स्त्रीणां कामं शमयितुं कामशास्त्रोक्तविधिना सर्वथा सचेष्टैर्भाव्यम्। अत एव अनङ्गरङ्गकारः स्त्रियाः प्रागुभावप्राप्तिमन्तरा सुरतमेव निष्फलमित्याह-- "प्रागेव पुंसः सुरते न यावन्नारी द्रवेद् भोगफलं न तावत्। अतो बुधैः कामकलाप्रवीणैः कार्यः प्रयत्नो वनिताद्रवत्वे॥" (६।१) इति। तत्र स्त्रियमधिगतभावां विधातुं तत्र तत्रोक्तानामुपायविशेषाणामेष संग्रहः--

(क) अस्य ग्रन्थस्य अस्मिन्नेव अधिकरणे दशमेऽध्याये, रतिरहस्ये च दशमे परिच्छेदे उक्तं विधिमनुसृत्य सुरतोपक्रमः।

(ख) रतिरहस्यद्वितीयपरिच्छेदोक्तचन्द्रकलास्थानानि विज्ञाय, तत्र (अनङ्गरङ्गपञ्चसायकयोश्च) उक्तेन तत्तत्तिथौ तत्तदङ्गपीडनप्रकारविशेषेण कामप्रबोधनम्। येन स्त्री द्रुतं द्रवति। (नागरसर्वस्वेऽपि सप्तदशे परिच्छेदे किञ्चिद्भेदेन चन्द्रकलास्थानानि, तत्तदङ्गेषु तन्त्रोक्तस्वरमातृकान्यासप्रकारविशेषेण विनैव योनिलिङ्गसंसर्गेण स्त्रीतृप्तिप्रकारश्च उक्तस्ततो ज्ञेयः।)

(ग) नागरसर्वस्वस्य अष्टादशपरिच्छेदे उक्तं विधिमनुसृत्य मदाऽऽवहानां नाडिकानां क्षोभणम्।

(घ) रतिरहस्ये पञ्चदशपरिच्छेदे, अनङ्गरङ्गे पष्ठस्थले, नागरसर्वस्वे द्वादशपरिच्छेदे, तत्तदायुर्वेदग्रंथेषु चोक्तानां स्त्रीद्रावणप्रयोगाणामुपयोगः।

(ङ) पुरुषस्य मृदुहस्तध्वजत्वम्, द्रुतच्युतित्वं च स्त्रिया अतृप्तौ कारणम्। तत्प्रतीका-

येनाप्नुयाद् रतिं सा केन स्यादन्यथा निरता[1] ॥६४॥
नच सादृश्यमसिद्धं दम्पत्योर्नापि तज्जयोःसुखयोः।
तस्माद्रतस्य भेदः सिद्धः कालार्पितो[2] नवधा ॥६५॥
काममतेन विचारात् सह च समाप्त्या[3] बुधेन निर्णीताः।
रसरागभाववेगाः प्रीतिरती सप्त पर्यायाः ॥६६॥
मोहनशयने कथिते तुल्यार्थे संप्रयोगरतशब्दौ।
सहितौ रहःपदेन च तुल्यार्थावत्र निर्दिष्टौ ॥६७॥
उक्तविभेदरतानां सांकर्ये भूयसी भवेत् संख्या[4]।
तेषु[5] भवन्त्युपचारास्तर्काद् वात्स्यायनाभिमताः ॥६८॥

---

राय तत्रैवोक्तानां ध्वजदृढीकरणवृष्यस्तम्भनादियोगानां प्रयोगः।

(च) अस्मिन्नेव ग्रंथे औपनिषदिकाधिकरणे द्वितीयाध्याये उक्तानामपद्रव्याणां योजनम्।

(छ) "तृप्तिमेति यदि नैवमप्यसावाचरेद्गदितमङ्गुलीरतम्"। (१०।५०) इति, "निवसति भगमध्ये नाडिका लिङ्गतुल्या मदनगमनदोला द्व्यङ्गुलक्षोभिता सा। सृजति मदजलौघम्" (१०।६) इति च रतिरहस्ये, "अङ्गुलीनां प्रवेशैस्तु तथा कृत्रिमलिङ्गकैः। मृदुहस्वध्वजः कामी रमेत् स्त्रीतोषहेतवे॥" इति स्मरदीपिकायां च प्रयोज्यत्वेन उक्तस्य; नागरसर्वस्वे षट्त्रिंशपरिच्छेदे करणकनकादिभेदैःप्रपञ्चितस्य कृत्रिमलिङ्गस्थानीयस्य अङ्गुलिप्रवेशस्य प्रयोगः। ("तर्जन्यनामिकायुक्ता मध्यमा पृष्ठतो यदि। करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः॥" इति करिहस्तस्य लक्षणम्)। तत्र (च) (छ) भागयोरुक्ता उपायाः शिष्टगर्हिताः। द्रावणस्तम्भनप्रयोगाः यथाक्रमं स्त्रीपुंसयोर्हानिकरत्वान्न प्रयोज्याः।

---

१ अन्यथा (रतिप्राप्तिं विना) केन निमित्तेन स्त्री पुरुषे निरता (अनुरक्ता) स्यात्। भावप्राप्तिरेव हि स्त्रिया अनुरागे निमित्तमिति भावः। २ 'कालार्यितो—' ग.। ३ 'समाध्या' ख.। ४ एतत्संख्याप्रपञ्चं दिदृक्षुभिरत्रत्या जयमङ्गला द्रष्टव्या। ५ संकीर्णरतेषु बुद्ध्या परिच्छिन्नेषु तर्कात् संकीर्णानेव लिङ्गनादीनुपचारान् यो नयेत् रतसाम्यायेत्यर्थः।

वेगश्चण्डः प्रथमे पुरुषस्य रतेऽथ शीघ्रकालत्वम् ।
उत्तररतेष्वतोऽन्यद् योषिद्धि[1] (ति वि) परीतमेतत्तु ॥६६॥
आधातुत्तयमासां तदुच्यते धातुसंत्तयः पूर्वम् ।
पुंसां स्त्रीणां पश्चाद् वादोऽसौ प्रायिको लोके ॥७०॥
रतभेदानभिधाय प्रीतिविशेषान्निरूपयामोऽत्र ।
आशु भवन्ति मृगाद्यां[2] प्रीतय इत्याहुराचार्याः ॥७१॥
उपम[3]र्दत्वमृदुत्वे कोऽपि निसर्गश्च योषितामाशु ।
प्रीतिप्राप्तौ हेतुर्विख्यातः कामशास्त्रेषु ॥७२॥
एतावतैव गदितो निपुणमतीनामिहैव संयोगः ।
मन्दमतेरवबोधो विस्तरतो भण्यते तदनु ॥७३॥
अभिमानविषयजाते[5] संप्रत्ययतस्तथैव चाऽभ्यासात् ।
प्रीतिश्चतुर्विधैवं लत्तणमासां तु भेदाय ॥७४॥
ब्रूमः [6]कर्माभ्यासान्मृगयादिषु या च कर्मसु प्रीतिः ।
बहिरिह शब्दादिभ्यः सा ज्ञेयाऽऽभ्यासिकी लोकैः ॥७५॥

---

१ 'योषिति विपरीत–' इति पाठः स्पष्टार्थः ।

२ 'मृगाद्यः प्रीता--' इति पाठः स्पष्टार्थः । ३ 'उपमर्दत्व' आ. पु. ।

४ अनङ्गरङ्ग इदं प्रीतिचतुष्टयं नामलत्तणाभ्यां किञ्चिद्भेदेनोक्तम् । 'तथहि- ' नैसार्गिकी विषयजा समा चाऽऽभ्यासिकी मता । चतुर्विधेति विद्वद्भिर्दम्पत्योः प्रीतिरुच्यते । नैसर्गिकी स्वभावोत्था पूर्वजन्मसमुद्भवा । दम्पत्योरुत्तमा प्रीतिर्वज्रलेखेव राजते ॥ मालाचन्दनभोज्याद्यैर्विषयैर्वर्द्धिता तु या । प्रीतिर्विषयजा प्रोक्ता समयोगे समा स्मृता ॥ आखेटदेवपूजादिकेलिसगीतकर्मसु । अभ्यासयोगाद या वृद्धिं याति साऽऽभ्यासिकी मता ॥"(४ । २५–२८) इति । ५ 'विषयजातैः' आ. पु. ।

६ रतिरहस्येऽपि–"आखेटके शिल्पविधौ च नृत्येऽप्यभ्यासयोगादुपचीयते या । वीणास्वनाद्यैर्विषयैर्बुधास्तामाभ्यासिकीं प्रीतिमुदाहरन्ति ॥" (५।५) इति ।

याऽनभ्यस्ते कर्माणि पूर्वं विषयस्वरूपतो भिन्ना।
संकल्पोत्था प्रीतिर्ज्ञेया सा चाभिमानेन ॥७६॥
सा चौपरिष्टके[1] स्यात् स्त्रीणामथवा तृतीयप्रकृतेः[2]।
एवं च चुम्बनादिषु विज्ञेया कर्मसु प्रकटम् ॥७७॥
अन्यस्मिन्नाऽन्योऽयं[3] यत्र च भवतीह कारणं प्रीतेः।
तन्त्रज्ञैः सा कथिता संप्रत्ययलक्षणा प्रीतिः ॥७८॥
शब्दादिविषयजाता या प्रत्यक्षाऽस्ति लोकतः सिद्धा।
प्रीतिः सा विषयोत्था कथिता तज्ज्ञैश्चतुर्थीयम् ॥७९॥
एतत्प्रीतौ हेतुः प्रीतिपदेनाभिधीयते[4] कस्मात्।
इति चेन्न[5] लक्षणायाः शक्तेरिव तत्र बीजत्वात् ॥८०॥
सम्बन्धोऽत्र च बीजं तादर्थ्यं तत्फले शक्तिः।
एवं चतुर्विधैषा प्रीतिर्मुख्याधिका नैव ॥८१॥
एता ज्ञात्वा प्रीतीः कारणभेदेन शास्त्रतो भिन्नाः।
अभिवाञ्छन्नभिवृद्धिं कारणवृद्धिं समातनुयात् ॥८२॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनाऽनुसृते।
सांयोगिकेऽधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥८३॥



---

१ भगे लिङ्गेन यत्कर्म तन्मुखे क्रियमाणमौपरिष्टकम् (मुखरतमिति यावत्)।

२ नपुंसकस्येत्यर्थः। अस्यैवाऽधिकरणस्य नवमेऽध्याये एष विषयः प्रपञ्चयिष्यते। मुखचपलाः स्त्रियोऽप्यौपरिष्टकेनाभ्यस्तेनाऽऽभिमानिकीं (रागसंकल्पवशान्मानसीं) प्रीतिं लभन्ते। औपरिष्टकप्रयोक्ता पुरुषस्तु पुनः पुनः कायिकीं विषयप्रीतिं प्राप्नोति। चुम्बनालिङ्गननखरदनच्छेद्यप्रहणनेषु त्वनभ्यस्तेष्वपि रतिकाले तत्र तत्र स्थाने प्रयुज्यमानेषु उभयोः (प्रयोक्तृप्रयोज्ययोः नायकनायिकयोः) अपि रागसंकल्पवशान्मानसी एव प्रीतिर्न तु कायिकी।

३ 'अन्यस्मिन्नन्योन्यम्' ख.। रतिरहस्येऽपि—"सादृश्यतोऽन्यस्य भवेत् कचिद् या तां प्रत्ययोत्थां कथयन्ति धीराः।" (५।७) इति। "स्त्रियाः पुरुषस्य वा वल्लभजनसदृशजनं दृष्ट्वा या प्रीतिर्जायते तां प्रीतिं धीराः प्रत्ययोत्थां विश्वासजातां कथयन्ति।" इति तट्टीकायां काञ्चीनाथः।

४ प्रीतिहेतोः प्रीतिपदेन कथनं तादर्थ्यसम्बन्धलक्षणया बोध्यमिति भावः।

५ 'चेत्तु' ख.

# अथ द्वितीयोऽध्यायः।

एतद्द्वितीयमधुनाऽध्यायं व्याख्यातदोर्द्वयः समरे।
व्याख्याति वीरभद्रो भद्रतरो राजवर्गेषु ॥ १ ॥
अष्ट विकल्पा अष्टावालिङ्गनचुम्बनादयः कथिताः।
अष्टाष्टतैक[1]तायां भवति चतुःषष्टिरित्येके ॥ २ ॥
प्रायोवादं कथयति भेदाधिक्यात्तथाऽल्पतावशतः।
चित्ररतादिनिवेशात् सूत्रे वात्स्यायनाचार्यः ॥ ३ ॥
[2]बलिपञ्चवर्णतावत् सप्तच्छदताप्रयोगवद् वृत्ते।
असमशरागमवेत्ता प्रकृतचतुःषष्ठिशब्दस्य ॥ ४ ॥
[3]तावत्य (त्योऽ) स्मिञ्छास्त्रे प्रकरणसंख्यात (स्त) तश्चतुःषष्टिः।
इत्येके[4] आचार्या आहुरतोऽन्येऽन्यथा प्राहुः ॥ ५ ॥
तावत्संख्या गदिताः कला इहाऽङ्गं हि संप्रयोगस्य।
इति मतमेषामुदितं विदुषा श्रीवीरभद्रेण ॥ ६ ॥
[5]असमागतयोः प्रीतौ लिङ्गस्य द्योतनं समुद्दिश्य।

---

१ 'अष्टाष्टैकतायां' इति पाठ उचितः स्पष्टार्थत्वात्, सूत्रस्थपाठेन संवादाच्च। "अष्टानामष्टधा विकल्पभेदादष्टावष्टकाश्चतुःषष्टिः—" इति सूत्रस्थः पाठः।

२ 'कामे च पञ्चशरवत् ' ख.।

३ अयं क. पुस्तकानुसारी पाठः। 'एतावन्तो' आ. पु. 'तावन्त्यो' ख. 'एतावत्यो' ग.।

४ छन्दोभङ्गभयात् सन्धिर्न कृतः।

५ "आदौ रतं बाह्यमिह प्रयोज्य तत्रापि चाऽऽलिङ्गनमेव पूर्वम्।" (५।२६र.र.) इत्युक्तदिशा आलिङ्गनपूर्वकत्वात् चुम्बनादिबाह्यरतभेदानामालिङ्गनमादौ वर्ण्यते। तत् समयविशेषे अवस्थाविशेषे च प्रयुक्तं विशेषेण सुखदम्। यथोदाहृतवान् कुमारसंभव (८।२४) विवरणे नारायणपण्डितः—"कोपप्रशमने भीतौ वियोगे पुनरागमे। संभोगे च समाश्लेषो विशेषेण सुखावहः॥" इति॥ तच्च असमागतयोः (अजातसंभोगयोः) समागतयोश्चेति पूर्वं द्विविधम्। आद्यस्य भेदाः स्पृष्टकादयश्चत्वारः, अन्त्यस्य च लतावेष्टितकादयोऽष्टौ।

आलिङ्गनं चतुर्विधमुक्तं बाह्ये रते प्रथमम् ॥ ७ ॥
तत्र स्पृष्टकमाद्यं विद्धकमुक्तं ततः पुनः परतः ।
उद्घृष्टकपीडितके ततः परे[1]ऽन्वर्थता[2] चैषाम् ॥ ८ ॥
स्थि[3]तमुपविष्टं यदि वा विजने प्रेयांसमुद्दिश्य ।
विध्येत् कुचेन किञ्चिन्मृगनयना गृह्णती वस्तु ॥ ९ ॥

---

१ अत्र सन्धिः प्रमादकृतः । 'परे' इत्यस्य द्विवचनान्तत्वेन "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रेण प्रगृह्यसंज्ञायाम् "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रेण प्रकृतिभावस्योचितत्वात् । अस्मद्गुरुचरणानां ( महामहोपाध्यायश्रीशिवदत्तशर्मदाधिमथानां ) सिद्धान्तानुसारं त्वयं सन्धिर्नाऽसाधुः । तथाहि—"सर्वत्र विभाषा गोः" इत्यतो विभाषापदाऽनुवृत्तेः "इन्द्रे च" इत्यत्रैव निवृत्तत्वात्, विनापि नित्यपदम् "आद्गुणः" इत्यादिविधीनां वैकल्पिकत्वाभावस्य व्याख्यानेनैव निर्णयाच्च "प्लुतप्रगृह्या अचि नित्यम्" इत्यत्र नित्यपदम् 'नित्यप्रहसितो नित्यप्रजल्पितः' इत्यत्रेव प्रायःपदसमानार्थकमेवेति प्रकृतिभावस्य नित्यपदेन प्रायिकत्वबोधनात्तदप्रवृत्तौ 'परेऽन्वर्थताम्' इत्यत्र सन्धौ न कोऽपि दोषः । एवं च "दम्पतीव क्रतुविदा जनेषु" इति (२ मं०, ३९ सू०, २ य) मन्त्रस्य पदपाठे 'दम्पतीऽइवेति दम्पतीव' इति इवशब्देन पदविभागः व्याख्यातो भवति । ततश्च उक्तपदपाठेन विरोधापत्त्या 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इत्यादिमहाभारतपद्यगतस्य 'मणीव' इति प्रयोगस्य "मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः" इति दीक्षितैरुक्तः समाधिश्चिन्त्य इति ध्येयम् ।

२ स्पर्शनात् स्पृष्टकम्, व्यधनाद् विद्धकम्, उद्घर्षणात् उद्घृष्टकम्, पीडनाच्च पीडितकमित्यनुगतार्था एषां संज्ञा इत्यर्थः ।

३ इतः पूर्वं स्पृष्टकं लक्षयितुमुचितं न लक्षितम् । स्पष्टत्वादुपेक्षितं भवेत् । अथवा अत्रत्यस्तल्लक्षणश्लोकः त्रुटितो भवेत् । तल्लक्षणं यथा—"संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम्" इति सूत्रे । रतिरहस्येऽपि "यद्योषितः संमुखमागताया अन्यपदेशाद् व्रजतो नरस्य । गात्रेण गात्रं घटते रतज्ञा आलिङ्गनं स्पृष्टकमेतदाहुः ॥" ( ६।१ ) इति । "स तत्कुचस्पृष्टकचेष्टिदोर्लताचलद्दलाभव्यजनानिलाकुलः" ( १६।६३ ) इति, "यस्मिन्नलस्पृष्टकमेत्य हृष्टा भूयोऽपि तं देशमगान्मृगाक्षी ।" ( ६।३५ ) इति च नैषधचरिते वर्णितमेतत् ।

तामवपीड्य युवाऽपि च गृह्णीयाद् विद्धकं भवेदेतत्।
अनतिप्रवृत्तवचसोरुभयविधं कथ्यते चैतत्॥ १०॥

जनसंबाधे तिमिरे विगतजने वाऽथ गच्छतोः शनकैः।
अङ्गानां विनिघृष्टिर्निगदितमुद्घृष्टकं विबुधैः॥ ११॥

कुड्यादौ पीडनतः पीडितकं कथ्यते विबुधैः।
द्विविधमिदं ज्ञातायामन्योन्यस्याऽऽकृतौ भवति॥ १२॥

चत्वारि संप्रयोगे शालं[1] लतिकेव समभ्यगावेष्ट्य।
पतिमवनमयति चुम्बितुमस्य मुखाम्भोरुहं यदि वा॥ १३॥

उद्धृत्य[2] मन्दसीत्कृतरुचिरा तत्र प्रतिष्ठितं किमपि।
रमणीयत्वं पश्यति भवति लतावेष्टितं[3] तत्तु॥ १४॥

---

१ 'शालम्' ख. 'संप्रयोगेणाऽऽत्तम्' आ. पु., क., ग.।

२ 'उद्वृत्य' ग.।

३ इदम् (अनङ्गरङ्गपञ्चसायकयोः) 'वल्लरि (री) वेष्टितम्' इत्यपि ख्यातम्। अस्य वृक्षाधिरूढस्य च लक्षणमन्यत्रान्यथाप्युपलभ्यते। तच्चोदाहृतवान्–"क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढं विदुषी किमस्याः। अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम्॥" इति (७।९७) नैषधचरितपद्यव्याख्याने नारायणः—"बाहुभ्यां कण्ठमालिङ्ग्य कामिनी कान्त उत्थिते। अङ्कमारोहते यस्य वृक्षारूढः स उच्यते॥ उपविष्टं प्रियं कान्ता सुप्ता वेष्टयते यदि। तल्लतावेष्टितं ज्ञेयं कामानुभववेदिभिः॥" इति, "अस्योल्लसत्कुसुमवासनभृङ्गपङ्क्तिवेणीलतं मणितटेषु रतिं वितन्वत्। वल्लीपुरन्ध्रिपटलं घटिताभिराममृक्षाधिरूढकमुपैति परामभिख्याम्॥" (५।३३) इति हरविजयपद्यटीकायामलकसूरिश्च "आक्रम्य पादं चरणेन पत्युरूरुं द्वितीयेन समाश्रयन्ती। तत्पृष्ठसंसक्तभुजाऽपरेण दोष्णाऽसमस्य स्फुटमञ्चयन्ती॥ किञ्चिच्च खिन्नश्वसितं रुतानि वितन्वती चुम्बनलालसैव। ईहेत यद्वृक्षमिवाधिरोढुं वृक्षाधिरूढं तमिहामनन्ति॥" इति।

चरणेन चरणमादायाऽऽक्रम्याऽनेन योरुमेतस्य[1]।
आवेष्ट्य चैकबाहुः (हुं) पृष्ठेऽसं[2] चावनम्यैव ॥ १५ ॥
भुजशुभलतयाऽपरया रचितान्तःस्वल्पकूजितश्वसिता।
यच्चुम्बितुमधिरोहति कथितं वृक्षाधिरूढं तत् ॥ १६ ॥
एतद्द्वितयमुदाहृतमूर्ध्वस्थितकर्म कामकर्मज्ञैः।
अधुना तिलतण्डुलकं लक्षणतः कथ्यते ज्ञात्वा ॥ १७ ॥
बाह्वोरूर्वोरथवा व्यत्यासाद् यत्र सस्वजाते (संस्वजेते) तत्।
उदितं शयनस्थितयोरतिसंघटनेन तद्विज्ञैः ॥ १८ ॥
[5]रागान्धावनपेक्षितविगमौ वपुषो यदा स्फुटं कुरुतः।
आलिङ्गनं तदुक्तं क्षीरजलं कामशास्त्रेषु ॥ १९ ॥
उत्सङ्गेऽनुगतायामथवा शयने निजाभिमुख्येन।
यत्रोद्भटतररागावनपेक्षितविग्रहापगमौ ॥ २० ॥
अन्योन्यं विशत इव क्षीर[6]जलं तन्निगद्यते विबुधैः।

१ 'यान्यमेतस्य' ख.। २ 'सन्धावनम्यैव' ख.। ३ 'संस्वजेते' इति पाठ उचितः।

४ तिलतण्डुलकम्—"ऊरुभुजानां तनुस्थानां तिलतण्डुलानामिवोर्ध्वरिथ या संमिश्रणात्" (ज.मं.) अन्वर्थसंज्ञम्। (सर्वेषामालिङ्गनानामन्वर्था एव संज्ञाः)

५ मन्ये ग्रन्थकृत् इमं श्लोकं निर्माय, एतेन चाऽशेषतो विवक्षितभावसंपूर्त्यभावमाकलय्याग्रिममर्धत्रयं विवक्षितस्पष्टीकरणाय निर्ममे इत्येतन्निबन्धनैवैषा पुनरुक्तिः।

६ "एवमुक्तं भवति प्राणेश्वरीमभिमुखमङ्के तल्पे वा निवेश्य दृढमालिङ्ग्य ध्वजेन गुह्यस्पर्शं कुर्वन् दयितः, बहिरूरू नायकोत्सङ्गे विन्यस्य उपविष्टा अबला, उभावेव दम्पती प्रमाणवेगान् ज्ञात्वाऽन्योन्यशरीरान्तःप्रविष्टाविव तिष्ठतश्चेत्तदालिङ्गनं क्षीरनीरमित्युच्यते। एकीभावापन्नत्वात्—" (६।९ र. र. टी. काञ्चीनाथः)। "बाहुयन्त्रेणातिपीडनान्मृत्पिण्डाविव क्षीरोदकवच्च तादात्म्यं प्रतिपद्येते इव। यथोक्तम् 'भावासक्ताः कामुकाः कामिनीनामिच्छन्त्यङ्गेष्वम्भसीव प्रवेष्टुम्।' इति।" (ज. मं.)। इदमन्यत्र 'क्षीरनीरम्' 'दुग्धनीरम्' 'दुग्धजलकम्' इत्यपि भाषितम्।

राग[1]क्षणे तदुभयं चत्वारो बाभ्रवीयानाम् ॥ २१ ॥
ऊरूपगूहनं स्यात् सर्वप्रा[2]णं निपीडयेद् यत्र ।
तत्संदं[3]शादूरू यदि वोरुं कस्याचित् पत्ते ॥ २२ ॥
प्रविकीर्णकेशहस्ता कृत्वा जघनेन जघनदृढयोगम् ।
नखरदशनाभिघातं चुम्बनमथवा समुद्दिश्य ॥ २३ ॥
उल्लङ्घयेदुपरि यत्तत्खलु जघ[4]नोपगूहनं कथितम् ।
कुचयुग्मकेन वक्षसि संविष्टा[5]ऽऽवे[6]शयेद् भावम् ॥ २४ ॥

---

१ रागकाल । "संप्रयोगकालविशेषश्च रागकालः । यत्र पुंसः स्थिरलिङ्गता, स्त्रियाश्च क्लिन्नसंबाधता । तत्र यन्त्रयोगात् प्राग् यथोक्तमालिङ्गनम्" (ज. मं.) प्रयोज्यते।

२ 'प्राणान्नि'—ख.। सर्वप्राणमिति क्रियाविशेषणम् । सर्वबलेनेत्यर्थः । "अतिपीडनं हि मांसस्थानेऽत्यन्तमुपकारि स्यात्" (ज. मं.) इतीदमूरूपगूहनम्, वक्ष्यमाणं जघनोपगूहनं स्तनालिङ्गनं च पार्श्वसुप्तेन पुंसा, स्त्रिया, उभयेन वा प्रयोज्यम् । "यस्योरुस्थलमतिविपुलं स प्रयोक्तेति केचित् ।" (ज. मं.) । इदमन्यत्र 'ऊरूपगूढम्' इत्युक्तम् ।

३ "संदंशो नाम एकस्योपरि एकस्य निधानम्,......एवमुक्तं भवति पुमानात्मोरुमध्ये अबलाया ऊरू प्रवेश्य यद्यालिङ्गति तदूरूपगूढं कथितम् ।" इति (र. र. टी. काञ्चीनाथः)।

४ इदम् 'जघनोपश्लेषः' (र. र. ६ । ११) 'जघनोपगूहम्' (ना. स. २४।७) 'जाघनम्' (अ. रं. ६।६) इत्यपि ख्यातम् । उल्लङ्घयेदुपरि=नायकस्योपरि तिष्ठेदित्यर्थः। इदं विपुलजघनया स्त्रिया "पार्श्वशयनेन वराङ्गेण साधनं वाडवकेनावपीड्य" (ज. मं.) निर्वर्त्यते। (वाडवकं नाम संवेशनप्रकारविशेषः । स च अस्य ग्रन्थस्य अस्मिन्नेवाधिकरणे षष्ठेऽध्याये १५ श्लोके वर्णितः)

५ 'सुनिविष्टा—' ख.

६ 'भारमारोपयेत्' इति सूत्रे च पाठः । 'भावमावेशयेत्' इति च तत्रैव पाठान्तरम्। 'आरोपयेद् भारम्' इति ख.पुस्तकस्थ पाठ आदरणीयः स्पष्टार्थत्वाद् ग्रंथान्तरसंवादाच्च । तथाहि- "उरसि कमितुरुच्चैराविशन्ती वराङ्गी स्तनभरमुपधत्ते यत् स्तनालिङ्गनं तत् ।" इति (र. र. ६। १२) "दध्यादुरःस्थितभरं कुचयुग्ममुच्चैस्तन्व्यास्तदा प्रकथयन्ति कुचोपगूढम्।" इति (ना. स. २४।८)।

तत्रैव तन्नियुक्तं[1] स्तनयुगलाम्भोजगूहनं[2] विबुधैः ।
प्रोक्ता[3] ललाटिकाऽसौ[4] हन्याद् भालस्थलं तेन ॥ २५ ॥
विनिधाय वक्त्रकमले वक्त्रं नयने दृगब्जयोर्यत्र[5] ।
एकाङ्गालिङ्गनमिदमुक्तमिहोर्वादि[6] कुत्रापि ॥२६॥
संवाहनमुपगूहनभेदं कथयन्ति केचनाऽऽचार्याः ।
संस्पर्शत्वात् काले भेदादेवं फले चैव ॥२७॥

---

१ 'तन्निरुक्तम्' क. ग. ।

२ इदं 'स्तनालिङ्गनम्' (सूत्रे रतिरहस्ये च), 'कुचोपगूढम्' (ना. स.) "कण्ठसूत्रम्' (इत्यन्यत्र)। यथा रघुवंशे (१९।३२) "तस्य निर्दयपरिश्रमालसाः कण्ठसूत्रमपदिश्य योषितः। अध्यशेरत बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम् ॥" इति । अत्राह मल्लिनाथः—"कण्ठसूत्रमालिङ्गनविशेषम्......। कण्ठसूत्रलक्षणं तु—'यत्कुर्वते वक्षसि वल्लभस्य स्तनाभिघातं निबिडोपगूहात्। परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्रं प्रवदन्ति सन्तः॥' इदमेव रतिरहस्ये स्तनालिङ्गनमित्युक्तम्।"इति। इदम् "आसने पार्श्वशयने वा (स्त्रिया) पृष्ठभागं निम्नीकृत्य स्तनाभ्यां नायकोरःस्थलं प्रविश्य" (ज.मं.) निर्वर्त्यते। "एवं हि नायकः स्तनभाराक्रान्तो पिण्डीकृतमिवोरसि स्पर्शसुखमनुभवति।" (ज. मं.)

३ 'युक्ते' ख.।

४ 'ललाटिके' ख.। अस्यालिङ्गनस्य रतिरहस्यादिषु 'लालाटिकम्' इति संज्ञा। "......ललाटे ललाटं द्विस्त्रिराहत्य तत्रैव भारमारोपयेदित्येवाऽस्य नायिका प्रयोक्त्री। तेन ललाटिका (ललाटभूषणम्) इव ललाटिका। नायकललाटस्य संक्रान्तिविशेषेणालङ्क्रियमाणत्वात्।" इति जयमङ्गलाकर्तुः, एतद्ग्रंथकर्तुः, रतिरहस्यकर्तुश्च (६।१२) मते इदमालिङ्गनं नायिकयैव प्रयोज्यम्। (ना. स. २४।८–९) नागरसर्वस्वकर्तुर्मते नायकेनैव प्रयोज्यम्। (अ. रं. ९।५) अनङ्गरङ्गकर्तुर्मते च उभयेनैव प्रयोज्यम्।

५ 'यत्तत्' ख.। ६ ऊरूपगूहनादीत्यर्थः।

साधारण्यवियोगादालिङ्गनतः पृथक्तया मनुते ।
संवाहनं सरागमवेत्ता वात्स्यायनाचार्यः ॥२८॥
आकर्णयन्ति ये वा ये वा कथयन्ति पृच्छन्ति ।
आलिङ्गनविधिमखिलं भवति रिरंसा परा तेषाम् ॥२९॥
अन्येऽपि रागशक्ताः संयोगा ये ह्यसूत्रितास्तेऽपि ।
आदरतोऽत्र विधेया नित्यं सांयोगिके कृत्ये ॥३०॥

तावच्छास्त्रक्रमयोर्लोके भूयानिहाऽऽदरो भवति ।
यावन्मन्दरसानां नैव नराणां रतिप्रचयः ॥३१॥
रागामृतप्रवाहे पतिततया ये पुनः पराधीनाः ।
तेषां शास्त्रक्रमयोस्तटयोरारोहणं कुत्र ॥३२॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे रचितोऽध्यायो द्वितीयोऽसौ ॥३३॥

## अथ तृतीयोऽध्यायः ।

अधुना तृतीयमर्थैर्योजयितुं जातनिर्भरोद्योगः ।
जयति जितारिवधूजनगीतयशा वीरभद्रोऽसौ ॥१॥
नेष्टं पौर्वापर्यं चुम्बननखदशनकर्मणां शास्त्रे ।
युगपद् वा क्रमतो वा जायन्ते रागयोगेन ॥२॥
संयोगात् प्रागेषां प्राधान्ये स्यात् प्रयोगस्तु ।
प्रहणनसीत्कृतियोगः संयोगे केचिदित्याहुः ॥३॥

---

१ अन्येऽपि स्वेच्छयोत्प्रेक्षिता रागवर्धनसमर्थाः संयोगा आलिङ्गनानि। एवम् "अन्यत्र पक्षिजातिकृत्यमनुसृत्य हंसपारावताद्यालिङ्गनान्युक्तानि; आमोदादिनिमित्तान्यधिकृत्य आमोदादीनि सप्त, एवं भयालिङ्गनं स्त्रीप्रयुक्तमप्येकम्।" ( नागरसर्वस्वटिप्पणी) इत्यपि ज्ञेयम् ।

२ '–मर्थै' ख.।

सर्वं सर्वत्र भवेद् रागस्यापेक्षितत्वतस्तत्त्वम् ।
वात्स्यायन इति कथयति तेषु विकल्पो रते प्रथमे ॥४॥
अव्यक्तित्वमितत्वे[1] रागादेवं स्वभावमर्यादा ।
अत्वरितत्वं व्यक्तिः समुच्चयश्चाग्रतः प्रोक्तः ॥५॥
संधुक्षणमेवं सति रागकृशानोस्तादिन्धनैर्भवति ।
अधुना विविच्य कथयति चुम्बनदेशान् स्मरस्मेरः ॥ ६ ॥
ओष्ठान्तवक्त्रकक्षावक्षःस्तनभालदेशगलगण्डाः[2] ।
नाभेर्मूले सन्धावूर्वोरपि लाटजातानाम् ॥ ७ ॥

---

१ 'अव्यक्तिस्त्वरित्वम्' ख.। 'अत्वरितत्वं व्यक्तिः' इत्युक्त्येतदनुसारम्' अव्यक्तित्वम्= त्वरितत्वम्, मितत्वम् = मन्दत्वम् । रागानुसारमिदं ज्ञेयम् । आरम्भकाले हि मन्दो रागः । ततश्च मध्यस्थचित्तता, नातिसहिष्णुता चेति तदनुरूपं मन्द एव चुम्बनादीनां प्रयोगः । आरम्भादुत्तरकाले च समधिको रागयोगः शरीरे च निरपेक्षत्वमिति तदा तदनुरूपमतित्वरया तेषां प्रयोगः । एवं कृते क्रमेण रागो वर्धते । अन्यथा तं विच्छिन्नरसं स्यात् । एवं यदा नायिकाया विश्वासनार्थमुपक्रमस्तदा क्रमेणैव चुम्बनादीनां प्रयोगः। उत्तरोत्तरस्याधिक्यात्,सहसा प्रयोक्तुमशक्यत्वाच्च—इति तत्रास्त्येवैषां पौर्वापर्यम् । परस्परोपगतविश्वासयोस्तु नायिकानायकयोर्नैषां पौर्वापर्यम् । तदा तु क्रमतोऽक्रमत एकैकशः समुच्चितानि वा यथेच्छमेतानि प्रयोक्तुं शक्यन्त इति ध्येयम् ।

२ इदं न सूत्रानुसारि । "ललाटालककपोलनयनवक्षःस्तनोष्ठान्तर्मुखेषु चुम्बनम् । ऊरुसन्धिबाहुनाभिमूलयोर्लाटानाम् ।" इति सूत्रे बाहुमूलस्य (कक्षयोः) लाटदेश्यानां चुम्बनस्थानत्वेनोक्तिः । अत्र तु साधारणचुम्बनस्थानेषु तत्संग्रहः। सूत्रोक्तनयनालकसंग्रहोऽत्र न कृतः। ('ओष्ठाक्षि' इति ख. पुस्तकपाठे त्वक्षिग्रहणं दृश्यते ) गलस्य च सूत्रानुक्तस्यापि संग्रहः । "ओष्ठौ वक्त्रान्तःस्तनवक्षोनयनालकांलिकं गण्डौ । उरुसन्धौ भुजनाभ्योर्मूलेऽपि च लाटजातानाम् ॥" इति पाठे कृते तु सूत्रानुसारित्वं सम्पद्यते। उरुसन्धिर्वङ्क्षणम्। भुजमूलं कक्षौ। नाभिमूलं वराङ्गम्। रतिरहस्यानङ्गरङ्गयोरपि सूत्रतो भेदः।"नयनगलकपोलं दन्तवासो मुखान्तः स्तनयुगलललाटं चुम्बनस्थानमाहुः ।" इति रतिरहस्ये (७।१)। "अधराक्षिकपोलमस्तकं

**रागवशाद्देशवशाद्देशाः केचिच्च चुम्बने कथिताः[1]।**
**सर्वजनानां नैवं वात्स्यायनभाषितेनैतत् ॥ ८ ॥**
**कन्याचुम्बनमुक्तं निमितं स्फुरितं तथा च घट्टितकम्।**
**तत्र बलेन नियुक्ता वदने वदनं यदा धत्ते ॥ ९ ॥**
**निश्चेष्टा तत्कथितं निमितं[2] वदने प्रवेशितं चोष्ठम्।**

वदनान्तः स्तनयुग्मकन्धरे। (चुम्बनस्थानानि)" इति अनङ्गरङ्गे (६।१०)। यद्यपि स्तनचुम्बनमद्यत्वेऽप्यनुचितं गर्हितं च मन्यते, तथापि पूर्वं तदादृतमासीदित्यत एव ज्ञायते। अत एव नैषधचरिते (१८।१०५) हर्षः स्तनचुम्बनं वर्णयामास "चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम्। प्राप भर्तुममृतैः सुधांशुना सक्तहाटकघटेन मित्रताम् ॥" इति। स्तने चूचुकं परिहृत्य चुम्बनं कार्यम्। चूचुकचुम्बनं क्रियमाणं हि जननीस्तनपानं स्मारयद् भावान्तरं जनयति सुरतरसविच्छेदकरम्—इति शिष्टसम्प्रदायः। यत्तु "अक्कपोलचिबुकाधरचक्षुश्चूचुकादिपरिचुम्बनदक्षः। कोऽपि कोपितवधूप्रतिषिद्धः सान्त्वयन्निव रतिं विरराज ॥" इति (१५।४९) धर्मशर्म्माभ्युदये चूचुकचुम्बनं वर्णितं तत्तु न सुरतसमयवर्ति किन्तु कोपितवधूकोपनिवृत्त्यर्थमेवेति बोध्यम्। स्तनचुम्बनं स्त्रीणां नितरामानन्दकं द्रावकञ्चेति केषाञ्चिदनुभवः। एवं कक्षानाभिचुम्बनं स्मरमन्दिरचुम्बनं चापि नैषधचरिते वर्णितम्—"स्वेन भावजनने स तु प्रियां बाहुमूलकुचनाभिचुम्बनैः। निर्ममे रतरहःसमापनाशर्मसारसमसंविभागिनीम् ॥" (१८।११६) इति। ("कक्षादेर्निरन्तरं कामाधिष्ठानत्वात्तच्चुम्बनैरुपायैः स्वस्य भावप्रातिसमये तामपि भावमजम्भयदिति भावः" इति तट्टीकायां नारायणः)।

"मुखादारभ्य नाभ्यन्तं चुम्बं चुम्बमतृप्तवान्।
न प्रापं चुम्बितुं यत्ते धन्या तच्चुम्बतु स्मृतिः ॥" (२०।९२) इति च।

(असमाप्तचुम्बनेच्छोऽतिरागात् स्मरमन्दिरमपि चुम्बितुं प्रवृत्तः पाण्यादिना प्रतिबन्धाल्लज्जातिशयाद्वा चुम्बितुं न प्रापं तत्स्मृतिविषयीभवतीति तदर्थः)। नयनचुम्बनं यथा—( हरविजये २७।२१) "प्रत्यूहितेक्षणसुखानुभवोत्सुकत्वकल्लोलितान्तरिततारकमक्षिबध्वाः। ताम्बूलपङ्करसरञ्जितकोटिभागरेखीभवद्घटितपक्ष्म चुचुम्ब कान्तः ॥" इति।

१ "रागवशादुद्देशाः केचिद् ये चुम्बने गदिताः" ल.। २ इदमनङ्गरङ्गे (६।१२) मिलितनाम्ना उक्तम्।

निजमोष्ठं स्पन्दयति ग्रहीतुमस्तोत्तरा[1] चैव ॥ १० ॥
एतत् स्फुरितकमाहुः[2] किञ्चित् परिगृह्य जिह्वयाऽग्रेण ।
घट्टयति मीलताक्षी नयनाऽऽवृतिकृत्[3] कराब्जेन ॥ ११ ॥
घट्टितकं[4] कथितं तत् सममथ तिर्यक् तथैव चोद्भ्रान्तम्[5] ।
पीडितमवपीडितामिति पञ्चाधरचुम्बनं प्रोक्तम् ॥ १२ ॥
आदायाङ्गुलिपुटतो यत्रोष्ठं चारु जिह्वयाऽग्रेण ।
घट्टयति निर्दशनतः पीडनतः पञ्चमं[6] प्रोक्तम् ॥ १३ ॥
नैतु लक्षणमन्येषां कथितं श्रीवीरभद्रदेवेन ।
वात्स्यायनसूत्राणामेव व्याख्या यतः कार्या ॥ १४ ॥
द्यूतं प्रवर्तयेदिह[8] जितमेतत् स्यात्पुरोष्ठपातेन ( पानेन ) ।

१ 'मस्त्यात्तर चैव' ख. ।

२ इदमनङ्गरङ्गे किञ्चिद्भेदेन ( ९।१३ ) स्फुटिताख्यया भाषितम् ।

३ 'नयति कराग्रं कराग्रेण' ख. ।

४ इदमनङ्गरङ्गे ( ९।१४ ) 'लाटिकम्' इत्युक्तम् ।

५ इदं रतिरहस्ये (७।६) 'भ्रान्तम्' इत्युक्तम् । 'चोद्घातम्' ख. । 'पञ्चाधरचुम्बनम्' इत्यत्र पञ्चविधमधरचुम्बनमिति मध्यमपदलोपी समासः ।

६ अवपीडितकम् ।

७ जयमङ्गलायां समादीनि लक्षितानि "यत्सर्वमभिमुखं गृह्यते तत्समग्रहणम्। यत्साचीकृतेनोष्ठपुटेन सर्वं वर्तुलीकृत्य गृह्यते तत्तिर्यग्ग्रहणम् । यच्चिबुके शिरसि च गृहीत्वा मुखं भ्रमयित्वा गृह्यते तद्भ्रान्तम् ( तदुद्भ्रान्तम् ) । परस्पराधरग्रहणमित्यर्थः। तदेव त्रितयमवपीडितम् । अवपीड्य ग्रहणात् ।" इति ।

८ इह अधरचुम्बने अनुरागवर्धनार्थत्वात् । एवमालिङ्गनादावपि । यथा वर्णितम्— "परिरम्भणचुम्बनादिकं विजितं केलिदुरोदरे मया। वितराशुतरां तदद्य मे प्रिय निद्रास्यनृणः सुखीव किम् ॥" इति (बालभारते स्त्रीपर्वणि १ सर्गे) । "आश्लेषोऽधरदानं चुम्बनमनिमेषवीक्षणं सुरतम् । इत्येकैकपणेन क्रीडति मिथुनं जितान्योन्यम् ॥" इति ( सुन्दरीशतके ) तत्र जयपराजयफलत्वाद्द्यूतस्य लक्षणमाह—'जितम्' इत्यादिना । "आवयोः परस्परं चुम्बनयोर्येन प्रथमतोऽधरस्य ग्रहणविधिना समादानं कृतं तस्मिन् सति तेन जितम् ।" ( ज. मं.) इत्यर्थः ।

इति पणबन्धपुरःसरमत्र जितायां इदं कार्यम्[1] ॥ १५ ॥

सास्रविलोचनकमला धुनुयादेषां (षा) कराम्बुजे सहसा।
प्रणुदेदथ च दशेदपि तरसा परिवर्तयेच्चैव ॥ १६ ॥

बलतो हृते[2] च विवदेद् भूयो द्यूतं प्रवर्तयेत् सपणम्।
आयासं[3] द्विगुणं सा तत्र जिता दर्शयेदेवम् ॥ १७ ॥

दशनान्तर्गतमधरं कृत्वा विश्रब्धमत्तयो (मोष्ठयो) रपि च।
क्रोशेद्विहसेत्तर्जनमादरतश्चाचरेदेषा ॥ १८ ॥

विचलन्[4]नयनमुखाब्जा नर्तितसद्भ्रूलता लसत्सुषमा।
प्रहसन्ती शनकैरथ कथयेद् वाच्यानि रम्याणि[5] ॥ १९ ॥

प्रहणननखदशनाहतिकलहा[6] द्यूतेऽमुनैव संकथिताः।

---

१ द्यूतेऽन्यतरस्य जयेऽपरस्य कलहोऽवश्यं भावी तस्य कलहास्पदत्वात् इति कलहयोजनं रागोद्दीपनार्थमाह -जिताया इदं कार्यम्, इत्यादिना।

२ 'हृतेव' ख.। ३ अयं ग. पुस्तकानुसारी पाठः। आदर्शपुस्तके तु 'आयासं हि द्विगुणं सा' इति पाठः। स च छन्दोभङ्गावहत्वात्, हेरनर्थकत्वाच्च नादरणीयः।

४ अयं क. पुस्तकानुसारी पाठः। 'विलपन्नयन–' ख.। 'विलयन्नयन–' ग.।

५ तत्समयोचितानि रागवर्धनानीत्यर्थः। नायकोऽपि जेता जितो वा कलहनिवृत्तये तथा चेष्टेत। तथाहि जेता (नायकः) "दृढमधरमवपीडयन् ससीत्कृतं च शिरो धुनुयात्। नुदतीमुपसर्पेत्। दशन्तीं प्रतिदशेत्। परिवर्तमानां प्रतिनिवर्तयेत्। विवदमानां प्रतिविवदेत्। तेषु त्वयमपरः पण इतिपूर्वकमेव तावत्प्रयच्छेति च ब्रूयात्......जितोऽपि वैलक्ष्याद्विहसेत्। जितं जितं मयेत्युत्क्रोशन्त्या मिथ्या मिथ्येत्युत्क्रोशेत्, तर्जयन्तीं प्रतितर्जयेत्। वल्गन्तीं तद्गात्रसंयमेनन प्रतिवल्गयेत्। आह्वयन्तीं प्रत्याह्वयेत्। नृत्यन्तीं करतालिकया प्रतिनर्तयेत्। विहसन्तीं तानि तानि ब्रुवन्तीं तद्वचननिषेधार्थं प्रतिब्रूयादिति। यथा चोक्तम्—'जितो वा यदि वा जेता चुम्बनद्यूतकर्मणि। तस्या एव विचेष्टाभिः कलहं प्रतियोजयेत् ॥' इति।" (ज. मं.)

६ 'कलहद्यूते' आ. पु.।

एषां प्रयोगयोगो वेगाधिक्ये भवेद् यूनोः ॥ २० ॥

सात्म्यादप्यथ[1] कार्यश्चुम्बन्त्यामेव[2] चाम्बुजास्यायाम् ।

उपरितनोष्ठग्रहणे रागप्रदमुत्तरोष्ठं[3] स्यात् ॥ २१ ॥

ओष्ठाभ्यां संदंशादवगृह्योष्ठौ च चुम्बयेद्[4] यत्र ।

संपुटकं तत् स्त्रीणां व्यञ्जनरहितस्य पुंसोऽपि[5] ॥ २२ ॥

इतरोऽपि तत्र तस्या दशनं जिह्वाग्रतः सुखाद् घटयेत् ।

तालुगतां वा जिह्वामथवा जिह्वाद्वयं वापि[6] ॥ २३ ॥

---

१ 'सातत्यादथ' ख. ।

२ पूर्वमधरोष्ठचुम्बनविधिमुक्त्वाऽधुना उत्तरोष्ठचुम्बनविधिमाह–'चुम्बन्त्याम्–' इत्यादिना । नायिकायां नायकाधरं चुम्बन्त्यामेव नायकोऽप्यस्या उत्तरोष्ठं चुम्बेत् । इदं नायिकयाऽधरचुम्बने क्रियमाणे तत्प्रसङ्गादेव नायकेन क्रियते इति प्रासङ्गिकम् । सत्यधरे केवलमुत्तरोष्ठचुम्बनं तु नासिकापुटचुम्बनवद् ग्राम्यत्वान्न प्रयोक्तव्यम् । अजातश्मश्रुः पुरुषोऽप्यस्य प्रयोक्ता ।

३ इदं सूत्रे 'उत्तरचुम्बितम्' इत्युक्तम् । तथाच सूत्रम्–"तस्यां चुम्बन्त्यामप्युत्तरं गृह्णीयात् । इत्युत्तरचुम्बितम् ॥" इति । ( उत्तरम् = उत्तरोष्ठम् ) ग्रन्थकृता तु सूत्रस्य "तस्यां चुम्बन्त्यामेवोत्तरं गृह्णीयादित्युत्तरोष्ठं रागदीपनम् ।" इति वृत्तिकारसंमतः पाठोऽनुसृतः । रतिरहस्यादावपीदमुत्तरोष्ठसंज्ञयैव भाषितम् ।

४ अयं प्रयोगः स्त्रार्थणयन्तो बोध्यः ।

५ '–रहितस्य पुरुषोऽपि' आ. पु. ।

६ संपुटचुम्बनान्तर्गतमन्तर्मुखचुम्बनम् । तच्च जिह्वाग्रेण दशनान् घट्टयेदिति दशनचुम्बनम्, तालुगतां वा जिह्वाम्=तालुं जिह्वयोर्ध्वप्रसारितया घट्टयेदिति तालुचुम्बनम्, जिह्वाद्वयं वापि = जिह्वां वा ऋजुप्रसारितया जिह्वया चुम्बेदिति जिह्वाचुम्बनमिति त्रिविधम् । इदमेव जिह्वायुद्धमित्युच्यते । 'जिह्वाग्रलेहनम्, इति, 'रसनापानम्' इति चाप्यस्यैव संज्ञान्तरम् । वर्णितमिदं नैषधीयचरिते ( २०।७८ )—"प्रस्मृतं न तया तावद्यन्मोहनविमोहितः । अतृप्तोऽधरपानेषु रसनामपिबं तव ॥" इति ( प्रस्मृतं विस्मृतम् )

दानग्रहणे कथिते बलतो वदनाम्बुजन्मनोऽप्यस्मात्[1]।
स्थानविशेषाच्छेशे[2] चुम्बनदेशे चतुर्धा तत् ॥ २४ ॥
समपीडितमृदुभेदादञ्चितसहितात् प्रकीर्तितान्वर्थात्।
इति विस्तरतः कथितं चुम्बनमधरस्य चान्यस्य[3] ॥ २५ ॥
सुप्तस्य वदनविनिहितदृष्टेर्यच्चुम्बनं[4] भवेत् स्वरसात्।
तद् रागदीपनाख्याविख्यातं कामशास्त्रेषु ॥ २६ ॥
अनवहितात्रिवदमानौ स्वप्नाभिमुखो[5]ऽथवाऽन्यतोऽभिमुखः।
एते निद्राहतये चुम्ब्यन्ते[6] तद्भवेच्छलितम्[7] ॥ २७ ॥

१ अपि शब्दात् रदनानाम्। "एतेन बलाद्वदनरदनग्रहणं दानं च व्याख्यातम्।" इति सूत्रात्। "हठाद्वदनेन वदनस्य दशनैर्दशनानां ग्रहणे परस्परस्य युद्धमिति ग्रहणपूर्वकं वदनयुद्धं रदनयुद्धं च व्याख्यातम्। दानं चेति। एकश्चुम्बयितुं हठाद्वदनं ददाति ग्राहयितुं वा दशनानन्यो गृह्णातीत्युभयोर्ग्रहणादानपूर्वकं वदनयुद्धं रदनयुद्धं चेति।" (ज. मं.)

२ 'विशेषावेषे' इति ग.।

३ अन्यस्य अधरभिन्नस्य अन्तर्मुखभिन्नस्य च अङ्गस्य उरुसंध्यादेः। तद्यथा "तत्रोरुसंधिकक्षावक्षःसु समम्, न पीडितं नातिमृदु। तेन कपोलकक्षामूलनाभिमूलेषु पीडितम्। ललाटचिबुकयोः कक्षापर्यन्ते चुम्बनमञ्चितम्। ललाटे नयनयोर्मृदु स्पर्शमात्रकरणम्।" (ज. मं.) तदेवमेतानि समादीनि कर्मभेदादन्वर्थानि चुम्बनानि। साम्प्रतं पूर्वोक्ताश्चुम्बनभेदा एवावस्थाभेदान्नामान्तरं प्रतिपद्यन्त इत्याह सुप्तस्येत्यादिना। (वदनविनिहितदृष्टेः स्त्रियाः इति शेषः। स्वरसात् = स्वाभिप्रायात्)

४ 'यच्चेह चुम्बनं स्वरसात्' ख.।

५ स्वप्नाभिमुखः = निद्राभिमुखः सुषुप्सुरित्यर्थः।

६ निद्राव्याघातार्थमित्यर्थः। उपलक्षणमेतत्। तद्यथा—अनवहितः (अन्यत्र गीतालेख्यादिषु प्रसक्तः) अनवधानव्याघातार्थम्, विवदमानः विवादव्याघातार्थम्, स्वप्नाभिमुखः निद्राऽवेशव्याघातार्थम्, अन्यतोऽभिमुखश्चाऽन्यतो दृष्टिव्याघातार्थं चुम्ब्यते इति।

७ सूत्रे 'चलितकम्' इति पाठः। तत्रैव च 'छलितकम्' इति पाठान्तरम्। 'चालितकम्' इत्येव पाठो जयमङ्गलाकारस्य संमतः। यदाह सः—"प्रमादादिना नायकस्य चलनं चलितकम्। 'तत्करोति—' इति णिच्। तदन्ताच्च तयतीत्यच् ततः संज्ञायां कन्। चलितकम्" इति।

शयने यदा प्रसुप्तां[1] चिरकालादागतः पुरुषः।
चुम्बति तदा निरुक्तं शास्त्रेऽस्मिन् प्रातिबोधिकं विज्ञैः ॥२८॥
संलक्ष्येहा[2]ऽऽगमने कालं समानकामनातरला।
सा स्याच्छलप्रसुप्ता जिज्ञासुर्वास्य भावस्य ॥ २९ ॥
आकारदर्शनार्थं विषमशराकारचुम्बनाकारः।
आदर्शादौ[3] छायां परिचुम्बति नायकः[4] सुतनोः ॥३०॥
बालस्य प्रतिमायाश्चुम्बनमथ चित्रकर्मणः प्रोक्तम्।
आलिङ्गनश्च लोके संक्रान्तकमत्र सारज्ञैः ॥ ३१ ॥
प्रेक्षणके निशि यदि वा स्वजनसमाजे समीपयातस्य।
हस्ताङ्गुलि[5]परिचुम्बनमिह विज्ञेयं प्रयोज्यायाम्[6] ॥ ३२ ॥

१ आदर्शपुस्तके पुस्तकान्तरे च अस्य श्लोकस्य ('चुम्बति तदा—' इति पूर्वार्धम्, 'शयने यदा—' इति चोत्तरार्धम्—इत्येवम्) अर्धव्यत्यासेन पाठो विद्यते। स न मनोरमः। 'तदा' इत्यस्य पूर्वपरामर्शकत्वात्, परामृश्यमानस्य च पूर्वमनुक्तेः। प्रातिबोधिकम्=प्रतिबोधप्रयोजनम्। इदमेव रतिरहस्ये (७।८) 'प्रतिबोधम्', अनङ्गरङ्गे (९।१९) च 'प्रतिबोधसंज्ञम्' इत्युक्तम्।

२ इह प्रातिबोधिके चुम्बने इष्टे। कालम्=विलम्बम्।

३ आदिना कुड्ये दीपाद्यालोकयुक्ते (तत्र नायिकायाः छायावदने वदनं निदध्यात्), सलिले च।

४ अस्योपलक्षणार्थत्वान्नायिकापि प्रेयसः छायामाकारदर्शनार्थं (अनुरागसूचकमाकारं दर्शयितुम्) चुम्बति विशेषाभावात्। इदं सूत्रे 'छायाचुम्बनम्', रतिरहस्ये (७।८) च 'छायिकम्' इत्युक्तम्।

५ नायिकानां विशेषतो विवाहार्थमनुकूल्यमानानां बालानां नवोढानां च हस्तचुम्बनमनुरागप्रदर्शनार्थकम्, प्रतिष्ठितानां राज्ञीप्रभृतीनाश्च तम्मानप्रदर्शनार्थकमद्यत्वे यूरोपदेश्येषु नितरां प्रचरितमास्ते।

६ प्रयोज्यायाम्=चुम्बनप्रयोगविषयभूतायां नायिकायाम्। अस्योपलक्षणार्थत्वात् प्रयोज्ये नायकेऽपि। तेन "हस्ताङ्गुलिचुम्बनस्य द्वावपि प्रयोक्तारौ। पादाङ्गुलिचुम्बनस्य तु नायिकैव न नरः गर्हितत्वात्।" (ज. मं.)।

संविष्टस्य[1] पदाङ्गुलिचुम्बनकमेवमेव विज्ञेयम्।
नायककामा[2] कुरुते निद्राव्याजेन तस्योरौ ॥ ३३ ॥
संवाहिका वि (नि[3]) धानं वदनसुधांशोर्यदा तदा कथितम्।
चुम्बनमूरुपदोत्तरमङ्घ्र्यङ्गुष्ठस्य चैव स्यात् ॥ ३४ ॥
इति चुम्बनानि कतिचित् कथितान्येवाभियोगिकानीह।
एवं चुम्बनभेदा विज्ञेयाः कामशास्त्रेण ॥ ३५ ॥
कुर्यात् कृते प्रतिकृतं[5] प्रतिताडितमाचरेत्तत्र[6]।
चुम्बितके प्रतिचुम्बनमिह करणेनाचरेत्तेन ॥ ३६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
सांयोगिकेऽधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ ३७ ॥



---

१ संविष्टस्य = शयितस्य। २ 'कामान्' ख.। ३ 'संवाहिकाऽभिधानम्' ख.। संवाहिकसंज्ञकं तच्चुम्बनमिति तदर्थः।

४ "एतान्यङ्गुलिचुम्बनादीनि स्पृष्टकादिना असोढगात्रसंस्पर्शयोरनतिप्रवृत्तसंभाषणयोरसमागतयोः।" (ज. मं.)। ५ 'प्रतिहतम्' आ. पु. ग.।

६ तत्र = ताडिते। तच्छब्देनात्र बुद्धिस्थं ताडितं परामृश्यते। सांप्रयोगिकं ताडितचुम्बितादि प्रयोक्ता येनैव करणेन (कर्मभेदेन यथास्थानमत्रैव ग्रंथे लक्षितेन) प्रयुङ्क्ते, प्रयोज्यः तेनैव करणेन प्रतिताडितप्रतिचुम्बितादि प्रयोजयेत्। अन्यथा अन्यतरः संप्रयोगे स्तम्भमिवैनं मन्यमानो निर्वेदमापद्यते। ततश्च निकृष्टः संप्रयोगः। एवमभियोगे कारयितुमिष्टे प्रयोक्ता तदर्थके चुम्बनादौ कृते प्रतिचुम्बनादौ चाऽलब्धे पशुमिव प्रयोज्यं परिभवेत्। ततश्च समागमो न सिध्येदिति ध्येयम्॥

# अथ चतुर्थोऽध्यायः।

अथ यततेऽध्यायेऽसौ सार्थग (क)[१] तायै चतुर्थताभाजि।
यस्य वदान्यतयाऽन्यः सदृशः कल्पद्रुमान्नास्ति ॥ १ ॥

अथ कथयति नखभेदान् कथितान् वात्स्यायनीयसूत्रेण।
आलिङ्गनप्रभेदांश्चुम्बनभेदान् विनिर्णीय ॥ २ ॥

संघर्षात्मकमुक्तं रागाधिक्ये विलेखनं नखतः।
प्रथमसमागमसमयः समयस्तस्यादिमः प्रोक्तः ॥ ३ ॥

गमन[२]प्रत्यागमयो रोषापमे तथा प्रमादे[३] च।
नित्यमचण्डे वेगे यूनोरेतन्न संभवति ॥ ४ ॥

एते नखहतिसमयाः समयादसमेषुशासनानुसृतेः।

---

१ 'सार्थकतायै' ख.। अयमेव पाठ उचितः।

२ प्रवासगमने प्रवासप्रत्यागमने चेत्यर्थः।

३ प्रमादे नखविलेखनविधिर्न कुत्रापि दृश्यते। तस्मात् प्रमादशब्दोऽत्र मदार्थ एव प्रयुक्तो भवेत्। सूत्रे 'मत्तायाम्' इति, रतिरहस्यादौ 'मदे' इति च दर्शनात्। संघर्षात्मकं नखविलेखनं रागवृद्धौ सत्यामेव विधीयते। तत्र चाधिकाधिका स्फूर्तिरेव, नतु तद्विषये प्रमादस्य लेशोऽपीति तत्र प्रमादे नखविलेखनविधेरर्थं न पश्यामः। तत्र तुदनं मन्दे रागे नखाग्रेण। प्रवृद्धे तु नखच्छेद्यप्रयोगः। प्रथमसमागतयोः प्रवासानन्तरसमागतयोश्च यूनोः उत्कण्ठावशात्, क्रुद्धप्रसन्नयोः हर्षवशात्, मत्तयोश्च मद्यपानजनितमदावेशवशात् प्रवृद्धरागतेति तदा नखविलेखनं सार्थम्। प्रवासगमने च तत् स्मरणार्थमिति बोध्यम्। अन्यत्र नखविलेखनसमयविधौ विशेषः। यथा "नवरते विरते च माने पुष्पे मदे प्रवसने विरहे प्रयोज्याः ॥" इति (र. र. ८।१) (पुष्पे ऋतुस्नातायाम्। प्रवसने देशान्तरगमने। विरहः केवलायोगमात्रम्।) "माने नवीनसुरते विरहे प्रवासे द्रव्यक्षयेऽथ विरतौ च मदे प्रयोज्याः।" इति (अ. रं. ९।२१)। अचण्डे वेगे = मध्यमन्दवेगयोस्तु यूनोः एतत् = नखच्छेद्यं न नित्यम् = नैतस्य नित्यं प्रयोगः।

एवं[1] दशनच्छेद्यं सात्म्यवशाच्चान्यदाऽप्युभयम् ॥ ५ ॥
निर्दिष्टमष्टभेदं छुरितकमर्धेन्दुमण्डले रेखा ।
व्याघ्रनखं शशकप्लुतमुत्पलपत्रं तथैवाऽन्यत् ॥ ६ ॥
ज्ञेयं मयूरपदकं स्थानान्येषामतः परं ब्रूमः ।
कक्षौ[2] स्तनशैलावथ जघनं चोरू गलः पृष्ठम् ॥ ७ ॥
एतद्रागात् पूर्वं रागाधिक्ये तु लीलया वृत्ते ।
न स्थानस्य गवेषणमित्येके प्राहुराचार्याः ॥ ८ ॥
वामे[3] हस्ते सर्वे द्वित्रा वा स्युर्नखाः स्फुरच्छिखराः ।
चण्डे वेगे यूनोः सात्म्ये वा तद्विनिर्दिष्टम् ॥ ९ ॥
उज्ज्वलताऽमलिनत्वे वर्धिष्णुत्वं तथा मृदोर्भावः ।
नखरगुणा इत्याद्यास्तेषां विरहः स्फुटो दोषः ॥ १० ॥
दीर्घाणि हस्तशोभां कुर्वाणानीह गौडजातानाम् ।

---

१ नखच्छेद्यवृत्तं दशनच्छेद्येऽतिदिशति एवमित्यादिना । यथा नखच्छेद्यमेवं रागवृद्धौ संघर्षात्मकं दशनच्छेद्यम् । रागमान्द्ये तु दशनग्रहणमिति । नखच्छेद्यदशनच्छेद्यानामचण्डवेगयोर्न नित्यं **प्र**योगः चण्डवेगयोस्तु नित्यम् । **प्र**कृतिसात्म्यात्, देशसात्म्यवशाच्च अन्यदापि (उक्तसमयातिरिक्तसमयेऽपि) उभयं **प्र**योज्यम् । 'समयवशाच्चान्यदा' ख. ।

२ 'कक्षौ' क. ग. पुस्तकयोः सूत्रे च पाठः । अनङ्गरङ्गे स्थाननिर्देशे विशेषः—"ग्रीवाकरोरुजघनस्तनपृष्ठकक्षाहृत्पार्श्वगण्डविषये नखराः खराः स्युः ।" (५।२१) इति ॥

**३** "दाक्षिणस्य (हस्तस्य) **प्रा**यशोऽत्यन्तव्यापारादेषां भङ्गोऽपि स्यात्", (ज. मं.) । अतो वामहस्तनखानां **प्र**योग उक्तः । नखानि "अभिनवघटिताग्राणि द्विशिखराणि त्रिशिखराणि वा क्रकचमुखवत् कल्पितानि (चण्डवेगयोः) । **ईषत्प्रमृष्टा**ग्राणि शूकाकृतीनि मध्यवेगयोः । **प्र**मृष्टाग्राण्यर्धचन्द्राकृतीनि मन्दवेगयोरिति **तिस्रो** नखकल्पनाः ।" (ज. मं.)

आलोकनेन सुदृशां चित्तग्राहीणि ता(जा)यन्ते ॥ ११ ॥
ह्रस्वैस्तु दाक्षिणात्याः कर्मसहिष्णुत्वभाजि (गि) भिर्नखरैः ।
स्वेच्छावशाद् विकल्पे[1] या (पा) तिभिरुद्दीपका मदने ॥ १२ ॥
मध्यान्युभयगुणानि तु कलयन्त्येतानि[2] ते महाराष्ट्राः ।
उभयविधत्वादेषामुभयगुणत्वं[3] भवेदुचितम् ॥ १३ ॥
सुष्ठुनियमितैरेतैर्हनुदेशे वा कुचाम्बुजद्वितये ।
अधरे[4] वा स्फुटरेखं लघुकरणं सङ्गमात्रेण ॥ १४ ॥
पुलकोद्गमनसमर्थं प्रान्तेऽन्योन्यं तथा च संघर्षात् ।
परिवर्धमानशब्दादाच्छुरितं[5] कथ्यते विबुधैः ॥ १५ ॥
आच्छुरितकं[6] प्रयोज्यं शिरसः कण्डूयने तथाङ्गस्य ।
संवाहनादिकर्मणि तद्वदिदं व्याकुलीकरणे ॥ १६ ॥

---

१ छुरितार्धचन्द्रादौ नखविकल्पे । 'स्वेच्छावशा हि (द्वि) कल्प्याः कामिभिरुद्दीपका—' ख. ।

२ 'कल्पन्त्येतानि' ख. । ३ गौडानां प्रायशो मृदुरागत्वेन स्पर्शकरत्वात् तेषां नखानि दीर्घाणि (लेखनकर्मणि भज्यन्ते) । दाक्षिणात्यानां खररागत्वात् ह्रस्वानि (लेखनकर्मसमर्थानि ह्रस्वत्वेन भञ्जनाभावात्) । महाराष्ट्राणां तु उभयविधत्वात् (मृदुरागत्वखररागत्वरूपोभयगुणवत्त्वेन तदुभयवैलक्षण्यात्, वैचक्षण्याच्च) तेषां नखानां दीर्घह्रस्वत्वोभयगुणवत्त्वम् ।

४ अन्यत्र स्थाननिर्देशे भेदः । यथा—'गण्डस्तनाधरगम्' इति (र. र. ८।३) 'गण्डयुगाधरेषु' इति (अ. रं ६।२३) "स्तने कपोले च हनुप्रदेशे" इति (ना. स. २२।१) "वक्षोजकन्दर्पगृहाधरेषु देयं नवोढाप्रमदाजनानाम् ।" इति पञ्चसायके ।

५ "अङ्गुष्ठनखेन प्रतिनखास्फालनाद्वर्धमानचटचटाशब्दम्" (ज. मं.) । "चटचटाध्वनियोजितान्तमङ्गुष्ठजाग्रनखताडनतो नखानाम् ।" (र. र. ८।३) ।

६ इदम् 'उच्छुरितम्' (ना. स. २३।१) ।

नखपदानिवेशनं यद् वक्रं स्यादर्धचन्द्रकं तादिदम्।
स्थानममुष्य तु कुचयोः पृष्ठं ग्रीवा तथा प्रोक्ता ॥ १७ ॥
अन्योन्याभिमुखत्वे मण्डलकं स्यान्नखाङ्कयोरुभयोः।
स्थानममुष्य निगदितं नाभीमूलादि[1] शास्त्रज्ञैः ॥ १८ ॥
दीर्घा[2] क्रियते रेखा नखरेणानायने या तु।
अस्याः स्थानं सर्वं[3] कामागमपारगैः कथितम् ॥ १९ ॥
वक्रा भवति तु रेखा व्याघ्रनखं[4] सर्वदेशगं[5] प्राग्वत्।

---

१ आदिना ककुन्दरे वङ्क्षणे च सूत्रोक्ते ज्ञेये। (ककुन्दरे नितम्बस्थकूपकौ, तदन्तरर्पितं तत् 'प्रतिकूपकमिव मनोहारि' (ज. मं.)। वङ्क्षणे उरूसन्धी, तत्र 'कर्णिकालङ्कारवज्जघनस्य' (ज. मं.) राजते।) 'नाभिमूले रशनानायकवदेव स्थितम्।' (ज. मं.) वङ्क्षणस्थाने (र. र. ८।४) उरु निर्दिष्टम्।

२ अयं पाठः ख. पुस्तकस्थः (आनायने = आकर्षणे)। पुस्तकान्तरेषु तु 'दीर्घा क्रियती रेखा......नखरेण नापनेया तु' इत्यस्ति। ३ "ले (रे) खायाः स्थानविशेषाभावान्न स्थानविशेषः। तेन ग्रीवात्रिकपृष्ठपार्श्वोरुमूलबाहुषु......... द्व्यङ्गुला त्र्यङ्गुला वा प्रत्यग्रशिखरनिष्पाद्या" (ज. मं.)। "द्वित्र्यङ्गुलादधिक एव नखप्रहारो मूर्धोरुगुह्यकुचदेशसमर्पितो यः। रेखा......" (अ. र. ६।२५)। "ऊरुपृष्ठश्रोणीतटे" (ना. स. २२।३)। रतिरहस्यम् (८।४) द्वित्र्यङ्गुलोपरितएव लिखन्ति लेखाम्" इति रेखालक्षणं तदव्यवहितपूर्वपादद्वये लक्षितस्य मण्डलकस्य प्रमाणतया यत् काञ्चीनाथो व्याख्यातवान् तद् भ्रान्तिविलसितमेव।

४ इदं (ना. स. २२।३) 'व्याघ्रपदम्' इत्युक्तम्। रतिरहस्यादिषु इदं नोक्तम्।

५ रेखावत् सर्वस्थानप्रयोज्यमित्यर्थः। सूत्रे तु "सैव वक्रा व्याघ्रनखकमास्तनमुखम्।" इति ("लेखा स्तनमुखादुत्थाप्याग्रतो वक्रीकृता व्याघ्रनखखण्डवत् स्तनकण्ठमलङ्करोति।" ज. मं.) विशिष्य स्थाननिर्देशः कृतः। एवं नागरसर्वस्वे ऽपि (८।३) "ऊरुपृष्ठश्रोणीतटे" इति।

सकलनखाग्रविरचिता चूचुकसांमुख्यसौभाग्या ॥ २० ॥
ज्ञेया मयूरपदकं[1] चूचुकसान्निध्यशोभनाः[2] पञ्च ।
नखराघाताः प्रोक्ताः शशकप्लुतसंज्ञया लोके ॥ २१ ॥
स्तनपृष्ठे यदि वोर्वोर्देशान्तरयानवाञ्छया तरलः ।
कुर्यात् संहतरेखाः स्मृतये तिस्रश्चतस्रो वा ॥ २२ ॥
अन्याकृतीरपि तथा कुर्याद्रेखा नखोद्भवास्तरुणाः (णः) ।
कौशलविधयोऽनन्ताः सर्गे धातुस्तथा कृतयः ॥ २३ ॥
कर्मणि भवति च निपुणः सर्वत्राऽभ्यासयोगतः पुरुषः ।
रागवशादिह युक्तः स्यादभ्यासः समस्तस्य ॥ २४ ॥
तस्मादत्र विधेयाः कथितादन्येऽपि[3] कामुकैर्भेदाः ।
इति कथयन्त्याचार्याश्चित्रापेक्षा गृहेऽप्यस्ति ॥ २५ ॥
वैचित्र्यान्नखराणां कार्यो रागः परस्परं यूनोः ।
भवति विचक्षणतायां[4] रागाधिक्यं स्फुटं जगति ॥ २६ ॥
विद्यान्तरेऽपि निपुणाः पूज्यन्ते भूरि (ति) शालिभिस्तेषु ।
किं पुनरिह नेत्याहुर्वात्स्यायनसंज्ञया रूढाः ॥ २७ ॥
परनारीषु न कुर्या (न्मदनेषू रेखता-?) न्नखाघातान् ।

---

१ मयूरपदं शशप्लुतं च हरविजये वर्णितम्––"दयितनखविलेखनं वधूनां विशदमयूरपदं शशप्लुताङ्कम् । अभृत मदनकाननस्य लक्ष्मीम्......॥"(२७।७०) इति । (काननपक्षे मयूराणां पदानि चरणमुद्राः । शशानां प्लुतं गतिविशेषः)। "लेखाः स्तनाग्रे विरला मयूरपदं नखाग्रैः सकलैर्निषक्ताः । शशप्लुतं पञ्च नखव्रणानि सान्द्राणि तच्चूचुकचिह्नमाहुः ॥" इति तयोर्लक्षणश्लोकः उदाहृतस्तट्टीकायां राजानकालकसूरिणा ।

२ 'शोभनायाश्च' ख. ।

३ "अन्यान्यपि पत्रिकुसुमकलशपत्रवल्लयादीनि नखकर्माणि प्रयोक्तव्यानि ।" (ज. मं.) । ४ 'विलक्षणतायाम्', इति पाठान्तरम् ।

स्मरणाद्यर्थं कुर्यात्तासां छन्नेषु देशेषु ॥ २८ ॥

पश्यन्त्या नखरक्षतमप्रकटस्थानमण्डनं सुतनोः ।
चिरमुत्सृष्टापि नवा भवति प्रीतिर्मनःसुखदा ॥ २९ ॥

भजति पराभवमेषा प्रीती रागेषु दूरमुक्तेषु[1] ।
रागभवनसंस्मारकमस्तमितं चेन्नखैश्चिह्नम् ॥ ३० ॥

नखभूषितकुचकमलां युवतिं दूरात् प्रपश्यतो यूनः ।
प्रभवति भूयान्मानो रागाधिक्यं परस्यापि ॥ ३१ ॥

चित्तं स्थिरमपि सुदृशां दृष्ट्वा पुरुषं विचित्रितं नखरैः ।
चञ्चलतामधिगच्छति सरसिजमिव वात्ययाऽभिहतम् ॥ ३२ ॥

रागविवृद्धावपरं नातः किमपीह विद्यते लोके ।
नखदन्ताभ्यां रचिता वपुषिच्छेदा यथा शक्ताः[2] ॥ ३३ ॥

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ ॥ ३४ ॥

## अथ पञ्चमोऽध्यायः ।

पञ्चममध्यायमसौ जलनिधिवेलासु कीर्तितः कविभिः ।
स्पष्टीकरोति कार्तिकचन्द्रकरप्रस्फुरत्कीर्तिः ॥ १ ॥

स्थानानि[3] चुम्बनानां दशनच्छेद्यस्य चारु बोध्यानि ।

---

१ 'दूरयुक्तेषु' आ.पु.क । ग. पुस्तकस्थः 'दूरमुक्तेषु' इति पाठः"चिरोत्सृष्टेषु रागेषु प्रीतिर्गच्छेत् पराभवम् ।" इति सूत्रस्थं पाठमर्थतोऽनुसरतीत्यादृतः । २ अनङ्गरङ्गकारोऽप्याह—"नखं प्रयुक्तं प्रणायाद्रसशैथिल्यदेतदेवास्ति भनोभवस्य । सर्वस्वमन्यत्तु सुखैकहेतुर्नातोऽस्ति किञ्चिद् वरकामिनीनाम् ॥" (६।१२८) इति ।

३ अस्मिन्नेवाधिकरणे (३।७) उक्तानां चुम्बनस्थानानां मध्यात् द्विद्यमानतायाः मसुखावहत्वादुत्तरोष्ठम्, दशनागोचरत्वादन्तर्मुखम्, छेद्याऽसम्भवात् पर्यन्तपीडाकरत्वा-

अन्तर्मुखोत्तरोष्ठे मुक्त्वा नयनाम्बुजे चैव ॥ २ ॥
समता स्निग्धा छाया राग[1]ग्रहणे च भूरिसामर्थ्यम् ।
युक्तप्रमाणता चच्छिद्राभावोऽग्रतस्तैक्ष्ण्यम् ॥ ३ ॥
एते दशनगुणाः स्युः कुण्ठा बाहयो[2]द्गतास्तथा परुषाः ।
विषमाः सू[3]क्ष्माः पृथवो विरला ज्ञेयास्तु दुष्टेषु ॥ ४ ॥
सोच्छूनकमिह गूढकमुक्तं बिन्दुस्तदुत्तरा माला ।
प्रोक्तः प्रवालमणिरिह मणिमाला चाभ्रकं खण्डात् ॥ ५ ॥
सप्तैतेऽष्टमुदितं चार्वितकं स्याद्वराहतः परत[4]ः ।
ई[5]षद्रागविभाव्यं गूढकमधरस्थले कथितम् ॥ ६ ॥
मध्येऽधरस्य कथितो दन्ताभ्यां खण्डनादसौ [6]स्तोकात् ।

---

द्वैरूप्यकरणाच्च नयने त्यक्त्वा शेषेषु स्थानेषु दशनच्छेद्यं प्रयोज्यम् । अनङ्गरङ्गकारस्तु (६।२६) "नखप्रदेशेषु रदाः प्रयोज्याः" इत्याह ।

---

१ "(दन्ताः) रागग्राहिणस्ताम्बूलादौ न पुष्पदन्ताः" (ज. मं.) स्वभावतस्तु शुद्धा एवेत्यर्थः। रतिरहस्यस्थस्य (६।१) 'रागग्राहिणः' इत्यर्थकस्य 'रागस्पृशः' इति पदस्य 'सहजरागवन्तः' इति काञ्चीनाथकृतं व्याख्यानं न पेशलम् । दशनानां शुद्धानां कुन्दकोरकसभासामेव सर्वत्र प्राशस्त्येन वर्णनात् । ताम्बूलचर्वणादिना तेषां कृत्रिमो रागस्तु तत्कालमनोहारी एव। ताम्बूलरागेण अन्तर्मुखोष्ठेषु रञ्जितेषु (अरागग्राहित्वेन) अरञ्जिता दन्तास्तु न शोभामावहन्तीति सौन्दर्यमार्मिकसूक्ष्मेक्षिकासाक्षिकम् । अतो रागग्रहणशीलत्वं दशनानां गुण उक्तः ।

२ सूत्रे 'राज्युद्गताः' इति पाठः। (राजिः (मध्ये स्फुटिता) लेखा उद्गता येषां ते राज्युद्गताः। आहिताग्न्यादित्वादुद्गतशब्दस्य परनिपातः।) ३ सूत्रे 'श्लक्ष्णाः' इति पाठः। ४ वराहचर्वितकमित्यर्थः। ५ रागमात्रलक्ष्यम्। क्षताभावात्। अस्फुटत्वाद् गूढकम्। "तदकेनैव राजदन्ताग्रेणावष्टभ्य निष्पाद्यम्।" (ज. मं.)। गूढकमेव यदाधिकमापीड्य निष्पाद्यते तदा जातश्वयथुत्वादुच्छूनकमित्यन्वर्थं भवति। ६ असौ बिन्दुः। "'अल्पदेशायाश्च त्वचो दशनद्वयसंदंशजा बिन्दुसिद्धिः।" इति सूत्रम्। (अल्पदेशायाः गले मुद्गमात्रायाः अधरे तिलमात्रायाः। बिन्दुरिव बिन्दुः स्वल्पदेशखण्डनात्।) "मध्येऽधरे तिलश एव विखण्डने स्याद् बिन्दू रदद्वयकृते"—(र. र. ६।३)।

गूढकमुच्छूनकमथ निःखण्डनमेव निर्दिष्टम् ॥ ७ ॥
ज्ञेयः कपोलभागे स्थेमा समणेः प्रवालकस्यापि ।
सुदृशां वामकपोलेऽलङ्करणं चुम्बनं नखरः ॥ ८ ॥
दशनच्छेद्यसमेतं कथितं तत्कर्णपूरकं चापि ।
दन्तौष्ठाभ्यां रचिते निस्पन्दे पीडनेऽभ्यसनात्[1] ॥ ९ ॥
सिद्धिः प्रवालकमणेः स्थानममुष्य स्फुटं कथितम् ।
देशान्तरे तु कथिता दशनानैक्ये मणेर्माला ॥ १० ॥
उभयत्र भूरिदत्तैःकथिता प्रकटं च बिन्दुमालापि ।
मालाद्वयप्रदेशो गलकक्षादि[2]ः समुद्दिष्टः ॥ ११ ॥
युक्तं विषमैः[3] शिखरैः स्तनयोः[4] पृष्ठे च मण्डलाकारम् ।

---

१ "तदभ्यासात् प्रवालमणिरिव लोहितः क्षतविवर्जितो दन्तौष्ठपदविन्यासो निष्पाद्यते ।" (ज. मं.) । यद्वा प्रवालः अधरः मणिः दन्तः (तत्तुल्यत्वात्तदुक्तिः) तयोः संयोगः प्रवालमणिरित्यन्वर्था संज्ञा । पञ्चसायके त्वयं 'विद्रुमः' इति संज्ञितः । "वेलापुरन्ध्रिरभियोगपटुप्रपञ्चभुक्तेव चञ्चलतरैः श्रियमूर्मिहस्तैः । यस्य प्रवालमणिशोभिभिरेति दन्तच्छेदप्रकारसदृशैः स्फुटबिन्दुमालैः ॥" इति (३०।७२) हरविजये-ऽस्य (वक्ष्यमाणबिन्दुमालायाश्च) उपमया उक्तिः । "दन्तोष्ठयोगातिशयात् प्रवालमणिः कपोले निपुणेन साध्यः । सर्वाग्रदन्तैर्मणिबिन्दुमाले—" इति तट्टीकायां तल्लक्षणम् ।

२ "तस्मान्मालाद्वयमपि गलकक्षवङ्क्षणप्रदेशेषु । ललाटे चोर्वोर्मणिमाला ।" इति सूत्रम् । बिन्दुमाला "ऊर्वोस्तिलपङ्क्तिरिव स्थिता स्यात् ।" (ज. मं. ) । इयं हरविजये (२७।८२) वर्णिता—"अधरभुवि नितम्बिनीजनस्य प्रियतमचुम्बनदंशबिन्दुमालाः । दधुरभिनवतोपलक्ष्यताम्रच्छविसुभगाः स्मररागबीजशोभाम् ॥" इति । "बिम्बोष्ठमध्ये दशनद्वयाग्रसंदंशतो जन्म लभेत बिन्दुः । सर्वाग्रदन्तैर्मणिबिन्दुमाले कार्ये सदाऽभ्यासवताश्रिते च" ॥ इति तट्टीकायामुदाहृतो लक्षणश्लोकः । ३ विषमैः पृथुमध्यसूक्ष्मैः । शिखरैः दशनपदैः । ४ सूत्रे 'खण्डाभ्रकं स्तनपृष्ठ एव' इत्यस्ति । जयमङ्गलाकाराभिप्राये 'स्तनपृष्ठम्' (स्तनतटम्) एकमेव स्थानं

खण्डाभ्रकं निगदितं स्वल्पभिदा बिन्दुमालायाः ॥ १२ ॥
संहतियुक्ता दीर्घा बह्वी दशनाहतेः स्फुटा पङ्क्तिः ।
शोणान्तरालशोभा चर्वितमुक्तं वराहस्य ॥ १३ ॥

स्थानममुष्य तु सुदृशां कुचकरिकुम्भौ विनिर्जिताम्भोजौ ।
एतद् द्वितयमुदाहृतमुद्भटवेगौ यदा चोभौ ॥ १४ ॥

---

खण्डाभ्रकस्य । "खण्डाभ्रकं स्तनतटे—" (६.४) इति वदतो रतिरहस्यकृतः, 'तद्वण्ड-काख्यं (खण्डकाभ्रम्)......स्तने—' (२३।४) इति वदतो नागरसर्वस्वकृतश्चाप्य-भिप्राये तथैव । ग्रंथकृता तु स्तनौ च पृष्ठं च (प्राण्यङ्गत्वादेकवद्भावे) स्तनपृष्ठ-मिति द्वन्द्वसमासमाश्रित्य 'स्तनयोः पृष्ठे च' इति स्थानद्वयमुक्तम् । तच्चिन्त्यम्, पृष्ठस्य छेद्यस्थानत्वेन कुत्राऽप्यनुक्तेः, रसिकप्रवृत्तिविषयत्वेनाऽसम्भावनीयत्वाच्च । यद्वा चकारो ऽत्र न द्वन्द्वबोधकः, किन्तु यथाऽन्यत्र ग्रंथकृता 'च, तु, चापि, तथा, तथैव, चैव, एवम्'—इत्यादयः पदपूरणार्थं प्रयुक्ताः तथाऽत्रापि चकारः-इति 'स्तनयोः पृष्ठे, इत्येक-मेव स्थानमभिप्रेतं ग्रंथकर्तुरपीति न दोषः । चकारेणैव स्थानद्वयोक्तिसन्देहः प्रादुर्भाव्यते, 'स्तनयोः पृष्ठे तु मण्डलाकारम्' इति पाठे तु नैव सन्देहप्रादुर्भूतिरित्यखिलं निर्मलम् । अनङ्गरङ्गे स्थाननिर्देशे विशेषः "कपोलवक्षोगलभालदेशे मण्डाभ्रकं (खण्डाभ्रकम्) स्याद्दशनाग्रलेख्यम् । तन्मण्डलाकारकमङ्गनानामङ्गेषु शोभां लभते नितान्तम् ॥" (६।३४) इति ॥

---

१ इदं (र. र. ६।४) 'कोलचर्वितम्' (अ. रं. ६।३५) 'कोलचर्वम्' इति च संज्ञितम् । अस्य विधिर्जयमङ्गलाकारेण सम्यगाविष्कृतः;—"स्तनपृष्ठस्यै-कतो भागात् स्थलदेशां त्वचं दशनसंदंशेन चर्वयेत् यावदपरं भागम् इत्यनेन क्रमेणो-पर्युपरि चर्वणान्निरन्तराः प्रदीर्घा बह्वयश्चतस्रः षड्वा दशनपङ्क्तयो निष्पाद्याः । तासां चान्तरालानि संमूर्छितरक्तत्वात्ताम्राणि भवन्ति । अतो वराहस्येव चर्वणाद् वराहचर्वितकम् । स्तनपृष्ठ एव बहुलमांसत्वात् ।" इति । अनङ्गरङ्गकारस्तु. (६।३५) अस्य स्थानं सामा-न्येन 'कान्ताशरीरम्', अस्य प्रयोगं च प्रस्थानकाले स्मरणार्थमाह । रतिरहस्ये (६।४) अस्य स्थाननिर्देशपरं स्तनतटार्थकम् 'स्तनपृष्ठभूषा' इत्यत्र स्तनपृष्ठपदम् "स्तनयोः पृष्ठस्य च भूषा" इत्येवं विगृह्णन् (तेन च अस्य स्तनौ पृष्ठं चेति स्थानद्वयमभिप्रयन्) काञ्ची-नाथश्चिन्त्यः । सूत्रादौ कुत्रापि पृष्ठस्य वराहचर्वितस्थानत्वेनानुक्तेः, सूत्रानुसारिणो रति-रहस्यकृतुरपि तथाऽभिप्रायाभावाच्च ।

स्यादभियोज्यानामिह ताम्बूले चापि कर्णपूरादौ।
नखरदशनाभियोगः स्यादिदमभियोगसंबन्धि॥ १५॥
उपचारो[1] नारीणां रुचिरो देशानुसारतो भवति।

---

१ स्त्रीणां देशसात्म्य व्याचक्षाणः तज्ज्ञानप्रयोजनमाह—उपचार इत्यादिना। "जात्यादिसात्म्यमवबुध्य सदैव यस्तु ज्ञात्वा नरः सकलकामकलाप्रवीणः (प्रसारन्)। सन्तोषयेच्च सततं सुरतप्रयोगैः प्राणैः समत्वमुपयाति स कामिनीनाम्॥" (५।१९) इत्यनङ्गरङ्गकारोऽपि सात्म्यज्ञानस्य फलमाह। जात्यादिसात्म्यमिति—जातिसात्म्यम् (मृग्यादिः पद्मिन्यादिर्वा जातिः। रतिरहस्य तृतीये प्रथमे चाध्याये प्रपञ्चिता), सत्त्वसात्म्यम् (देवसत्त्वादि (काचित् स्त्री देवसत्त्वा भवति, काचिद् यक्षसत्त्वा—इत्यादि) अनङ्गरङ्गे पञ्चमे स्थले, चतुर्थ परिच्छेदे रतिरहस्येऽपि च प्रपञ्चितम्), वयःसात्म्यम् (बालातरुण्यादिरूपेण रतिरहस्ये (४।१–२–४) वर्णितम्), प्रमाणसात्म्यम् (गुह्ययोः आरोहपरिणाहात्मकम्। अस्मिन्नेवाधिकरणे (१।१९) उक्तम्), समयसात्म्यम् (शीघ्रमध्यचिरकालविसृष्टिरूपम्। अस्मिन्नेवाधिकरणे (१।२०) उक्तम्), वेगसात्म्यम् (मन्दवेगत्वादि, रतिरहस्ये (३।१२–१३–१४) उक्तम्), प्रकृतिसात्म्यम् (स्त्रीणां श्लेष्मलापित्तलादिभेदेन रतिरहस्ये (४।५—१३) प्रपञ्चितम्), देशसात्म्यं च (अत्रैव वक्ष्यमाणम्) इति सात्म्यानि। तत्र प्रकृतिसात्म्यं देशसात्म्यं चेति द्वयमेव प्रधानम्। अत एव "सात्म्यं द्विविधम्—देशतः प्रकृतितश्च" इति सात्म्यद्वैविध्यमेवाह जयमङ्गलाकारः। तत्रापि प्रकृतिसात्म्यं बलीयः। यदाह रतिरहस्यकृत् (५।२३) "भवति सहजसात्म्यं देशसात्म्याद् बलीयः" इति। (सहजसात्म्यम् प्रकृतिसात्म्यम्) अन्यदप्याह स एव (४।२१) "जातौ च सत्त्वे वयसि प्रमाणे प्रधानमाहुः प्रकृतिं वधूनाम्। तथैव तासामुपचारमूचुः कर्णीसुतायाः कृतिनो विधेयम्॥" इति। वक्ष्यति च ग्रंथकारोऽप्यनुपदमेव—"देशात्सुवर्णनाभः प्रकृतिं शास्त्रे बलीयसीं प्राह।" इति। अयं देशसात्म्योपदेशः परदेशीयललनालालित्यलुब्धानां ताभिः कृतोद्वाहानां नानादेशमवलोकनरसिकानां प्रवासिनां चार्थे उपयोगावहः। ते यथा तत्तद्देशीयरामाणां सात्म्यं (जन्मदेशप्रभावोपजनितं चुम्बनादिचतुःषष्ट्यां रागस्य न्यूनाधिक्यमवगत्य तदनुसारमुपचारमाचरन्तस्तासां प्राणैः समत्वमुपगच्छेयुर्नतु घृणाभाजनतामित्यत आह "उपचारो नारीणां रुचिरो देशानुसारतो भवति"। इति॥

शुचिरार्यप्रायाणां कथितौऽसौ मध्य[1]देश्यानाम् ॥ १६ ॥
चुम्बननख(पद[2]) दन्तक्षतविद्वेषिण्यस्ततस्त्वमूः कथिताः।
एषैव रीतिरुक्ता बाह्लीका[3]वन्तिजातानाम् ॥ १७ ॥
आलिङ्गनपरिचुम्बनचूषणनिरताः क्षते तथा विरताः।
प्रहणनसाध्या वध्वो मालव[4]देशोद्भवा बोध्याः ॥ १८ ॥
आभीर[5]प्रभवानां सुदृशामेषैव रीतिरुद्दिष्टा।
सि[6]न्धुनदीषष्ठीष्ठानामन्तःस्थानाञ्च नारीणाम् ॥ १९ ॥

---

१ "गङ्गायमुनयोर्मध्ये यत् प्राग् विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥" इत्येके। 'हिमवद्विन्ध्ययोर्मध्यम्'...(मध्यदेशः)' इत्यन्ये। आद्यमतमेव शास्त्रकृतां प्राधान्येनाभिप्रेतम्। तदनुसारमिदानीन्तन-'अलाहाबाद-आगरा-दिल्ली-इत्यादि-प्रदेशात्मको विषयःमध्यदेशः।

२ 'पद' शब्दोऽधिकः छन्दोभङ्गावहः।

३ बाल्हीकदेश उत्तरापथः—इत्येके। विपाशाशतद्रुनद्योर्मध्ये केकयदेशस्य पूर्वभागे विद्यमानो देशः—इत्यन्ये। बाल्हीकास्तन्नामप्रसिद्धाः तेषां देशो बाल्हीकदेश इदानीं 'बलख' ( Bactria ) इति प्रसिद्धः—इत्यपरे। अवन्तिः नर्मदामुत्तरेण विद्यमानो देशः मालवदेशस्य पश्चिमो भागः अपरमालव इत्याख्यातः। अस्य राजधानी उज्जायिनी आसीत्। बाल्हीकावन्तिजातानां स्त्रीणां चित्ररतेऽभिनिवेश इति मध्यदेश्याभ्यो विशेषः।

४ मालवदेशः पूर्वमालवः।

५ आभीरदेशः श्रीकण्ठकुरुक्षेत्रादिभूमिः।

६ सिन्धुनदी षष्ठी यासां तासाम्—विपाशा, शतद्रुः, इरावती, चन्द्रभागा, वितस्ता चेति पञ्चनदीनामन्तर्वर्तिनि देशे भवानां स्त्रीणामौपरिष्टके विशिष्टोऽभिनिवेशः। एतेन तासां खरवेगत्वं प्रतीयते। औपरिष्टकं मुखरतिः। 'औपरिष्टं नाम भगचूषणम्' इति तु ( ५।११ र. र. टीकायां) काञ्चीनाथः)।

निष्ठौपरिष्टके स्याल्लाटमृगाद्योऽपरान्तकाश्च तथा ।
प्रोक्ताः प्रचण्डवेगाः सीत्कृतमन्दास्तथैवैताः ॥ २० ॥
खरवेगा अपवस्तुनिवृत्तरुचो गाढसंप्रहाराश्च ।
विज्ञेया रतिनिरताः स्त्रीराज्ये कोस(श)लायां च ॥ २१ ॥
रतिनिरता अतिमृद्व्योऽशुचिरुचयः शिष्टनिन्दिताचाराः ।
आन्ध्रोद्भवा मृगाद्यो मरहट्टप्रोद्भवा वनिताः ॥ २२ ॥
अश्लीलपरुषवाक्या रागिण्यश्चाखिलप्रयोगेषु ।

---

१ नर्मदायाः पश्चिमेन विद्यमानो देशः लाटदेशः । साम्प्रतिकाः भरुच–बडोदा–अहमदाबादप्रदेशा लाटविषयान्तर्गता एव 'अपरमालवात् पश्चिमेन लाटविषयः' । (ज. मं.)

२ अपरान्तः पश्चिमदेशः सह्याद्रिसमुद्रयोर्मध्यवर्ती कोङ्कण इति ख्यातः । साम्प्रतिकाः कोलाबा–कनारा–थाणा–रत्नागिरिप्रदेशा अपरान्तान्तर्गताः ।

३ 'अणुवस्तुनि' ख. । अपवस्तु अपद्रव्यम् (कृत्रिमसाधनम्) । अपवस्तुनः निवृत्ता रुचिर्यासां ताः–इत्येवमर्थे तु खरवेगत्वेन गाढसंप्रहारप्रियाणां तासामपवस्तुनिवृत्तरुचित्वं न सम्भवितुमर्हतीत्यसंगतिः । संभवेऽपि वा "दृढप्रहणनयोगिन्यः खरवेगा एव अपद्रव्यप्रधानाः स्त्रीराज्ये कोशलायां च ।" इति सूत्रेण विरोधः । तस्मात् सूत्रेण सांगत्याय 'अपवस्तुनि' इति भिन्नं पदं परिकल्प्य अपवस्तुनि वृत्ता प्रवृत्ता रुचिर्यासां ताः–इत्यर्थो बोध्यः ।

४ 'वज्रवन्तदेशात् पश्चिमेन स्त्रीराज्यम् ।' (ज० मं०) । तच्च वर्तमान'भूटान'-समीपे आसीदिति केचित् ।

५ 'कोशला' ग. सूत्रे च । कोशला अयोध्या (अवध) प्रदेशः पूर्वमुत्तरकोशला दक्षिणकोशला इति भागद्वये विभक्तः ।

६ साम्प्रतं 'तैलङ्गन्' इत्याख्यातः गोदावरीकृष्णयोर्मध्यवर्ती देशः । 'नर्मदाया दक्षिणेन देशो दक्षिणापथः । तत्र कर्णाटविषयात् पूर्वेण आन्ध्रविषयः ।' (ज० मं०) मरहट्टप्रोद्भवाः महाराष्ट्रदेशजाता । नर्मदाकर्णाटयोर्मध्ये महाराष्ट्रविषयः, इदानीं पूनाशोलापुरकोल्हापुरादिप्रदेशमयः ।

शयने सरभसयत्ना ज्ञातव्याः कामशीलेन ॥ २३ ॥

मरहट्टजासमाना नागरिका रहसि च प्रकाशन्ते ।
द्रविडास्त्रियो रतादिह मन्दं मन्दं प्रसिञ्चन्ति ॥ २४ ॥

मध्यमवेगाः सुसहास्त्यागिन्यः परुषकुत्सितादीनाम् ।
स्वपरापचारमुद्रणकथनरता या वनोद्भूताः ॥ २५ ॥

मृद्वयङ्गयो मृदुभाषाः स्फुरदनुरागाश्च गौडवामाक्ष्यः ।
देशात् सुवर्णनाभः प्रकृतिं शास्त्रे बलीयसीं प्राह ॥ २६ ॥

---

१ शयने संप्रयोगे सरभसयत्ना धृष्टत्वोद्भटत्वरभसेन पुरुषमभियुञ्जते इत्यर्थः ।

२ नागरिकाः पाटलिपुत्रभवाः सत्रपत्वात् रहसि (विजने) प्रकाशन्ते इति महाराष्ट्रिकाभ्यो विशेषः । तास्तु प्रसह्य रहसि च प्रकाशन्ते इति । कर्णाटदेशाद्दक्षिणेन चोलकेरलदेशयोर्मध्यवर्ती भारतवर्षस्य दक्षिणे भागे विद्यमानो द्रविडदेशः । तेन च मलय (मलयालम्) प्रदेशस्याप्युपलक्षणं बोध्यम् । 'मन्दं २ प्रसिञ्चन्ति' इत्यनेन अमदत्वात् एकस्मिन्नेव रते निवृत्तरागा भवन्तीति दर्शितम् । यदुक्तम् (र-र- ५ । १७) "अन्तर्बहिर्वाह्यरतेन भूयो विमृद्यमानाः क्रमशो द्रवन्त्यः । प्रभूतकन्दर्पजला द्रविड्यो रतिं लभन्ते प्रथमे रतेऽपि ॥" इति । नागरसर्वस्वे (२० । ६) तु एतद्विसंवादि उक्तम्:– "केशग्रहालिङ्गनचुम्बनेषु जिह्वाप्रवेशे च विमर्दने च । संभू (चू) षणे मर्दनताडने च सदाऽनुरक्ता द्रविडे रमण्यः ॥" इति । जिह्वाप्रवेशो मदनालये नायककर्तृकः औपरिष्टक-भेदः । 'अन्योन्यमुखवायुभ्यां पूरणं चूषणं मतम् ।' (शृङ्गारदीपिका)

३ स्वापचारमुद्रणपराः परापचारकथनपराश्च । वनोद्भूताः वनवासविषयजाताः कोङ्कणविषयात् पूर्वेण वनवासविषयः । ४ वङ्गमहामण्डलस्य पूर्वो भागः गौडदेशः सम्प्रति ढाका--राजशाही -फरीदपुरेत्यादिविषयात्मकः । एतेन वङ्गस्य (सम्प्रति मलदमुर्शिदाबाद-नदियाकलिकातादिप्रदेशात्मकस्य) उपलक्षणं बोध्यम् ।

एवं देशान्तरसात्म्यमपि ज्ञातव्यम् । तद् यथा:—

"शिरीषमृद्द्वी बहुशो द्रवन्ती रते विलीना करमात्रसङ्गात् ।
अनङ्गरङ्गैकरसा प्रियोक्तिः स्यात् कामरूपप्रभवा पुरन्ध्री ॥" (र. र. ५ । २०)

एवं चोपचरेदिह कालं प्रकृतिं समीक्ष्य वामाक्षीम् ।
देशानुसारतः सा तुष्यति नैवान्यथाप्रकृतिः ॥ २७ ॥

---

"उत्कली बहुलरागविह्वला दन्तघातकरजक्षतप्रिया ।
औपरिष्टकरता विशेषतो ह्यङ्गवङ्गयुवतिः कलिङ्गजा ॥"        (र. र. ५ । २१)

"आघाते मर्दने वा नखदशनपदे निःस्पृहा क्षोभणे च
नानाक्रीडाकलालङ्कृतिरतिमनसो मन्दवेगोपरागाः ।
दृष्ट्वा दूरेऽपि यूनः सपदि मनसिजावेशसाकाङ्क्षनेत्राः
नेपाले कामरूपे सुमधुरवचनाश्चीनदेशे च रामाः ॥"        (ना. स. २० । ११)

"गिरिकुहुरवनेषु तत्स्वभावाः कुरुमरुदेशकुरङ्गलोचनाश्च ।
विविधरतिरताः कलासु कल्पाश्चतुरतरा अपि सिंहले मृगाक्ष्यः ॥" (ना.स. २०।४)

"वैदग्ध्यवासाः शुचयो गुणाढ्या भवन्ति काश्मीरनितम्बवत्यः ।
आचारहीनाः कृतघातसाध्या भवन्ति जालन्धरदेशरामाः ॥" (ना. स. २० । ५)

"प्रचण्डवेगाः कृतघातसञ्ज्ञाः सदोन्मदा इन्द्रियपानलुब्धाः ।
कराङ्गुलीकृत्रिमलिङ्गसाध्याः कर्णाटदेशे कथितास्तरुण्यः ॥" (ना.स. २० । ७)

"सुखयति सुखवेगा व्यञ्जितानङ्गरङ्गा
चरलपिशुनलोला स्यादियं चोलबाला ॥"        (पं. सा. २ । २१)

"गूढग्रंथिरहर्निशं हि सकले गात्रे वहत्यच्छतामम्भोजप्रसवारुणोत्पलकरा शीतालये प्रेयसी । सौराष्ट्री ...... ।"        (पं. सा. २ । १७)

"कुवलयदलवर्णा चारुताटङ्ककर्णा चकितहरिणनेत्रा फुल्लराजीववक्त्रा ।
लघुनिधुवनरक्ता कष्टसंभोगसक्ता सुललितगतिरेषा गुर्जरी चारुवेषा ॥" (पं. सा. २।२२)

"सुरतरसविमर्दप्रेमवत्यः प्रचण्डाः करजदशनकेशाश्लेषसंज्ञाविहीनाः ।
सहजमलिनचित्ताः पौण्ड्रकाम्बोजजाताः......॥"        (पं. सा. २ । २७)

"सकलसुरतदक्षाः सिद्धिसौभाग्यवश्या दशनवसनपानप्रीतिभाजः सलज्जाः ।
करजलिखनदक्षाश्चण्डवेगाभिरम्याः कुसुमसुरभयः स्युर्मद्रतैलङ्गनार्यः॥" (पं.सा.२।२६)

तत्रैवं संग्रहः—"आन्ध्री प्रेमनिबन्धनैकनिपुणा, नारी शुचिश्चौलिका, कर्णाटी

कालविशेषानुसृतेरुपचारा वाऽथवा शुभा लीला[1]ः।
देशं देशान्तरमपि गाहन्ते तास्तथा विद्यात्[2] ॥ २८ ॥
पूर्वं पूर्वं त्वेतत् कुरुते वृद्धिं चतुर्षु रागस्य।
आलिङ्गनादिषु मतं चित्र[3]मिहैवोत्तरं तद्वत् ॥ २९ ॥
पुरुषो निवार्यमाणः कुर्याद् यद्दशनतः क्षतं तस्याः।

सुरतोपचारचतुरा, लाटी विदग्धप्रिया। क्रूरा मालविका, कलासु निपुणा नित्यं महाराष्ट्रिका, सौराष्ट्री मृगलोचना सुवचना, द्रव्यप्रिया गुर्जरी ॥" इति।

"वाचि श्रीर्माथुरीणामथ जनकपदस्थायिनीनां कटाक्षे, दन्ते गौडाङ्गनानां, सुललितजघने चोत्कलप्रेयसीनाम्। तैलिङ्गीनां नितम्बे, सघनघनरुचौ केरलीकेशपाशे, कर्णाटीनां कटौ च, स्फुरति रतिपतिर्गुर्जरीणां कुचेषु ॥" इति।

एवं कामसमूहेऽपि:—'सौराष्ट्री सुरतोपचारचतुरा, मुग्धा महाराष्ट्रिका, रामा मालवदेशजा मनसिजावेशोल्लसन्मानसा। गौराङ्गी गुणगर्वगौरववती गानप्रिया गुर्जरी, काश्मीरी कलभाषिणी, यवनजा चेतोहरा चेति षट् ॥" इति।

प्रकृतविषयिणी चमत्कारिणी चाटूक्तिरपि तत्रैव—"धन्यस्त्वं भुवि यस्य राजति महाराष्ट्री कुचोच्चं कुलं, लाटीवाङ्मृदु नर्म, चेदिवनितानाभीगभीरं वचः। आभीरीकटिविस्तृता मतिरसिर्गौडीकचश्यामलः, कर्णाटीरतनिष्ठुरो रणरसः, कीरीमुखोत्थं यशः ॥" इति ॥

१ 'लापाः' ख.।

२ "अन्यथा उपचारादिदर्शनेन तद्देशजेयमित्युपचर्यमाणा विगुणा स्यात्। (यथा अन्यदेशीया स्त्री भारतीयवेशभूषोपचारादिनाऽन्विता तद्दर्शनेन भारतीयेयमिति कृत्वा भारतीयैः प्रचारैरुपचर्यमाणा नान्तस्तोषमुपेयात्) तस्मात् संचारिगुणत्यागेन स्थायिदेशप्रचारैरेवावधार्य प्रकृतिसात्म्येनोपचरेत्।" (ज. मं.)

३ 'रचितुमिहैवोत्तरं' ख.। चतुर्षु आलिङ्गनचुम्बननखच्छेद्येषु उत्तरोत्तरापेक्षया पूर्वं पूर्वं रागवर्धनम्। उत्तरमुत्तरं च पूर्वपूर्वापेक्षया विचित्रम्।

४ यदात्र निवार्यमाणस्तदा अत्रैव पूर्वमुक्तः 'कुर्यात् कृते प्रतिकृतम्' (२।३।२६) इत्ययमेव पक्षः। न तु द्विगुणयोजनम्। कलहाभावात्।

असहिष्णुस्तत्कुर्याद्द्विगुणं हरिणेक्षणा तस्य ॥ ३० ॥
बिन्दोः प्रतिक्रियायां माला तस्याश्च नैरर्दः[1] शकलः ।
इत्याविष्टेव[2] रुषा कलहान् प्रतियोजयेदबला ॥ ३१ ॥
सकचग्रहमस्यास्यं कृत्वोन्नतमापिबे[3]त्ततस्त्वरितम् ।
आमीलयेद्दशेदथ समदा शयनस्थले बाला ॥ ३२ ॥
उ[4]न्नम्य कण्ठदेशं वक्षःस्थलसंस्थि[5]ता प्रियस्यैषा ।
मणिमालां रचयेदिह यच्चान्यल्लक्षितं रदजे ॥ ३३ ॥
दिवसे जनसंबाधे स्वकृ[6]तं चिन्हं प्रियः समुद्दिश्य ।
दर्शयति तच्च दृष्ट्वाऽदृष्टाऽन्यैः सोपहासा स्यात् ॥ ३४ ॥
मु[7]खमिव विकूणयन्ती नायकमिव कुत्सयन्त्यसौ निपुणा ।
स्वाङ्गनिषण्णं चिन्हं प्रथयेदिह साभ्यसूयेव ॥ ३५ ॥

---

१ अभ्रखण्डकमित्यर्थः । २ 'इत्यादिष्टं' ख. । ३ 'पिबेन्नरः' ग. ।
४ अयं ग. पुस्तकानुसारी पाठः । 'सन्नम्य' आ. पु. ।
५ 'संसृता' क. ग. । 'संस्मृता' आ. पु. । 'संश्रिता' इति सूत्रे ।
६ स्वेन आत्मना कृतं चिह्नं प्रियः दर्शयतीत्यत्र स्वशब्दः प्रियं लक्ष्यीकरोति । एवं च स्वकृतं प्रियेण स्वयं कृतमित्यर्थः सम्पद्यते । स च सूत्रविरुद्धः । सूत्रं तु स्वकृतमित्यस्य नायिकया स्वयं कृतमित्यभिप्रैति ।

"दिवापि जनसम्बाधे नायकेन प्रदर्शितम् ।
उद्दिश्य स्वकृतं चिह्नं हसेदन्यैरलक्षिता ॥" इति सूत्रम् ।

"रात्रौ नायिकया यत् कृतं चिन्हं तद्दिवापि नायकेन कथमस्मिन् जनसमूहे प्रच्छाद्यमिति भावमाकारं ग्राहयेत् प्रदर्शयेत् । उद्दिश्य स्वयं कृतं चिन्हमिति दुष्टस्यायमेव निग्रहो युक्त इति भावं ग्राहयन्ती हसेत् ।" इति तत्रत्या जयमङ्गला । यत्सूत्रमभिप्रैति तदेव ग्रंथकारोऽपि । परं ग्रंथकारशब्दैस्तन्न तथा प्रकाश्यते ।

७ नायको नायिकाकृतं चिन्हं दर्शयेदित्युक्तं पूर्वपद्येन । अधुना नायिकापि स्वाङ्गस्थं नायककृतं चिन्हं दर्शयेदित्याह--मुखमिवेत्यादिना । 'मुखमिव कृष्णायन्ती' ख. ।

अन्योन्यानुगुणत्वादेवं लज्जाविशिष्टयोर्यूनोः।
अपि संवत्सरशतके न प्रीतिर्हीयते रुचिरा ॥ ३६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
साधारणेऽधिकरणे पञ्चम इह निर्मितोऽध्यायः ॥ ३७ ॥

## अथ षष्ठोऽध्यायः।

अथ षष्ठं स्पष्टयति प्रतिभटकष्टस्फुटोद्यमख्यातः।
सांयोगिकेऽधिकरणेऽध्यायं ध्यातोऽरिवर्गेण ॥ १ ॥
उच्चरते[1] बहुरागा हरिणी संवेशमाचरेज्जघनम्।
कृत्वा रहसि विशालं संकुचितं हस्तिनी नीचे[2] ॥ २ ॥
यत्र[3] समतया न्याय्यो योगस्तत्र स्थितिः समा जघने।
मृग्या तथा करिण्या वडवा[4] ख्याता मुनीन्द्रेण ॥ ३ ॥

---

१ 'उच्चतरे' ख. पु.। उपलक्षणमिदम्। तेनोच्चतररतेऽप्येवम्। तथा च षडङ्गुलगुह्या हरिणी नवाङ्गुलगुह्येन वृषेण (उच्चरते) द्वादशाङ्गुलगुह्येन अश्वेन (उच्चतररते) च संप्रयोक्ष्यमाणा गुह्यरन्ध्रं विस्तारयितुं जघनं विशालयन्ती संविशेत्।

२ इदमप्युपलक्षणम्। तेन नीचतररतेऽप्येवम्। तथा च द्वादशाङ्गुलगुह्या हस्तिनी नवाङ्गुलगुह्येन वृषेण (नीचरते) षडङ्गुलगुह्येन शशेन (नीचतररते) च संप्रयोक्ष्यमाणा बहलं योनिरन्ध्रं संकोचयितुं जघनमवहासयन्ती संविशेत्। अत्रानङ्गरङ्गकारोऽप्याह:—"दृढापि नारी श्लथतामुपैति प्रसारणादूरुयुगस्य साध्या। अपि श्लथा संयमितोरुयुग्मा गच्छेद् दृढत्वं सुरतप्रयोगे॥" (१०। २) इति।

३ 'यत्रसम...योगस्तस्याः' ख.। हरिणी शशेन, वडवा वृषेण, हस्तिनी अश्वेन समगुह्याः समगुह्यैः संप्रयोक्ष्यमाणाः संकोचनप्रसारणाभावाज्जघनं समं धारयेयुः।

४ नवाङ्गुलगुह्या वडवा द्वादशाङ्गुलगुह्येन अश्वेन (उच्चरते) संप्रयोक्ष्यमाणा जघनं विशालयन्ती, षडङ्गुलगुह्येन शशेन (नीचरते) अवहासयन्ती संविशेत्। अत्रैष संग्रहः–"विवृतोरुकमुच्चैस्तु नीचैः स्यात् संवृतोरुकम्। यथास्थितोरुकं चैव समपृष्ठं समे रते॥" इति॥

प्रतिगृह्णीयाद्रमणं जघनेनात्रापवस्तुना[1] सहितम् ।
नीचरते साविशेषं रतयोः परयोर्यदच्छेह ॥ ४ ॥
उत्फुल्लकं[2] विजृम्भितमिन्द्राणीति त्रयं दिशेन्मृग्याः ।
ग्रंथान्तरे तु निगदितमुत्कूलकमादिमं विज्ञैः ॥ ५ ॥
नीचैर्विधाय शीर्षं नवहरिणदृशः स्मरागमाचार्यः ।
ऊर्ध्वं विरचितजघनो रचयेदुत्फुल्लकं[3] प्रथमम् ॥ ६ ॥
तत्र प्रसारयित्वा[4] तिर्यङ् नीचे तु सक्थिनी कान्तम् ।
अवसज्य चेत् प्रतीच्छेज्जृम्भितमेतद्विनिर्दिष्टम् ॥ ७ ॥

---

१ कृत्रिमकामाङ्कुशेन । 'जघनेनाच्छाद्य' ख. ।

२ 'उत्कृत्यकं' ख. ।

३ 'उत्कूलकम्' ग. ख. । उत्तानतिर्यगासितस्थितव्यानतभेदेन करणाऽऽसनलयबन्धाख्याभिरभिहिताः सुरते प्रयोज्याः स्मरयन्त्रयुक्तिप्रकाराः पञ्च । तत्र उत्तानबन्धप्रकारेषु समरते ग्राम्यं नागरं चेति करणद्वयं प्रयोज्यम् । तच्च लोके संप्रतीतमिति नात्रोक्तम् । तल्लक्षणं यथाः—"ग्राम्यमासीनकान्तोरुविन्यस्तप्रमदोरुकम् । नागरं च नरोरुस्थं स्त्रीपादाम्भोरुहद्वयम् ॥" इति । तत्र नागरबन्धश्चित्रिण्या रतये उपयोगी । तदुक्तं रतिरहस्ये (१ । २१) "नागरेण रमयन्ति चित्रिणीम्" इति । उच्चरते उत्फुल्लकम्, विजृम्भितम्, इन्द्राणी चेति करणत्रयम् । नीचरते च संपुटकम्, पीडितकम्, वेष्टितकम्, वाडवकं चेति करणचतुष्टयम् । नायिकायामतिविस्तारणार्थमुपर्युपरिस्थितहस्तपृष्ठे त्रिकभागं निवेश्य (उपोच्छीर्षकादिना वा त्रिकभागमुन्नम्य) पार्ष्णियुगं च पुरुषनितम्बविम्बाद् बहिर्धृत्वा उत्तानशयितायां पुरुषे च हस्ताभ्यां स्तनौ गृहीत्वा रममाणे जघनस्योर्ध्वं विवृतत्वादुत्फुल्लमिवोत्फुल्लकम् । इदमनङ्गरङ्गादौ नोक्तम् ।

४ 'समासे क्त्वो ल्यप्' इति शासनानादरमूलकोऽयं प्रयोगः । 'तत्र प्रसार्य कान्ता तिर्यङ्……' इति पाठ उचितः । यद्वा प्रसारो विद्यते ययोस्ते प्रसारे (प्रसृते) कृत्वा प्रसारयित्वेति 'तत्करोति तदाचष्टे' इति णिचि नामधातुके क्त्वा ।

साम्येन हरिणनयना स्वोरू विन्यस्य पार्श्वयोर्यूनः।
तज्जानुनी स्वपार्श्वे कृत्वेन्द्राणी[1] चिरं लभते॥ ८॥
इन्द्राण्या व्याख्यातं रतमुच्चतरं च वीरभद्रेण।
प्रतिगृह्य संपुटेन तु गृह्णीयात् प्रस्फुटं नीचे[2]॥ ९॥
एतेन व्याख्यातं नीचं रतमत्र वीरभद्रेण।
हस्तिन्याः संपुटकप्रमुखं प्रोक्तं रतं शास्त्रे॥ १०॥
पीडितकं वेष्टितकं वाडवकं चेति संपुटप्रमुखम्।
संपुटकं द्विविधं तत्पार्श्वोत्तानप्रभेदेन॥ ११॥
यत्रोभयोरुभावपि भवतोऽवक्रौ[3] प्रसारितौ चरणौ।
तत्प्रभवेत् संपुटकं द्वैविध्यं[4] चेदृशाकारात्॥ १२॥

१ इन्द्राणीति "शचीप्रोक्तत्वादन्वर्थसंज्ञया व्यपदेशः" (ज. मं.) चिरं लभत-इति सहसा निष्पादयितुमशक्यत्वात् चिराभ्याससाध्यमिदम्। "संश्लिष्टजङ्घे नार्यूरू यथाकालं स्वपार्श्वयोः। कृत्वाऽभ्यासेन चेन्द्राणी कक्षावस्थितजानुनी॥" इत्यन्य-लक्षणमुदाहृतं रतिरहस्यटीकायाम्।

२ हस्तिनी संपुटेन वक्ष्यमाणलक्षणेन वृषं (नीचरते) शशं च (नीचतररते) प्रतिगृह्णीयादित्यर्थः। ३ 'ऋजुप्रसारितौ' (सूत्रे)।

४ 'वैत्तव्यं' ख.। पार्श्वसंपुटकम्, उत्तानसंपुटकं च। पार्श्वसंपुटकस्य लक्षणं यथाः—"द्वयोस्तिरश्चोः सरलीकृताङ्गयोर्विघट्टनं संपुटकं तदुक्तम्।" इति (ना. स. २९। १) "पार्श्वसंपुटे तु नायकस्य कटिरुपधानिकायां तिष्ठेत्, नायिकायाश्च शयनीये। अन्यथा शयनीयस्थयोर्द्वयोः कटिभागयोर्विश्लेषाद् यन्त्रं कदाचिद् विघटेत।" (ज. मं.) उत्तानसंपुटकस्य लक्षणं यथाः—"स्त्रीपादौ सरलीकृत्य भूमौ निक्षिप्त-जानुकः। स्तनलग्नो रमेत् कामी बन्धः संपुटको मतः॥" इति स्मरदीपिकायाम्। (रमेत्=रमयेत् नारीमिति शेषः। अन्तर्भावितण्यर्थः परस्मैपदप्रयोगः, अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा) कात्यायनस्तु संपुटकमित्थमाहः—"आकुञ्चितस्तना नारी संक्रान्तनृकटिः पुनः। त्र्यस्रस्थनरयोगात्तु संमुखः संपुटः स्मृतः॥" इति। तत्र पार्श्वसंपुटकं तिर्यग्बन्धभेदः।

अधिशयनं दक्षिणतो नार्याः पुंसो यतोऽस्ति सर्वत्र[1] ।
तस्मात् पार्श्वरतावपि दक्षिणभागास्थितिः पुंसः ॥ १३ ॥
संपुटके दृढमूरू पीड्येते पीडितं[2] तदा प्रोक्तम् ।
व्यत्यासे स्यादूर्वोर्वेष्टितकं[3] कामशास्त्रेषु ॥ १४ ॥
वडवेव निष्ठुरं[4] चेदवगृह्णीयाद्ध्वजं प्रिया पुंसः ।

---

१ सर्वत्रेति "सर्वास्वेव मृगयादिनायिकास्वयं निद्राकाले भवति । अविरोधात् । रतकाले तु तद्विपरीतो हस्तिन्याः । येन संकोचहेतुत्वात् ।" (ज. मं.) "सर्वत्र दक्षिणे पत्नी चतुःस्थानेषु वामगा । सिन्दूरे ग्रन्थिबन्धे च शय्यायां च द्विरागमे ॥" इति ।

२ 'संपीड्येते न पीडितं' ख. । इदं नागरसर्वस्वे (२६ । १) पार्श्वकरणेषूक्तम् ।

३ इदं नागरसर्वस्वे (२६ । ३) पार्श्वकरणेषु, अनङ्गरङ्गे (१० । १२) चोत्तानबन्धेषूक्तम् । "अत्र जघनं पूर्वस्मात् संवृततरं भवति ।" (ज. मं.) 'परिवर्तित ऊरुयुगे तु भवेदिदमेव हि वेष्टितनामधरम् ।' इति रतिरहस्ये (१० । २०) । (इदं पीडितम्) काञ्चीनाथोऽस्य व्याख्यान्तरमप्याह:—"अन्ये पुनराहुः—परिवर्तनं नाम ऊर्वोर्विवृतसंवृतत्वे, रते ऊर्वोः कदाचिद् विवृतत्वं कदाचित् संवृतत्वं यदि संजातं तदा वेष्टितं नाम करणं भवति ।" इति । स्मरदीपिकायां त्विदमन्यथा लक्षितम्:-"हृदि संस्थाप्य पादैकमितरेणैव वेष्टयेत् । कान्तं कुड्याश्रिता नारी बन्धो वेष्टितको मतः ॥" इति ।

४ अत्रादर्शपुस्तके क. ग. पुस्तकयोश्च 'वेष्टितम्' इति पाठः । 'निष्ठुरम्' इत्येव पाठः समुचितः सूत्रानुसारी च । प्रिया पुंसः ध्वजं निष्ठुरमवगृह्णीयात् भगौष्ठपुटेन इति (१० । २०) रतिरहस्यकृत् जयमङ्गलाकारश्च । "वस्तुतस्तु पायुस्मरमन्दिरद्वारमध्यवर्तिन्या अर्धचन्द्राकारायाः संकोचनीत्याख्यायाः 'कोन्स्ट्रीक्टर वेजिनी' इति यूरोपदेशीयमूलभाषायां 'कबक' इति च अरबीयभाषायां प्रसिद्धाया नाड्याः संकोचनेनेत्यर्थः ।" इति ((२६ । ३) नागरसर्वस्वटिप्पणीकारः । "ध्वजे मन्दवीर्यत्वादस्फुरे (अचेष्टे) सति अनेन करणेन योषित् ध्वजस्फुरणमनुभवति, अथवा निश्चेष्टे ध्वजे सति योषित् रतौ भगेन ओष्ठपुटेनापि गृह्णाति तदा ध्वजस्तुरगमेहनसदृशो भवति एतद्वाडवकं करणम् ।" इति (१० । २०) रतिरहस्यटीकायां काञ्चीनाथः ।

तद्वाडवकं निगदितमभ्यासादान्ध्रदेश्यानाम् ॥ १५ ॥
रामनृपतितनुजनिना यूना श्रीवीरभद्रदेवेन ।
इति कथिताः संवेशनरीतय इह बाभ्रवीयानाम् ॥ १६ ॥
कथयति सुवर्णनाभो भेदानन्यांस्तु भुग्नकप्रभृतीन् ।
ऊर्ध्वावूरू नार्या भवतश्चेद् भुग्नकं[1] भवति ॥ १७ ॥
ऊर्ध्वौ चरणावस्याः कृत्वा चैतां तु धारयेत्तरुणः[2] ।
हृत्संलग्नौ कथितं जृम्भितकाद्यैस्तथा शब्दैः ॥ १८ ॥
इदमेकस्मिंश्चरणे वितते स्यादर्धपीडितं[3] प्रथया ।
अंसगते त्वेकस्मिन् सारितमिदमेव[4] निर्दिष्टम् ॥ १९ ॥

---

१ इदं नागरसर्वस्वे ( २८ । १२ ) 'उद्भग्नकम्', रतिरहस्ये (१० । ११) च 'भुग्नम्' इत्युक्तम् ।

२ अत्रादर्शे क. ग. पुस्तकयोश्च 'राधयेत्' इति पाठः । 'धारयेत्' इत्येव पाठः समुचितः सूत्रानुसारी च । 'भर्तानुभावयेत्तरुणः' ख. । जृम्भितकं रतिरहस्ये (१०।२२) 'जृम्भकम्' इति, अनङ्गरङ्गे च ( १० । ४ ) 'समपादम्' इत्याख्यातम् । अत्र "नायिका-जानुसंधी स्कन्धयोर्विन्यस्य चरणावूर्ध्वं धारितौ भवतः" ( ज. मं. ) यदा नायिका-चरणावूर्ध्वौ कृत्वा धार्येते तदा जृम्भितकम् । यदा चरणौ हृत्संलग्नौ ( कुञ्चितौ कृत्वा उरसा ) धारितौ भवतस्तदा ( जृम्भितकाद्यैरित्याद्यशब्दात् ) उत्पीडितकं चरणयोरुरसि पीडनादन्वर्थम् । इदमेव नागरसर्वस्वे ( २८ । ५$\frac{१}{२}$ ) 'पिण्डितम्' इति, रतिरहस्ये ( १ । २१ ) 'उरःस्फुटनम्' इति अनङ्गरङ्गे (१ । १३) च 'स्फुटनम्' इति संज्ञितम् ।

३ इदं सूत्रे 'अर्धपीडितकम्', रतिरहस्ये ( १० । २२ ) अर्धनिपीडितम्', नागरसर्वस्वे ( २८ । ६ ) च 'अर्धपिण्डितम्', इत्युक्तम् । इदमेकस्मिंश्चरणे व्यत्या-सेन प्रसारिते, अपरस्मिंश्च नायकोरसि स्थिते संपद्यते ।

४ '–नुत्सारित' ख. । इदं नागरसर्वस्वे ( २८ । ८ ) 'प्रसारितम्' इत्युक्तम् । इदमेव मुहुर्मुहुर्व्यत्यासेन वेणुदारितं संपद्यते । नायकस्यांसे वामश्चरणः स्थितः । दक्षिणस्तु तदधस्तात् प्रसारितः । पुनर्व्यत्यासेन दक्षिणस्कन्धे वामः प्रसारित इति वेणुदारितं वंशस्य दारणमिवान्वर्थसंज्ञम् । इदं शङ्खिन्या रतौ प्रयोज्यम् । "वेणुदारितपदेन शङ्खिनीम्" इति ( १ । २१ ) रतिरहस्ये ।

व्यत्यासे[1] मुहुरिदमिह लक्षणतो वेणुदारितं कथितम् ।
शूलाचितकं[2] शीर्षे यद्येकं स्यात् परं धराप्रसृतम् ॥ २० ॥
आभ्यासिकमिदमुक्तं यदि तु पदे द्वे विकुञ्चिते श्रवसि ।
प्रोक्तं तत्कार्कटकं[3] प्रोक्तोर्वोर्व्यत्यये पीडा[4] ॥ २१ ॥
जङ्घाया व्यत्यासे पद्मासनमिह[5] निरुच्यते विबुधैः ।
पृष्ठस्थचन्द्रमुख्या आरचयन्त्याः परिष्वङ्गम् ॥ २२ ॥
अभ्यासादिदमुक्तं कामागमपारगामिभिर्विबुधैः ।

---

१ 'न्यासे मुद्गरिते त्विह' ख. ।

२ इदमेव रतिरहस्ये ( १० । २३ ) 'शूलचितम्', अनङ्गरङ्गे ( १० । ६ ) 'त्रैविक्रमम्', नागरसर्वस्वे ( २८ । १२$\frac{१}{२}$ ) च 'आयतम्' इति संज्ञितम् । 'यद्येकं स्यात्पराग्रप्रसृतम्' ख. ।

३ इदं रतिरत्नप्रदीपिकायां प्रकारान्तरेण लक्षितम्—"ऊरुभ्यां किंच कान्ताकटितटमवधृत्योपविष्टो रमेत, एतत्कौलीरकाख्यं करणमतिशयप्रौढिदं भोगकाले ।" इति । अनङ्गरङ्गे ( १० । १७ ) इदं तिर्यग्बन्धेषु, नागरसर्वस्वे ( २८ । १० ) चोत्तानबन्धेषु संगृहीतम् ।

४ इदं सूत्रे 'पीडितकम्' इत्युक्तम् ।

५ 'पद्मासन' ख. । "उत्ताना नायिका दक्षिणपादं वामे स्वोरुमूले निदध्यात्, वामं च दक्षिणे पद्मासनमिति प्रतीतम् ।" ( ज. मं. ) नागरसर्वस्वे इदमुत्तानबन्धेषूक्तम् । यथाः—"आबद्धपर्यङ्कपदप्रियायाः कण्ठं पतिर्बन्धुरयेद् भुजाभ्याम् । तज्जानुजङ्घान्तरनिःसृताभ्यां पद्मासनं तत्करणं प्रदिष्टम् ॥" ( २८ । ४$\frac{१}{२}$ ) इति । ( वामजङ्घाया दक्षिणजङ्घाया उपरि दक्षिणजङ्घायाश्च वामजङ्घाया उपरि निधानेन पर्यङ्को निष्पद्यते । एवंलक्षणं पर्यङ्कबन्धं बद्ध्वा उत्तानायाः प्रियाया इत्यर्थः । ) अनङ्गरङ्गपञ्चसायकयोरिदमुपविष्टबन्धेषु संगृहीतम् । पञ्चसायके तल्लक्षणं यथा :—"पद्मासनं संपरिकल्प्य भर्ता क्रोडोपविष्टां युवतीं रमेत । अन्योऽन्यकण्ठार्पितबाहुबन्धात् पद्मासनाख्यं प्रवदन्ति सन्तः ॥" इति । अनेन पद्मिनी रन्तव्या । तदाह रतिरहस्यकारः "पङ्कजासनलयेन पद्मिनीम्" ( १ । २१ । इति ।

निर्मथ्य कामशास्त्रं पराङ्मुखत्वे परावृत्तम्[१] ॥ २३ ॥
उपविष्टः संविष्टः स्थितिमानथवा जलस्य पुरुषोऽन्तः[२] ।
साभ्यासः स्याद् यत्नाच्चित्रान्[३] योगांस्तथा लभते ॥ २४ ॥
कथयति सुवर्णनाभः[४] सुकरतया तेन चित्रयोगानाम् ।
शिष्टैरपस्मृतत्वाद्[५] विमतिर्वात्स्यायनस्याऽत्र[६] ॥ २५ ॥
अथ कथयति सुकुमारो राजकुमारो रतोत्सवे[७] चित्रम् ।
ऊर्ध्वस्थितयोर्यूनोरूर्ध्वरतं जायते तत्र ॥ २६ ॥
अन्योन्यापाश्रितयोर्यदि वा कुड्यादिसंश्रितत्वेन ।
स्मरशरनिहतहृदोरिह कथयन्त्यूर्ध्वं रतं विबुधाः ॥ २७ ॥
कुड्याश्रितस्य[८] पुंसः कण्ठे संसक्तबाहुपाशायाः ।
तद्भुजपञ्जरगायास्तज्जघनं वेष्टयन्त्याश्च ॥ २८ ॥
ऊरुभ्यामथ कुड्ये[९] (वि) वलन्त्याश्चरणविक्रमेणास्याः ।

१ यन्त्रमविश्लेष्य पूर्वकायेण परावृत्तस्य नायकस्य पृष्ठमुपगूहमानायां नायिकायाम्, एवं पराङ्मुख्या नायिकायाः पृष्ठमुपगूहमाने नायके च परावृत्तं सहसा कर्तुमशक्यत्वादभ्याससाध्यम् । इदं सूत्रे 'परावृत्तकम्' रतिरहस्ये ( १० । ३० ) 'परिवर्तनकम्' रतिरत्नप्रदीपिकायां च 'परिवर्तितकम्' इति । यथा :—"नायको नायिका वापि संप्रयुक्तसमुद्गकः । परिवृर्त्ति यदि भजेत् परिवर्तितकं रतम् ।" इति । ( वनितोरुमध्यगताभ्यां नरोरुभ्यां समुद्गकं संपद्यते । )

२ 'चलश्च पुरुषोऽत्र' ख. । ३ 'द्वित्रान्' आ. पु. क. ग. । ४ '-भोऽसुकरतया' ख. । ५ निन्दितत्वादित्यर्थः। 'स्नादृतत्वात्' ख. ।

६ 'विप्रति' आ पु. क. ग. ।

७ 'रथोत्सवे' आ. पु. । 'सुकुमारो रतोत्सवे विविधवैचित्र्यम्' ख. ।

८ 'कुब्जा'-ख. । ९ 'कुब्जे बालाया' ख. ।

स्यादवलम्बितकं[1] रतमथ धैनुकमेतदाम्नातम् ॥ २९ ॥
वृषलीलावस्कन्दनमधिधरणि धृतेश्चतुष्पदन्यायात्[2] ।
तत्र रते खलु यूनोः पृष्ठमुरःकर्म[3] संलभते ॥ ३० ॥
रीत्याऽनयैव शौनं छागलमैणेयगर्दभाक्रान्ते ।
मार्जारक्रीडितकं व्याघ्रावस्कन्दनं चैव ॥ ३१ ॥
दान्तावलोपमर्दितमथ सूकरवाजिघृष्टकारूढे[4] ।
लक्षणमेषां कार्यं तत्रत्यापूर्ववैधर्म्यात्[5] ॥ ३२ ॥
संघाटकरतमुक्तं द्वाभ्यामाभ्यां सहैव मिश्राभ्याम्[6] ।
वह्वीभिर्गोयूथिकमुक्तं[7] स्त्रीक्रीडितं चैतत् ॥ ३३ ॥

---

१ नायिकया नायककण्ठावलम्बनादवलम्बितकम् । इदमेव अनङ्गरङ्गे (१०।२७) 'कीर्तिबन्धः' इति व्यवहृतम्।

२ इदमेव नागरसर्वस्वे ( ३१ । १ ) 'पशुकरणम्' इति व्यवहृतम्। सिन्धुमरुकुरुदेश्यानां जनानाश्चात्राऽत्यासक्तिरुक्ता। ३ 'कर्णमालभते' ख.।

४ क. पुस्तके–'ध्वाजिधृष्टक–'इति पाठः। शूकरघृष्टकम् 'वराहघृष्टकम्' इति सूत्रे, वाज्यारूढं च 'तुरगाधिरूढम्' इति सूत्रे।

५ 'तत्रत्यैःपूर्ववैधर्म्यात्' ख.। वैधर्म्यात्=विशेषात्। "यस्मिन् यस्मिन् येन येन विशेषेण स्वरगतेन कायगतेन च योगोऽपूर्वो दृश्यते तत्तदुपलक्षयेत्। तत्र शुनीवदवस्थितायाःश्वलीलया नायकस्यावस्कन्दनं शौनम्। एवं छगलीवच्छगललीलया छागलम्। एणीवदेणलीलया ऐणेयम्। 'एणया ढञ्' । व्यापारस्यापि विकारत्वात्।" इत्यादि जयमङ्गलायाम्।

६ परस्परोपजनितविश्वासाभ्यां नायिकाभ्यां सहैकनायकस्य रतम्। "यदैव हि पुरुषोपसृप्ते यदैकस्या रागापनयनं तदैवापरस्याश्चुम्बनादिना रागजननम्। ततोऽस्या रागापनयनं प्रशान्तरागायाश्च रागजननमिति।" (ज. मं.)।

७ बह्वीभिः स्त्रीभिः परस्परोपजनितविश्वासाभिः सहैकस्य पुरुषस्य ( वृषस्येव गोयूथे स्त्रीसमूहे वर्तनात्) गोयूथिकं नाम चित्ररतम्। एवं बहुभिः पुरुषैरेकस्याः स्त्रिया रतमपि गोयूथिकम् (वृषयूथस्येवैकस्यां गवि नायकयूथस्यैकस्यां स्त्रियां वर्तनात्)।

विज्ञेयाः स्मरशास्त्रे तत्तत्कर्मानुकारसंयोगात् ।
संज्ञाभेदास्त्वेते छागलमैणेयमित्याद्याः ॥ ३४ ॥

विषयविशेषे राज्ये[1] युवतीनां स्त्रीसमानता पुंसाम् ।
तस्मादेकैकस्या बहवो विदि(हि)ता[2] युवानस्ते ॥ ३५ ॥

ते तामेकैकं वा युगपद्वा सात्म्ययोगयोर्दृष्ट्या ।
अनुरञ्जयेयुरुचितं योगस्तत्र प्रदर्श्यते विविधः ॥ ३६ ॥

बिभृयादेनामन्यः कुर्यादस्या निषेवणं चान्यः ।
एको वदनं जघनं कश्चिन्मध्येऽपरः पुरुषः ॥ ३७ ॥

इति वारं वारं वा व्यतिकरतो[3] वापि साधु चेष्टेरन् ।
एषा देशविशेषे नी(री)तिः कथिता न सर्वत्र ॥ ३८ ॥

एतेन व्याख्याता वेश्या गोष्ठीपरिग्रहीभूता[4] ।
तद्वद्राजस्त्रीणां व्याख्यातं तत्समासेन ॥ ३९ ॥

---

१ युवतीनां राज्ये=स्त्रीराज्ये । युवतिशब्दोऽत्र स्त्रीसामान्ये प्रयुक्तः । 'स्त्रीराज्ये' इति संज्ञाशब्दे वक्तव्ये 'युवतीनां राज्ये' इति वचनेऽवाच्यवचनं दोषः । एवंविधाः प्रयोगा अशक्तिकृता एवेति बोध्यम् । "ग्रामनारीविषये स्त्रीराज्ये च बाह्लीके बहवो युवानोऽन्तःपुरसधर्माण एकैकस्याः परिग्रहभूताः" इति सूत्रम् । "स्त्रीराज्यसमीप एव परतो ग्रामनारीविषयः । युवानो व्यवायक्षमाः । अन्तःपुरसधर्माणो रक्षणयोगादस्वतन्त्राः । एकस्या योषितः परिग्रहं गताः । खरवेगत्वान्नैकेन तुष्टिरिति ।" (ज. मं.)

२ 'विदिता' इत्यत्र 'विहिता–' क. ।

३ "व्यतिकरेण चेति द्वितीयकर्मसंयोजनेन च । तद्यथा–जघनसेवको जघनं मध्यं च निषेवेत । मध्यसेवको मध्यं मुखं च । तत्सेवकश्च मुखं मध्यं च । वारिको धारयेन्मुखं च निषेवेतेति । अनेन विधिना तावदनुतिष्ठेयुर्यावत् सर्व एव जघनवारमनुप्राप्ताः ।" ( ज. मं. ) ।

४ विटैः संभूय परिगृह्यते या वेश्या । एवं राजस्त्रीभिः संहत्य नवभिर्दशभिर्वा एको युवा परिगृह्यते । वक्ष्यति चैतद् ग्रन्थकृत् ( ५ । ६ । ३७ ) "प्रच्छाद्य तरु-

दक्षिणदेशेऽधोरतमुपदिष्टं[1] भूरि जाययाऽप्युचितम् ।
इति वात्स्यायनरीत्या चित्ररते वीरभद्रोक्तिः ॥ ४० ॥
पुरुषायितकं(के) वाच्यं सम्यक् पुरुषोपसृप्तकं[2] भूरि ।
वात्स्यायनप्रतिज्ञामनुसृत्यैवोचितस्याऽपि ॥ ४१ ॥
पशुमृगपक्षिविलासैर्बहुभिरुपायैः प्रबोधवांश्चित्रे[3] ।
रतियोगानति(भि)योगाद्विवर्धयेत्कामतत्त्वज्ञः ॥ ४२ ॥
तत्सात्म्यादथ[4] सात्म्याद्देशानां भूरिभावयोगेन ।
स्त्रीणां स्नेहो[5] रागो बहुमानो जायतेऽनुपमः ॥ ४३ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे षष्ठोऽध्यायः कृतः स्पष्टः ॥ ४४ ॥



णमेकं मिलिता वङ्गादिसंभवाः सुदृशः । पुष्पप्रदाननिरता नव दश वा भुञ्जते स्वैरम् ॥" इति । अत्रापि वेश्यां विटा युवानं च स्त्रियः पूर्ववत् (वारं वारं व्यतिक्रमतो वा) अनुरञ्जयेयुः ।

१ 'वा रत' ख. । अपानस्य जघनाधःस्थितत्वादधोरतम् । पायुरतमित्यर्थः । इदं स्त्रीपुंसविषयभेदेन द्विविधम् (मन्मथसंहितायां विशेषेण प्रपञ्चितम्) । इदञ्च अनार्यं शिष्टगर्हितञ्चेति सर्वथा परिहेयम् । "ब्राह्मणस्य रुजाकरणम्, अपेय मद्ययोघ्रातिः, जैह्मम्, पशुषु मैथुनाचरणं पुंसि च—इति जातिभ्रंशकराणि" इति वैष्णवधर्मशास्त्रे ३४ अध्यायेऽस्य जातिभ्रंशकरत्वमुक्तम् ।

२ 'पुरुषोपसृष्टकम्' आ. पु. क. ख. ग. । 'पुरुषोपसृप्तकम्' इति सूत्रानुसारी पाठः स्पष्टार्थः । पुरुषोपसृप्तकं संवेशनानन्तरत्वादवसरप्राप्तमपि पुरुषायितवर्णने वक्ष्यते ।

३ चित्ररतविज्ञ इत्यर्थः । सूत्रे तु 'चित्तज्ञः' इति पाठः । तदनुसारं च 'प्रबोधवांश्चित्ते' इति पाठः । स्त्र्यभिप्रायवेदीति च तदर्थः । स्त्रियाः अभिप्रायं बुद्ध्वा तांस्तान् रतयोगान् प्रयोजयेदिति । ४ नायिकायाःप्र कृतिसात्म्यादित्यर्थः ।

५ स्नेहः आसक्तिः । रागस्तृप्तिः (सुरतेच्छा वा) । बहुमानो गौरवम् ।

# अथ सप्तमोऽध्यायः ।

अथ सप्तममध्यायं व्याख्याति ख्यातपौरुषो जगति ।
श्रीवीरभद्रनामा निर्जितकामाकृतिः कान्त्या ॥ १ ॥
कलहस्य रूपमाहुः सुरतं[1] कामस्य वामशीलत्वात् ।
तस्य विशदं तथापि च तस्मादत्र प्रहारोऽस्ति ॥ २ ॥
अंसौ[2] पृष्ठं स्तनयोरन्तर्मूर्धा तथा[3] मतं जघनम् ।
पार्श्वद्वयं च देशः प्रहणनकर्मण्युरः क्वापि ॥ ३ ॥

---

१ सुरतं कलहस्वरूपम् । अत एव (भट्टिकाव्ये ११।२५) "नेत्रेषुभिः संयुतपद्मपत्रैः कार्णान्तकृष्टैरुरुकेशशूलाः । स्तनोरुचक्रास्तकर्णपाशाः स्त्रीयोधमुख्या जयिनो विचेरुः ॥" इति स्त्रीणां योधमुख्यैरुपमितिः साध्वी । "स्त्रीषु जातो मनुष्याणां स्त्रीणां च पुरुषेषु वा । परस्परकृतः स्नेहः काम इत्यभिधीयते ॥" इत्युक्तलक्षणः कामः हेतुफलभेदेनावस्थानात् द्विस्वभावः । एकः संप्रयोगचक्रलक्षणः, अन्यो विसृष्टिलक्षणः । सोऽयं संकल्पजन्मा सुकुमारोपक्रमलब्धजन्माऽपि सुरते निर्दयोपक्रमेणातिवाह्यमानत्वात् वामशीलः (प्रतिकूलस्वभावः)। यदाह भारविः (किरातार्जुनीये ९ । ४९)—"आहता नखपदैः परिरम्भाश्चुम्बनानि नखदन्तनिपातैः । सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥" इति । ( अपिर्भिन्नक्रमः । सौकुमार्यगुणसंभृतकीर्तिरपि सुरतेषु वाम एवेति ) अत एवान्यदा महापीडाकरमपि नखदन्तकरघातादिकं सुरते निरुपाख्यसौख्यकारणं भवति । "तत्सेनायाः प्रहणनैश्चेतोहारि सुरद्रुहाम् । रणं तदासीत् कृतिभिः परीतं रतसन्निभम् ॥" (४३ । २०१) इति हरविजये प्रहणनोक्तिः ।

२ अंसादीनि रागस्थानानि । यदाह रतिरहस्यकृत् (१० । ५३) "पृष्ठपार्श्वजघनस्तनान्तरे मूर्ध्नि, ते हि मदनस्य भूमयः ।" इति । एषु वक्ष्यमाणविधिना ताडने स्त्रियः प्राप्तरागा द्रुतं द्रवन्ति ।

३ 'मूर्धा च तस्य चत्वारः' आ. पु. ख. । 'तथा मतं जघनम्' इत्यारभ्य '……समतलमुष्टी च' इत्यन्तः पाठस्तत्र त्रुटितः, ग. पुस्तके च विद्यते ।

अपहस्तकं प्रसृतकं समतलमुष्टी च तस्य चत्वारः।
भेदाः सीत्कृतमस्मादार्तितया[1] भूरिभेदं च ॥ ४ ॥
विरुतं[2] च तत्र सीत्कृतमष्टविधं स्याद्धि हिङ्कृत[3]प्रभृति।
स्तनितं कूजितरुदिते प्लु(प्लू)त्कृतदू(दू)त्कारकौ तद्वत् ॥ ५ ॥
सूत्कृतफूत्कृतके अपि मोक्षार्था विश्रुताः शब्दाः।
एते सीत्कृतिपक्षा अलमम्बावारणार्थाश्च ॥ ६ ॥

---

१ 'सीत्कृतमुख्या विज्ञेया भूरिभेदाश्च' ख.। अस्मात् प्रहणनात् सीत्कृतमुद्भवति। तच्च आर्तिरूपम्, पीडया जन्यमानत्वात् ।

२ विरुतं ध्वनिस्वभावत्वात्, सीत्कृतभूयिष्ठस्य च तस्य प्रयोज्यत्वात् सीत्कृत-प्रकरण एव उक्तम् । तच्च रतिजन्यत्वात् प्रहणने चाप्रहणने च मनोज्ञत्वात् प्रयोज्यम्, सीत्कृतं तु प्रहणन एवेति विशेषः ।

३ हिङ्कृतं सूत्रे 'हिङ्कारः,' नागरसर्वस्वे (२१।४) च 'हिङ्कृत्' इत्युक्तम्। "सर्वत्र चुम्बनादिष्वपक्रान्तायाः ससीत्कृतं तेनैव प्रत्युत्तरम् ।" इति सूत्रोक्तिमनुसृत्य चुम्बितया नायिकया प्रतिचुम्बनेऽपि प्रयोज्याः सीत्कृतस्य विशेषा अव्यक्तध्वनिविशेषरूपा इमे हिङ्कृतादयः चुम्बनप्रसङ्गेण 'सशब्दचुम्बनानि' इति संकेतिता नागरसर्वस्वे । सूत्रे 'प्लुत्कृतम्' नोक्तम् । 'दूत्कारकौ' इत्येव पाठ उचितः सूत्रानुसारित्वात् (दूत्कारः सूत्रे दूत्कृतशब्देनोक्तः)। कण्ठनासिकाभ्यामूर्ध्वं गच्छन् मधुरो ध्वनिर्हिङ्कृतम्। स्तनितं मेघस्येव गम्भीरो ध्वनिः ("स्तनितं मेघनिर्घोषः" इत्यमरः । तत्साम्यात्तद्व्यपदेशः) कण्ठात् हंशब्देन निष्पाद्यते। रुदितं प्रसिद्धम् । तच्च मनोहारि स्यात्। प्लूत्कृतं जले बदरपातवत् "बदरस्येवाप्सु निमज्जतः प्लूतूकृतम्" इति "अप्सु बदरस्येव निपततः शब्दानुकरणं फूत्कृतम्" इति सूत्रे पाठान्तरम्। कूजितदूत्कारसूत्कृतफूत्कृतानां लक्षणं वक्ष्यते । अनङ्गरङ्गकृता (१०। ४५) हिङ्कृतम्, स्तनितम्, सीत्कृतम्, ऊत्कृतम्, फूत्कृतं चेति सीत्कृतस्य पञ्चैव भेदा उक्ताः। मोक्षार्थाः शब्दाः मुञ्च, त्यज—इत्यादयः, अलमर्थाः अलम्, भवतु, पर्याप्तम्—इत्यादयः, अम्बार्थाः अम्ब, मातः—इत्यादयः,

अर्थविशेषादेतान् हिङ्कृतकादीन् प्रयोजयेच्छब्दान् ।
वात्स्यायनानिरुक्तैर्विस्तारो नादृतोऽनेन ॥ ७ ॥
पारावतपरभृतशुकमधुकरहारीतहंसदात्यूहाः ।
अनुकर्तव्यरुता[१] इह लावककारण्डवौ चैव ॥ ८ ॥
एवं च चक्रवाकः सीत्कृत[२]भूयिष्ठमीदृशाः शब्दाः ।
एकैकशः प्रयोज्याः कामाकुलया नितम्बिन्या ॥ ९ ॥
पृष्ठे मुष्ट्यभिघातः क्रोडगतायाः प्रफुल्लपद्माद्याः ।
तत्र स्तनितप्रभृति च कुर्याद्दीप्ताभ्यसूयेव[३] ॥ १० ॥
प्रतिघातानपि कुर्याद् योजितयन्त्रां स्तनान्तरे हन्यात् ।
अपहस्तकेन मन्दं प्रारम्भे वर्धमान[४]श्च ॥ ११ ॥

---

वारणार्था मा, न, तिष्ठ—इत्यादयः, एवमर्थविशेषादन्येऽपि पीडार्थयुक्ताः मृतास्मि, परित्रायस्व, गृहाण, जीवय, हा, धिक्—इत्येवमादयः शब्दाः सीत्कृतेषु नायिकया वाच्याः ।

---

१ 'अनुकर्तव्या नन्विहलावककारण्डवौ वाच्य' ख. । २ सीत्कृतभूयिष्ठम्—सीत्कृतबहुलं यथा स्यात्तथेति क्रियाविशेषणम् । प्रहणनकालेऽपि सीत्कृतस्य प्राधान्यादन्तराऽन्तरा पारावतादिरुतानि प्रयुञ्जीत । "सीत्कृतं हि स्वरान्तरसंश्लिष्टं मनोहारि विभागश्लिष्ट-गीतवत् ।" ( ज. मं. ) ।

३ दीप्ताभ्यसूयेव प्रहारमक्षममाणा इव नायिका तत्पीडाद्योतकानि स्तनित-रुदितकूजितानि, मुष्टिनैव तत्पृष्ठे प्रतिघातं च कुर्यात् ।

४ '-माने च' ख. । प्रारम्भे मन्दं प्रहरेत् । ततो वर्धमानो भवेत् प्रहारे इति शेषः । यथा रागो वर्धते तथा अधिकं प्रहरेदित्यर्थः । आरागपरिसमाप्तेः तृप्तिं याव-दित्यर्थः । "स्तनान्तरे हि रागास्पदस्य हृदयस्यावस्थानात् । योषितो हि त्रीणि राग-स्थानानि—शिरो जघनं हृदयं चेति । तेषु हन्यमानेषु चिरचण्डवेगापि रागं मुञ्चति ।" (ज. मं.) ।

आरागपरिसमाप्तेर्हिङ्कारादीन्[1] प्रयोजयेत्तत्र[2]।
तत्र विकल्पाभ्यासौ कथितौ तेषां प्रयोगस्य ॥ १२ ॥
विवदन्त्याः सीत्कृत्य प्रहणनमिह कुञ्चिताङ्गुलिकरेण[3]।
शिरसि प्रसृतकमाहुर्निश्चितकामागमाः पुरुषाः ॥ १३ ॥
अन्तर्मुखेन कुर्यात्तत्र च फूत्कार[4]कूजिते यत्नात्।
रतकर्मणोऽवसाने श्वसितं[5] रुदितं विदध्याच्च ॥ १४ ॥

१ मृदुनो हृदयस्य हन्यमानत्वात् सर्वेषामेवार्तिसूचकानां हिङ्कारादीनां विकल्पेन (मृदुमध्यातिमात्रभेदेन), अभ्यासेन (पौनःपुन्येन) च अपहस्तकप्रयोगसमकालमेव प्रयोगः कार्यः।  २ '-त्प्राज्ञा' ख.।

३ फणाकारेणेत्यर्थः: "मूर्धनि प्रसृतकं फणाकृति" इति (र. र. १०।५७)। इदमेव (ना. स. ३३।१) 'शब्दकर्तनम्' इति संज्ञितम्। इदं विवदन्त्याः (अपहस्तकेन असुखायमानायाः प्रहारान्तराकाङ्क्षया प्रत्यवतिष्ठन्त्याः) शिरसः प्रथमरागास्पदत्वात्तत्र पूर्ववत् (मन्दोपक्रमं वर्धमानरागमारारिसमाप्तेः) प्रयोज्यम्।

४ फूत्कार एव (ना. स. २१।३) "श्लिष्टाधरोत्पादितपूत्निदानं पूत्कारमन्वर्थकनामधेयम्।" इति 'पूत्कारः' इत्युक्तः। एवञ्च फूत्कारस्यापि—श्लिष्टौष्ठोत्पाद्यस्य 'फूत्' इति शब्दस्य निदानं फूत्कारः—इत्येव लक्षणं बोध्यम्। यत्तु सूत्रे "अप्सु बदरस्येव निपततः शब्दानुकरणं फूत्कृतमिति फूत्कारलक्षणमुक्तम्, तन्न हृदयङ्गमम्। जले बदरनिपातेन प्लूत्कारस्यैवोत्पत्तेरनुभवसिद्धत्वात्। ततश्च "बदरस्येवाप्सु निमज्जतः प्लूत्कृतम्" इति सूत्रस्य पाठान्तरमेवाऽऽदरणीयम्। "तालग्राग्रादुपरिभागे जिह्वाग्रे संश्लेषादुत्पद्यते।" इति जयमङ्गलापि प्लूत्कृतमेव लक्ष्यीकरोति, उक्तविधिना तस्यैवोत्पत्तेरनुभवगोचरत्वात्। एवं च "फूत्कृतं बदरपातवज्जलें" इति (१०।५७) रतिरहस्यकारोक्तिरपि 'प्लूत्कृतम्' इति पाठकल्पनयैव निर्वाह्या। कूजितं सवृतेन कण्ठेन निष्पद्यते। तच्च "हृष्यत्कपोतादिविहङ्गमानां यथा रुतं कूजितमामनन्ति।" इति लक्षितं (ना. स. २१।२)।

५ इदमेव परिगणने ग्रन्थकृता 'सूत्कृतम्' इत्युक्तम् "सूत्कृतं सूत्करणं च श्वसितापरनाम" (ज. मं.)। एतच्च "आयासनिश्वासनिरोधहृद्यं मनीषिणस्तच्छ्वसितं वदन्ति।" इति लक्षितं (ना. स. २१।२)। रतकर्मणोऽवसाने धातुक्षयाच्छ्रमोत्पत्तेः श्वसितं रुदितं च मधुरोक्त्या प्रयोज्यम्।

स्फुटतो वेणोरनुकृतिरुक्ता शब्दस्य हू (दू[1])त्कृतिः शास्त्रे।
सूत्कृतिरिह विनिपततः पानीये पिप्पलस्योक्ता ॥ १५ ॥
सर्वत्र चुम्बनादेः प्रारम्भे स्यात्तु सीत्कृतेः करणम्।
तेनैव[2] प्रत्युत्तरमुक्तं रागप्रभावेण ॥ १६ ॥
अभ्यासे प्रहतेरिह [ शब्दाः[3] ] वारणमोक्षालमम्बार्थाः।
वक्तव्या रतिविरतौ श्वसिताद्युन्मिश्रितो योगः ॥ १७ ॥
विरुतानामपि तद्वद्रागावसितिक्षणे त्वरा[4]भिहतिः।
जघनस्य पार्श्वयोर्वा समतलकं स्यादिह प्रान्तं[5](प्त)म् ॥ १८ ॥
तत्र च लावकपरभृतहंसानां कूजितादरस्त्वरया।
इति समतलप्रहणने योगाऽयोगाः प्रहारस्य ॥ १९ ॥

---

१ 'दूत्कृतिः' क.। 'हूत्कृतिः' ख.। अत्र सूत्रे तत्रत्यजयमङ्गलायां च 'फूत्कृतम्' इति पाठान्तरम्। (अ. रं १०।४७) इदमेव 'ऊत्कृतम्' इति संज्ञितम्। इदं (ना. स. २१।४) 'सन्निष्पतन्मौक्तिकशब्दरम्यम्" इति लक्षितम्।

२ अनेन (२।३।२६) पूर्वमुक्तम् "कुर्यात्कृते प्रतिकृतम्" इति स्मारितम्।

३ इदं पदमावश्यकमपि छन्दोभङ्गावहम्।

४ शनैः शनैस्ताडने हि प्रोद्दीप्ततया मार्गापन्ना रतिर्निवर्तते। किञ्च रागावसानसमये तीव्रोऽपि करनखराद्याघातः कामिनोरानन्ददायक एव भवति तत्स्वाभाव्यात्। यदाह (नैषधचरिते १८।११८) श्रीहर्षः—"आस्त भावमधिगच्छतोस्तयोः संमदेषु करजक्षतार्पणा। फाणितेषु मरिचावचूर्णना सा स्फुटं कटुरपि स्पृहावहा॥" इति। (भावमधिगच्छतोः सुरतान्तसुखमनुभवतोः। फाणितेषु खण्डविकारेषु)।

५ पारिशेष्यात् प्राप्तमित्यर्थः। (सूत्रे मुष्ट्यपहस्तकादेः पृष्ठादौ प्रयोग उक्तः समतलस्य न क्वापीति "रागावसानकाले जघनपार्श्वयोस्ताडनम्" इत्यत्र सूत्रे पारिशेष्यात् समतलेन ताडनमिति प्रतीयते।)

पारुष्यं रभसत्वं तेजश्चैवेह शोभते पुंसाम् ।
आर्त्यबलत्वे शक्ति[1]र्व्यावृत्तिर्योषितां भाति ॥ २० ॥
रागात्प्रयोगसात्म्याद् भवति व्यत्यास[2] एतयोः क्वापि ।
अचिरं प्रा[3]न्तं (न्ते) तस्य प्रकृतिर्भवतीति शास्त्रार्थः ॥ २१ ॥
[4]कीलाकर्तरिके द्वे विद्धा संदंशिका तथैवान्ये ।
प्रहणनमष्टकमित्थं सह पूर्वैर्दाक्षिणात्यानाम् ॥ २२ ॥

---

१ शक्तिर्व्यावृत्तिः (व्यावृत्तिः=निवृत्तिः=अभावः) शक्त्यभावः, अशक्तिरित्यर्थः । हस्तसौकुमार्यात् हन्तुमसामर्थ्यमिति यावत् । यदि तु "अशक्तिरार्तिर्व्यावृत्तिरबलत्वं च योषितः ।" इति सूत्रमनुस्रियेत, तर्हि "आर्त्यबलत्वेऽशक्तिर्व्यावृत्तिर्योषितां भाति ।" इति पाठो बोध्यः । न च 'आर्त्यबलत्वेऽशक्तिः' इत्यत्र प्रकृतिभावेन भाव्यमिति दोषो देयः । पूर्वोक्त(२।२।८) रीत्याऽदोषात् । (अशक्तिरुक्ता । आर्तिः पीडा । व्यावृत्तिः नत्या निवृत्तिः, नतो नायकस्य वा नत्यादिना प्रहणनान्निवर्तनम्, अबलत्वं पुरुषेण हन्तुं नियुक्ताया निष्प्राणता) ।

२ एतयोः स्त्रीपुंसयोर्व्यत्यासः—स्त्रिया स्वधर्मानशक्त्यादींस्त्यक्त्वा पौरुषं तेजो बिभ्रत्या प्रहणनम्, पुरुषेण च स्त्रीप्रहणने पारुष्यादिरूपं स्वधर्मं त्यक्त्वा स्त्रीधर्मानवलम्ब्य सीत्कृतादिकरणम् । स चायं व्यत्यासश्चिरं न मनोहारीति द्रुतमेव तदन्ते स्त्रीपुंसाभ्यां यथास्वधर्मैर्वर्तितव्यम् ।

३ 'अचिरप्राप्तिस्तस्य' ख. । ४ "मुष्टिरेव तर्जनीमध्यमयोर्बहिः पृष्ठभागेननिष्क्रातयोरुपर्यङ्गुष्ठयोजनात् कीला । तयाऽधोमुख्या ताडनम् । कर्तरी द्विविधा प्रसृतकुञ्चिताङ्गुलिभेदात् । तत्र प्रसृताङ्गुलिर्द्विविधा । हस्तेनैकेन भद्रकर्तरी । द्वाभ्यां संश्लिष्टाभ्यां यमलकर्तरी । या कुञ्चिताङ्गुल्यङ्गुष्ठाग्रोपरिन्यस्तकुञ्चिततर्जनीका सा शब्दकर्तरी प्रयुज्यमाना श्लथाङ्गुलित्वादमितशब्दवती भवति । कैश्चिदुत्पलपत्रिकेत्युच्यते । उभाभ्यामपि कनिष्ठिकाग्रभागेण शिरसि ताडनम् । तर्जनीमध्यमयोर्मध्यमानामिकयोर्वा मध्येनाङ्गुष्ठं निष्कास्य बद्धा मुष्टिर्विद्धा । तयाङ्गुष्ठकवदनया कपोलयोर्व्यधनमेव ताडनम् । मुष्टिरेव तर्जन्यङ्गुष्ठकाभ्यां तर्जनीमध्यमाभ्यां वा संदंशनात् संदंशिका । तया स्तनयोः पार्श्वयोश्च मलनपूर्वकं मांसस्याकर्षणमेव ताडनम् । पूर्वैरपहस्तादिभिः अष्टविधमिति

विद्धा कपोलदेशे कीलोरसि कर्तरी शिरोदेशे।
संदंशिका च कुचयोः पार्श्वद्वितये च संदिष्टा ॥ २३ ॥
कीलान्यु(उ)रसि मृगदृशां दृश्यन्ते दाक्षिणात्यदेश्यानाम्।
देशविशेषादृतमिदममतं[1] वात्स्यायनस्येह ॥ २४ ॥
देशान्तरीयमन्यन्नैवं[2] देशान्तरे मनोहारि।
तद्देशेऽप्यात्ययिकं[3] परिहर्तव्यं प्रयत्नेन ॥ २५ ॥
गणिकां कांचिद्धतवान् कश्चिद्राजा[4] हि कीलया सुरते।
राज्ञीमन्यो[5] भूपः कर्तर्या दुष्प्रयोगेण[6] ॥ २६ ॥
यद्विद्धाया योगात् काणां चक्रे नटीं किलेहान्यः[7]।
तस्मादसावधानः प्रहणनयोगान्न कुर्वीत ॥ २७ ॥

---

दाक्षिणात्यानाम्। आचार्याणां तु चतुर्विधमस्ति।············उरसीत्युपलक्षणम्। उरसि कीलाकृतम्। शिरसि सीमन्तमुखे कर्तरीकृतम्। कपोलयोर्विद्धाकृतम्। देशसात्म्यमेतत्। यद्रागवश.त्तत्कृतं चिन्हं वैरूप्यकारणमपि श्लाघ्यते।'' (ज. मं)।

---

१ स्त्रिया दुःखावहत्वेन निर्दयकर्मत्वाद्वैरूप्यादिदोषावहत्वाच्च अनार्यवृत्तमिदमिति कीलादिकृत्यं वात्स्यायनस्य न सम्मतम्। २ अन्यत् प्रस्तराद्याहननम्।

३ आत्ययिकं विनाशाङ्गवैकल्यकारणं यत्र देशे प्रयुज्यते तत्रापि न प्रयुञ्जीत।

४ तमत्ययमेवोदाहरति—गणिकामित्यादिना। चोलराजः चित्रसेनां गणिकां सुकुमारतया सुकुमारोपक्रमयोग्यामपि रागान्ध्यादगणिततद्बलः कीलयोरसि प्रयुक्तया व्यापादितवान्।

५ "कर्तया कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीम्" इति सूत्रम्। "······मलयवतीमचिरप्रतिविहितमान्द्यामजातबलामपि मदनोत्सवे गृहीतवेषां दृष्ट्वा······रागाक्षिप्तचेताः शिरसि कर्तयातिबलया जघान।" (ज. मं.)।

६ अयं पाठः क. पुस्तकस्थः सूत्रानुसारीत्यादृतः। आदर्शे तु 'दुष्टयोगेन' इति पाठः।

७ "नरदेवः कुपाणिर्विद्धया दुष्प्रयुक्तया नटीं काणां चकार" इति सूत्रम्। "नरदेवः पाण्ड्यराजस्य सेनापतिः। कुपाणिः शस्त्रप्रहारात् कुणिहस्तः। स हि

अत्र न गणिका (गणना) मूलं नापि च दार्ढ्येन शास्त्रतोऽभ्यासः।
उद्युक्ते रतिसमरे रागात् संजायते यूनोः ॥ २८॥
स्वप्नेष्वपि च न रसिकैरीक्ष्येते भावविभ्रमौ तौ हि।
कामिभ्यां तत्क्षणमिह यौ स्यातां कल्पितौ सुरते ॥ २९॥
आसाद्य पञ्चमीमिह पथि धारां नेक्षते यथा तुरगः।
वेगान्धः श्वभ्रदरीं खातं चान्यत्तथा विषमम् ॥ ३०॥
एवं रतिसंमर्दे रागार्तौ कामशासनानुगतौ।

---

राजकुले नटीं चित्रलेखां नृत्यन्तीं दृष्ट्वा जातरागः संप्रयोगे रागान्धो विद्धया कुपाणि-त्वाद्दुष्प्रयुक्तया कपोलतलमप्राप्यःक्षिप्तया काणां चकार। संदंशिका नोदाहृता स्वभावतो नात्यधिकत्वात्।" (ज. मं.)।

१ 'गणना' इति सूत्रे पाठः। 'गणिका' इति च तत्रैव पाठान्तरम्। द्विविधो हि कामी शास्त्रतत्त्वज्ञस्तद्विपरीतश्च। तत्र रतियोगे प्रवृत्ते शास्त्रतत्त्वज्ञस्यापि स्वभावतः कदाचिदिदमात्ययिकमिति गणना नास्ति, शास्त्रपरिग्रहोऽपि च तदानीं लुप्यते विहितानुष्ठानात्। ततश्च विमृश्यकारिण एव गणना शास्त्रपरिग्रहसार्थक्यं च भवति। तस्मादुभयोरपि प्रहणनप्रवृत्तौ (आद्यस्य शास्त्रज्ञानपरिष्कृतो द्वितीयस्य च तद्विकलः) राग एव कारणम्।

२ स्वप्नेष्वसंभाव्यवस्तुप्रकाशनयोग्येष्वपि ते भावा विभ्रमाश्च न दृश्यन्ते ये कामिभ्यां सुरतव्यापारे तत्कालं कल्पिता भवन्तीति न ते शास्त्रिता इत्यर्थः। रतिचक्र-प्रवृत्तेः पूर्वमेव शास्त्रस्य विषयः। अनन्तरं रागसत्त्वावेशवैवश्ये तु किं किं भवतीति को नाम पूर्णतया ज्ञातुं वर्णयितुं च प्रभुः। रागप्रवृद्धावुद्भूतानि स्मरविलसितानि हि गिरामगोचरः। अत एवाह श्रीहर्षः (नैषधचरिते १८।२६) "........आविरासुरथ कामकेलयः। ये महाकविभिरप्यवीक्षिताः पांसुलाभिरपि ये न शिक्षिताः॥" इति।

३ कामशास्त्रज्ञः कामी ज्ञानपरिष्कृतत्वादत्ययावहं प्रहणनादि न प्रयुङ्क्ते। इतरस्तु ज्ञानविकलोऽतिप्रवृद्धाद्रागात् प्रवर्तमानोऽत्ययं न पश्यतीति दृष्टान्तेन दर्शयति—आसाद्येति। "अश्वस्य विक्रमो वल्गितमुपकण्ठमुपजवो जवश्चेति पञ्च धारागतयस्तुरगशिक्षाया-मुक्ताः। तत्र पञ्चमीं जवाख्यां प्रकृष्टामास्थाय।" (ज. मं)।

असमीक्ष्यात्ययमेतौ जायेते चण्डवेगौ द्वौ ॥ ३१ ॥
तस्माज्ज्ञात्वा[1] मृदुतां बलचण्डत्वे च सारसाक्षीणाम् ।
बलमात्मनश्च योगान् युञ्जीत ध्यातशास्त्रार्थः ॥ ३२ ॥
सर्वासु सर्वदा न हि योगाः सांयोगिका बुधैर्ज्ञेयाः ।
स्थाने[2] देशे काले समुचित एषां प्रयोगः स्यात् ॥ ३३ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांयोगिकेऽधिकरणे सप्तम इह निर्मितोऽध्यायः ॥ ३४ ॥

## अथ अष्टमोऽध्यायः ।

अथ रचयति पुष्टार्थं तस्याष्टममेष सादरोऽध्यायम् ।
यस्य दरादारिसुदृशः शैलश्रीमाश्रिता आरात् ॥ १ ॥
रत्यभ्यासश्रान्ते[3] कान्ते रागाधिके कृतार्थित्वे ।
अवपात्यैनं रचयेत् पुरुषायितमेणशावाक्षी ॥२॥

---

१ यस्माज्ज्ञानवैकल्यादत्ययादिकमयुक्तं दृश्यते तस्माज्ज्ञानप्रधानेन भवितव्यमित्याह—तस्मादिति ।

२ 'स्थाने यथा—स्तनान्तरे अपहस्तस्य, शिरसि प्रसृतस्य प्रयोगः । देशे-यथा—मालव्यां प्रहणनस्य, आभीर्यामौपरिष्टकस्य । काले यथा—युक्तयन्त्रायामपहस्तस्य, उत्सङ्गोपविष्टायां मुष्टेरित्यादि ।

३ रागाधिके=रागबहुले=अनुपशान्तरागे । कृतार्थित्वे=(कृतमर्थित्वं येन तस्मिन्) कृतप्रार्थने । कान्तं श्रान्तं रागञ्चानुपशान्तमुपलभ्य नायकेनानुज्ञाता पुरुषायितेन तत्साहाय्यं कुर्यात् । अननुज्ञाता हि योषिद्विसदृशमाचरन्ती निस्त्रपैव स्यात् । जातविश्वासा पुरुषायिते विविधशिल्प (सूक्ष्मसुरतलीला) विकल्पयोजनार्थिनी कान्तेन अननुज्ञाताऽपि पुरुषायितमाचरेत् । एवं नायकस्यात्र कौतुकमस्तीति विदिततदाशया अपरिश्रान्तेऽपि तस्मिन्, अननुज्ञाताऽपि च तेन पुरुषायितमाचरेत् । पुरुषायितं रतौ पुरुषवच्चेष्टितम् । इदमेव 'वीरायितम्' इत्यप्युच्यते । इदं कविभिस्तत्तत्काव्येषु नानाभङ्गीभिर्वर्णितम् ।

यदि वा स्वाभिप्रायादर्थितया शिल्पकल्पनासीम्नः ।
नायककुतूहलाद्वा कलयेदबला कलां पुंसः ॥३॥

तत्रेतरेण युक्ते यन्त्रे क्रियते यदोत्थितिस्तस्याः ।
अवपातयेत्तदैनं स्यादेवं रत्यविच्छेदः ॥४॥

इत्थमनल्पगुणोऽयं प्रथमः कल्पः स्त्रियाश्रिते पुंस्त्वे ।
भवति परस्तु जघन्यो[1]........यन्त्रगे समारम्भे ॥५॥

[2]भ्रश्यत्केशगकुसुमा श्वासाद्विच्छिन्नहासलीला च ।
चुम्बितुमस्य मुखेन्दुं वक्षोजाभ्यां प्रविश्योरः ॥६॥

संपीडयन्त्यनुकूलं नमयन्ती मस्तकं कृताश्चेष्टाः ।
पूर्वं पुंसा रचयेदीर्ष्याकलुषेव मृद्वङ्गी ॥७॥

प्रतिपातयामि पूर्वं भवताऽहं पातिता महायत्नात् ।
इति रमणं प्रहसन्ती ब्रूयात् संतर्जयन्तीव(च)॥८॥

मध्ये मध्ये [3]व्रीडां श्रममभिरामा तथा विरामेच्छाम् ।
संदर्शयेन्मुखश्रीनिर्जितराकेन्दुशोभैषा ॥९॥

---

१ यन्त्रं विश्लेष्य पुनरारम्भेणादित एवोपक्रमेत्–इति द्वितीयः कल्पः । अयं जघन्योऽधमः यथाप्रवृत्तस्य रागस्य विच्छेदात् । अत्रेदमपि बोध्यम्—नायकस्य श्रमवृद्धौ रागस्यानुपशमे च प्रथमः कल्पः । यदा तु नायिका जातविश्वासा स्वाभिप्रायादिना प्रवर्तते तदा द्वितीयः । 'भवति च नायकविरतावन्योन्यं यन्त्रगे समारम्भे ।' ख. ।

२ पुरुषायितमाचरन्तीनां रमणीनामेवंविधो वेषः कामिनां नयनानन्दं वितनुते । यदुक्तं मदनसाम्राज्यभाणे—"व्यालोलहारनिकरवल्गत्कुचकुम्भ–दरहसितगण्डपालि–घर्म-जलबिन्दुनिचितनिटिलार्धोन्मीलितनयन–संचलदलकानां दर्शनेन (पुरुषायिते) नयनानन्दोऽपि संभवति ।" इति ।

३ स्त्रैणधर्मख्यापनार्थमव्रीडितापि व्रीडाम्, अश्रान्तापि च श्रमं संदर्शयेत् । 'श्रममभिरामा तथा चिराज्ज्येष्ठाम्' आ. पु. ख. ।

पुरुषोपसृष्ट(प्त)कैरथ मुहुरुपसर्पेत तानि वक्ष्यामः ।
पुरुषः[1] शयनगताया नीवीं विश्लेषयेत् सुदृशः ॥१०॥
कुर्यादेतत्तस्याश्चित्तं[2] व्याक्षिप्य भूरिभिर्वचनैः ।
एवं नीवीमोक्षे यूनो रागोऽधिको भवति ॥११॥
तत्र विवदमानामथ गण्डे परिचुम्ब्य वाऽऽकुलीकुर्यात्[3] ।
परिसंस्पृशेच्च बहुधा स्थिरलिङ्गस्तत्र तत्रैताम्[4] ॥१२॥
प्रथमं सुसंगता[5] चेदूर्वोरिह संन(ह)तिं स्फुटं भजतोः ।
रचयेद् घट्टनमन्तः[6] कन्यायाश्चैवमातनुयात् ॥१३॥
स्तनयोरथ[7] संहतयोः करकक्षास्थानयोर्गले चांसे ।

---

१ साम्प्रतं यन्त्रयोगानन्तरप्रयोज्यानि उपसृप्त(ष्ट)कमन्थनादीनि पुरुषोपसृप्तकान्यभिधातुमारम्भाद् यन्त्रयोजनपर्यन्तं पुरुषकृत्यमाह—पुरुष इत्यादिना ।

२ अयं पाठः क. ग. पुस्तकानुसारी । आदर्शे तु 'तस्यां किञ्चित्' इत्यस्ति ।

३ 'व्याकुली—' क. ।

४ 'तत्रैनाम्' क. ग. । तत्र तत्रोरुस्तनादिष्वेतां नायिकां रागजननार्थं हस्तेन स्पृशेत् । इदं नायकेन असकृत्संगताया अतिविस्रब्धाया विषये उक्तम् । अजातविस्रम्भायाः प्रथमसमागमवत्याः कन्यायाश्च विषये उच्यते—प्रथममित्यादिना ।

५ 'प्रथमं सुसंगता' इत्यस्य '(नायकेन सह) प्रथमं पूर्वं सु=सुष्ठु=सम्यक् जातसंगा' इत्यर्थो भवति । स चात्र न विवक्षितः । विवक्षितार्थस्तु 'तेन ना केन प्रथमं प्रथमवारमेव या संगता न तु पूर्वं कदापि (प्रथमसमागमवतीति यावत्)' इत्यस्ति । ततश्च 'प्रथमं सुसंगता' इति पाठो वृत्तपूरक एव न तु विवक्षितार्थपूरकः । 'प्रथमः समागमश्चेत्' इति पाठे कल्पिते तु विवक्षितसिद्धिः ।

६ '—मूर्वोः' ख. ।

७ स्तनयोर्भुजमय्या सूच्या संहतयोः, करयोः परस्पराश्लिष्टयोः प्रत्येकं बद्धमुष्ट्योर्वा, कक्षयोः प्रत्येकं कृतसंकोचयोः, गले हस्तपाशसंश्लेषात्संहते, अंसयोश्च हस्तयोजनाद् ग्रीवाबाहुशिखरयोजनाद्वा संहतयोः तद्विवृतीकरणार्थं हस्तेन यथायोगं

स्वैरिण्यां रचयेदिति सात्म्यं योगं पुरस्कृत्य ॥१४॥
अलके निर्दयमेनामवलम्ब्येताथ चुम्बनं कर्तुम्।
अङ्गुलिसंपुटकेन च हनुदेशे प्रस्फुरन्मदनाम् ॥१५॥
तत्रेतरा[1] सलज्जा रचयेदामीलनं दृशोः सुमुखी।
प्रथमसमागमसमये रतिसंयोगे च कन्यायाः[2] ॥१६॥
एषा कथमनुरक्ता स्यादिति कुर्यात्प्रवृत्तितो वीक्षाम्।
[3]उपसर्पन्(र्पेद्)युतयन्त्रो यत्रैषा प्रापयेद् दृष्टिम् ॥१७॥

---

घट्टनं कार्यम्। एतदपि प्रथमसंगतायाः कन्यायाश्च विषये बोध्यम्। स्वैरिण्यां (=रूढविस्रम्भत्वात्सुरते निस्त्रपं यथेष्टचारिण्याम्=अभियोक्त्र्याम्) तु सात्म्यं योगं च पुरस्कृत्य घट्टनादिकम्, चुम्बनार्थं निर्दयमलकेऽवलम्बनादिकं च प्रयोज्यम्।

८ 'मूलयोर्भुजे वामे' ख.।

---

१ 'तत्रेतरामलज्जां रचयेदामीलने दृशोः सुमुखीम्' ख.।

२ कन्याया अपि प्रथमसंगताया इव सलज्जता दृशोरामीलनञ्च बोध्यम्।

३ संबाधस्य यत्र आन्तरे भागे कामाङ्कुशेन उपसृप्यमाणा तत्स्पर्शसुखात् दृष्टिं प्रापयेत् तत्रैव भागे उपसर्पेत् (तमेव भागं कामाङ्कुशोपसर्पणेनात्यर्थं पीडयेत्)। तत्र हि पीडनाद्द्रुतं रतिमधिगच्छति। एतत्सुवर्णनाभमतं सूत्रकृतोऽभिमतमप्रतिषिद्धत्वात्। "अत्र च रतिनिबन्धनमेको बहव इति केषांचित् प्रदेशविवादः। तत्रोपसृप्यमाणा यस्मिन्नेकस्मिन्नियतेऽनियते वा देशे स्पृष्टा दृष्टिमावर्तयेत्तस्मिन्नेव पीडयेदित्येकः प्रकारः। बहुषु वा यस्मिन्नुपसृप्यमाणा दृष्टिमावर्तयेत्तस्मिंस्तस्मिन्नेव पीडयेदिति द्वितीयः। तत्रापि यस्मिन्नत्यर्थं दृष्टिमावर्तयेत्तस्मिन्नत्यर्थमेव पीडयेदिति बोद्धव्यम्। एतेन नाडीप्रदेशा अप्यन्यतन्त्रोक्ता व्याख्याताः। तेषामनेनैव प्रकारेण ज्ञायमानत्वात्।" (ज. मं.)। ते च नाडीप्रदेशाः ना. स. (१८।४-५) उक्ताः—"द्वे लोचने, द्वे वदने, तथैका तुण्डे, स्थिता वै मुखचोद्यनाड्यः। अङ्गुष्ठमूलाश्रितनाडिका तु तथा पदाङ्गुष्ठमुखेन चोद्या॥ कर्णोरुपार्श्वत्रिकमस्तकेषु संचोदनीया करजेन नित्यम्। तृप्तिर्न तासां तु विपर्ययेण भवेत्कदापीति वदन्ति धीराः॥" इति (एवं वराङ्गमुखम्, वराङ्गमध्य-

व्रीडां तस्यास्तत्र च नुद्यादेतद्रहस्यमेणाक्ष्याः।
आह च सुवर्णनाभः कामागममार्गमाश्रित्य॥१८॥
व्रीडानाशः स्रस्तिर्गात्राणां मीलनोदयश्च दृशोः।
इति रत्य (तिर)धिका ज्ञेया (यं) भावोदयलक्षणं स्त्रीणाम्॥१९॥
कम्पो दशनं स्वेदः करपङ्कजयोर्विधूननं खेदः।
उत्थानातर्पणमथ निहतिश्चरणाम्बुजाभ्यां च॥२०॥

---

भागः, मदनातपत्रशिखरम्, चूचुकौ चापि नाडीप्रदेशा बोध्याः) किञ्च तत्रैव (१९ परिच्छेदे) सत्यसतीसुभगादुर्भगापुत्रीदुहित्रिणीत्याख्याः योन्यभ्यन्तरस्थनाड्यः, सती-(नाडी) संक्षोभणात् असती स्त्री कुप्यति, असतीसंक्षोभणात् सती कुप्यति, सती-संक्षोभणात् सती हृष्यति, असतीसंक्षोभणाच्चाऽसती; सुभगासंक्षोभणात् स्त्री सुभगा भवति, दुर्भगासंक्षोभणाच्च दुर्भगा; पुत्रीसंक्षोभणात् पुत्रवती, दुहित्रिणीसंक्षोभणाच्च दुहितृमती भवति; उभयोः संक्षोभणाच्च क्लीबं सूते–इति तत्तन्नाडीसंक्षोभणफलम्, वराङ्गस्य वामे भागे सती, दक्षिणेऽसती, रन्ध्रस्य किञ्चिदभ्यन्तरे दक्षिणे दुर्भगा, वामे च सुभगा, वराङ्गमुखस्य सर्वतोऽभ्यन्तरे वामे पार्श्वे पुत्री, दक्षिणे पार्श्वे च दुहित्रिणी–ति तत्तन्नाडीस्थानानि, "सती कुचेऽसती कक्षे, सुभगौष्ठे च, दुर्भगा। त्रिके, तुण्डे स्थिता पुत्री, नितम्बे तु दुहित्रिणी॥" इति तत्स्थानविषयकं मतान्तरम्, "एवं संचो-दिता नारी नान्यमिच्छति मानवम्। क्लीबोऽपि हृदयं सर्वं प्राप्नोत्येव न संशयः॥" इति सामान्येन नाडीसंक्षोभणफलञ्च प्रोक्तम्। अपि च बालादीनां नायिकानां मद-नातपत्रक्षोभणप्रकारोऽपि तत्रैव (१८।३) उक्तः—"संप्राप्य बालां करशाखयैव लिङ्गेन चात्मीयसमां समेत्य। लिङ्गाङ्गुलिभ्यां तु तथाभिरूढां प्रचोदनीयं मदनातपत्रम्॥" "ॐ कामदेवाय इदम् मे हर्षय हर्षय स्वाहा। क्षोभणमन्त्रः।" इति (करशाखा अङ्गुलिः। आत्मीयसमा युवती। अभिरूढा प्रौढा। उक्तक्षोभणमन्त्रमुच्चारयन् अङ्गुल्या-दिना मदनातपत्रं संक्षोभयेदित्यर्थः)।

---

१ 'रतिरधिकेति ज्ञेयम्' इति पाठ उचितः। २ 'दशनच्छेदः' ख.।

३ उत्थानातर्पणं पुरुषस्योत्थानेन अतृप्तिः। अप्राप्तभावा स्त्री पुरुषमुत्थातुं न ददा-तीति भावः। 'उत्थानासामर्थ्यं' ख.।

अतिवृत्ती[1] रतिविरतौ पुंसोऽनुदयस्य[2] लक्षणान्याहुः।
कामागमपरिशीलनचतुरा द्वित्रा युवानस्तु(?) ॥२१॥
एनां यत्रावसरात् पूर्वं संबाधं[3](?) हस्तिना सदृशः।
आमृदुभावात् क्षुब्धां रचयेत् करपङ्कजेनाऽसौ ॥२२॥

१ पुंसो रतिविरतौ तस्य अतिवृत्तिरतिवर्तनम् । तमतिक्रम्य स्वजघनव्यापारेण वर्तनमित्यर्थः।

२ 'हृदयस्य' ग.। 'ऽभ्युदयस्य' ख.। अनुदयस्य भावानुदयस्येत्यर्थः।

३ 'संवाद्य' ख.। "यन्त्रावसरात् पूर्वं संबाधे हस्तिना सदृशः। आमृदुभावात् क्षुब्धां रचयेदेनां करेणासौ॥" इति पाठः स्पष्टार्थः। स्वस्य भावप्राप्तावपि पुरुषः यां स्त्रियं कम्पदशनहस्तविधूननादिचेष्टाभिः अप्राप्तभावां (अत एव) चिरविसृष्टिं जानीयात्, तस्याः संबाधं यन्त्रयोजनात् पूर्वमेव (हस्तिना सदृश इति करौपम्यार्थम्) हस्तिकराकारेण करेण (करिहस्त इत्याख्यातेन) तावत् क्षोभयेद् यावत्तन्मृदुतां गच्छेत्। मृदुभूते हि तस्मिन्नुपसृप्यमाणा द्रुतं रतिमधिगच्छति। एवं सति संमरतमुच्चरतं वा सम्पद्यते, येन स्त्रिया नीचरतोद्वेगजा अभ्यसूया नश्यत्यनुरागश्च वर्धते। "अनामिकाप्रदेशिन्यौ श्लिष्टाग्रे ज्येष्ठया सह। करिहस्ताग्रसादृश्यात्तत्संज्ञं कृत्रिमं विदुः॥" इति करिहस्तलक्षणम्। अत्र सुभाषितं गोवर्धनाचार्यस्य—"लग्नं जघने तस्याः सुविशाले कलितकरिकरक्रीडे। वप्रे सक्तं द्विपमिव शृङ्गारस्त्वां विभूषयति॥" इति (आर्यासप्तशत्यां ५०५ आर्या) करिकरक्रीडा करिहस्तेन क्षोभणम्। वप्रपक्षे गजशुण्डाकेलिः। एतेन नागरसर्वस्वे (३६ परिच्छेदे) उक्ता अङ्गुलिप्रवेशा व्याख्याताः। किञ्च स्त्रिया भावप्राप्तेः पूर्वमेव स्वस्य भावप्राप्तिमासन्नवर्तिनीं बुद्ध्वा पुरुषो विषयान्तरचिन्तयाऽन्यचित्ततां सम्पाद्य नासावायुस्तम्भं कृत्वा च वीर्यच्युतिं निरोधयेत्। यदुक्तं रतिरहस्ये— "मुष्कशिराया मूलं दृढमङ्गुल्या निपीड्य रतिकाले। चिन्तान्तरनिहितमनाः कुम्भितपवनश्च्युतिं जयति॥" (१५।१६) इति। (मुष्कशिराऽण्डकोषगता नाडी) "शाखामृगमतिचपलं क्षितिरुहशाखागतिं विचिन्तयतः। ध्वजमुखपर्यन्तगतं बीजं पुरुषस्य जातु नो गलति॥" (५।४) इति च। एतदेव वर्णितं (नैषधचरिते १८।११४–११५) श्रीहर्षेण—"वीक्ष्य भावमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टिमे

**पश्चाद्रचयेदनया यन्त्रं यन्त्रादयन्त्रितस्मृतिभूः।**
**पुरुषोपसृष्ट[1] (प्त) कानि च कथयामो विस्तरादधुना ॥२३॥**
**उपसृप्त[2](ष्ट)कमथनहुलं मर्दनपीडे च निर्हतिस्तद्वत्।**

मृदुम्। कोऽयमित्युदितसंभ्रमीकृतां स्वानुबिम्बमददर्शतैष ताम्।" इति। (पद्मिनीत्वाल्लघुद्रवायाः प्रियायाः स्वतः पूर्वं भावप्राप्तिमासन्नवर्तिनीं बुद्ध्वा तस्याश्च्युतिवारणाय 'कोऽयम्' इत्युक्त्वा संभ्रमं समपादयदित्यर्थः। "अन्यतरस्य पूर्वं बिन्दुपतने विषमरतत्वाद्वैरस्यं स्यादिति बिन्दुस्तम्भार्थम् 'अन्यचित्ततया संभ्रमजननेन च भावबन्धं कुर्यात्' इति कामशास्त्रात्तस्या बिन्दुपातप्रतिबन्धमकरोदिति भावः।" इति तट्टीकायां नारायणः।) "तत्क्षणावहितभावभावितद्वादशात्मसितदीधितिस्थितिः। स्वां प्रियामभिमतक्षणोदयां भावलाभलघुतां नुनोद सः॥" इति च। द्वादशात्मनः (सूर्यस्य) सितदीधितेः (चन्द्रस्य) च स्थितिं (गगनगमनादिप्रकारं) चिन्तयित्वा तेन च अन्यचित्ततां संपाद्य, अथ च—सूर्यचन्द्रापरपर्यायेडापिङ्गलाख्यदक्षिणवामनाडीस्थयोर्मरुतोः स्थितिं (निरोधं) कृत्वा स्वबिन्दुपातं प्रतिबबन्धेत्यर्थः। अन्यदप्याहाऽत्र नारायणः—'दक्षिणनासामुद्रणे पुरुषस्य, वामनासिकामुद्रणे योषितो बिन्दुस्तम्भो भवति।' इति कामशास्त्रात् (दक्षिणनासामुद्रणेन) स्वीयं (वामनासामुद्रणेन) तदीयं च भावं स्थिरीचकारेति वा।" इति) एवं दशकुमारचरितेऽपि (३ उ० उ० पी०) "अवसितार्थां चाऽऽरक्तवलितेक्षणामीषत्स्वेदरेखोद्भिदजर्जरितकपोलमूलामनर्गलकलकलप्रजापिनीमरुणदशनकररुहार्पणव्यतिकरामत्यर्थपरिश्लथाङ्गीमार्तामिव लक्षयित्वा मानसीं शारीरीं च धारणां शिथिलयन्नात्मानमपि तया समानार्थमापादयम्।" इति मानसी शारीरी च धारणा वीर्यच्युतिनिरोधायोक्ता। तल्लक्षणं च 'शरीरधारणा यत्तु भौतिकं तु निरीक्षणम्। मानसं तु मुनीनां स्यादाश्रमेषु विसर्पणम्। अभ्यासं (साद्) धारयेद्रेतो यावत्स्यात् कृतिनिर्वृतिः॥" इति तट्टीकायां पदचन्द्रिकायामुक्तम्। एतद्धारणाद्वयमुल्लिखितसमानार्थमेव।

---

१ 'पुरुषोपसृप्तकानि' क.। आलिङ्गनचुम्बनादिबाह्यरतेन करिहस्तादिना गुह्यक्षोभणेन च स्त्रियं प्रोद्दीप्तमदनां विधायाऽनन्तरं यन्त्रं घट्टयेत्।

२ 'उपसृष्टकम्' ग.। 'उपसृप्तकमथ नकुलं' ख.। मथनं (सूत्रे) 'मन्थनम्'। 'उपसृप्तकमथनहुलम्' इति समाहारे क्लीबत्वमेकत्वं च। मर्दनम् (सूत्रे) 'अवमर्दनम्'।

शूकरवृषनिर्घातौ चटकविलासस्तथैवान्यः ॥२४॥
संपुटसहितः प्रोक्तो वात्स्यायनसारसंसृ(दृ)ष्ट्या[1] ।
लक्षणमेषां क्रमशः कथयामस्तत्त्वबोधाय ॥२५॥
न्याय्यं मृदुसंमिश्रणमुपसृप्तकमत्र[2] कामिभिः कथितम् ।
भ्रामणमथ हस्तेन च मन्थनमिह[3] सर्वतो लैङ्गम्[4] ॥२६॥
नीचीकृत्य जघनमथ तदुपरि संघट्टयेद्ध्वजं च हुले[5] ।
उच्चं[6] सरभसमिदमवमर्दनमिति संज्ञया समाम्नातम् ॥२७॥
आहत्य ध्वजतश्चिरमवतिष्ठेत् पीडयन् यदा पुरुषः ।
पीडितकं तदिहोक्तं शास्त्रज्ञैरर्थयोगेन ॥२८॥
उत्कृष्य स्वं जघनं दूराद्वेगेन पातयेच्च यदा ।
निर्घातोऽसौ कथितो मुनिना निर्घातयोगेन ॥२९॥

---

पीडा ( सूत्रे ) 'पीडितकम्' । निर्हतिः ( सूत्रे ) निर्घातः । शूकरनिर्घातो वृषनिर्घातश्च ( सूत्रे ) 'वराहघातो वृषाघातश्च' । चटकविलासः ( सूत्रे ) 'चटकविलसितम्' । "उपसृप्तकमन्थनहुलभवमर्दनपीडिते च निर्घातः । अथ वृषवराहघातौ चटकविलसितं तथैवान्यत् ॥" इति पाठे तु भूयसा सूत्रानुसारित्वं संगच्छते । अतश्चायमेव पाठउचितः—एषां वक्ष्यमाणलक्षणेषु ग्रंथकृता सूत्रोक्तसंज्ञाभिरेव व्यवहारात् ।

---

१ 'संदृष्ट्या' क. ।

२ 'उपसृष्टकम्' ग. । 'मृदुसमिश्रणाम्' इत्यत्र सूत्रे 'ऋजुसंमिश्रणम्' इत्यस्ति । "लिङ्गेन संबाधस्य मिश्रणात् सर्वमेवोपसृप्त(ष्ट कम् । तत्र यदृजु प्रगुणं न्याय्यमागोपालाङ्गनाप्रसिद्धं मिश्रणं तदुपसृप्तकमिति कन्प्रत्ययेन विशेषसंज्ञां दर्शयति ।" ज. मं. ।

३ हस्तेन लिङ्गस्य संबाधाभ्यन्तरे सर्वतो भ्रामणं मन्थनम् ।

४ 'नकुलम्' ख. ।

५ 'बहुलम्' ख. । ६ जघनमुच्चं कृत्वा तदुपरि ध्वजस्य सरभसं घट्टनमवर्दनम् ।

एकत इह भूयिष्ठं लिखने कथितो वराहघातोऽसौ ।
उभयत्र क्रमलिखने वृषघातः कामिभिर्ज्ञेयः ॥३०॥
वारैकं संमिश्रितमनिःसार्यैतत्[1] समस्तदेशेषु[2] ।
द्वित्रिश्चतुरिति घट्टनमुदितं चटकस्य[3] लीलेति ॥३१॥
व्याख्यातं[4] करणं त्विह रागावसितौ तु संपुटख्यात्या ।
तेषां स्त्रीसात्म्यादिह[5] युक्तो योगो विकल्पेन ॥३२॥
पुरुषायितेऽधिकानि तु कथितान्यन्यानि संज्ञया त्रीणि ।
संदंशभ्रामरकौ[6] प्रेङ्खोलितमुल्लसत्कामम् ॥३३॥
वाडवकेन[7] गृहीत्वा निष्कर्षन्त्याः प्रपीडयन्त्या वा ।
सुचिरं स्थानं प्रोक्तं संदंशत्वेन शास्त्रेषु ॥३४॥
यत्राभ्यासाधिक्याच्चक्रभ्रमणं गृहीतयन्त्रायाः ।
तमिह भ्रमरकमाहुर्जघनोत्क्षेपोऽत्र[8] पुंसस्तु ॥३५॥
दोलावज्जघनस्य प्रेङ्खोलितमुच्यतेऽभितो[9] भ्रमणे ।
लक्षितमेवं त्रितयं वात्स्यायनभाषितेनेह ॥३६॥

---

१ अनिःसार्येत्यर्थः ।

२ 'समान्त–' ग., 'समन्त' आ पु. क. ।

३ चटकविलसितमित्यर्थः ।

४ संपुटं करणमस्मिन्नेवाधिकरणे ( ६ । १२ ) व्याख्यातम् । तत्र लिङ्गमनिष्क्रमय्य जवनेन जघनमवगूह्य यत्संमिश्रणं तदपि संपुटमित्युक्तम् । इदं रागावसितौ ( विसृष्टचवस्थायामेव ) स्वभावत्वात् । ५ 'कृति' ख. ।

६ सत्रे 'भ्रमरकः' इति ।

७ वाडवकं करणमस्मिन्नेवाधिकरणे ( ६ । १५ ) लक्षितम् । निष्कर्षन्त्याः अन्तः समाकर्षन्त्याः । स्थानमवस्थितिः ।

८ 'जघनोपरि यत्र' ख. । ९ 'मिथो' ख. ।

अलिकेऽलिकं[1] निधाय स्वीयं रमणस्य युक्तयन्त्रैव ।
पुरुषायितेन खिन्ना विश्रामं प्राप्नुयादुचितम्[2] ॥३७॥
पुरुषस्याऽऽवर्तनमिह पुनरुचितं स्त्रियां[3] विश्रमे जाते ।
इति पुरुषायितरूपं कथितं मुनिना विविच्यैव ॥३८॥
प्रच्छादितस्वभावा तद्वत्परिगूढरागसंभारा[4] ।
विवृणोति स्वं भावं रागादुपरि स्थिता यूनः ॥३९॥
शीलं रतिलालसतां तत्त्वेनास्यास्तदीयचेष्टाभिः ।
जानीयादनुरक्तस्तस्यां स्यादानुकूल्येन[5] ॥४०॥

---

१ 'अङ्केनिधाय च शिरः स्वीयं रमणस्य युक्तयन्त्रैव' ख. । २ अत्र गोवर्धनाचार्यस्य सुभाषितम्–( नाहं श्राम्यामीति प्रतिज्ञापुरःसरं पुरुषायिते प्रवृत्तां समनन्तरमेव श्रान्तां नायिकां नायक आह–) "वक्षः प्रणयिनि सान्द्रश्वासे वाङ्मात्रसुभटि घनघर्मे । सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि ॥" इति (आर्यासप्तशत्यां ५२९ आर्या)। अत्रत्यैः सर्वैः सम्बोधनपदैः श्रमजन्यं निःसहत्वं प्रतिपादितम् ।

३ अयं पाठः छन्दोभङ्गावहः । 'विश्रमे स्त्रिया जाते' इति पाठ उचितः । स्त्रियां रतिश्रान्तायां पुरुषस्य पुनरावर्तनम् ( स्त्रियमधःपात्य तदुपरि आरोहणम् ), विसृष्टिकाले पूर्वोक्तसंपुटाख्यकरणयोजनं च । एवमप्यतृप्तायाश्चण्डवेगायास्तृप्तये अङ्गुलीरतप्रयोगः, अत्रैव ग्रंथे औपनिषदिकाधिकरणे द्वितीयेऽध्याये वक्ष्यमाणानामपद्रव्याणां (कृत्रिमलिङ्गानां) योजनं वा–इत्याह रतिरहस्यकारः ( १० । ५० ) "सश्रमामथ विभाव्य पातयेत् संपुटं च घटयेद् विसर्जने । तृप्तिमेति यदि नैवमप्यसावाचरेद् गदितमङ्गुलीरतम् ॥" इति ।

४ अत्र सूत्रे 'गूढाकारापि' इति पाठः । गुप्ताभिप्रायसूचकाकारापीति तदर्थः । 'गूढरागापि' इति तत्रैव पाठान्तरम् ।

५ स्त्री किंस्वभावा कीदृशं च रतमभिलषतीति पुरुषायिते उपरिवर्तिन्यास्तस्या एव विचेष्टाभिरुपलक्ष्य उत्तरकाले तथैव सुरते समुपक्रमेत, येन स्त्रियाः सम्यक् चेतोरञ्जनं संपादयितुं सुशकं स्यादिति भावः । इदं पुरुषायितस्य विशिष्टं फलम् ।

पुरुषायिते न नारीमृतुकालीनां नवप्रजातां च ।
न मृगीं गर्भवतीं वा नातिस्थूलां युतां कुर्यात् ॥४१॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांप्रयोगिकेऽधिकरणे स्पष्टोऽभूदष्टमोऽध्यायः ॥४२॥

## अथ नवमोऽध्यायः ।

नवमं नवं[2]मं कुरुतेऽध्यायं सांयोगिकेऽधुना वीरः ।
अधिगत्य येन समरं निर्वीरो वैरिवर्गोऽभूत् ॥१॥
प्रकृतिर्द्विधा तृतीया[3] स्त्रीपुंभेदेन तत्र पूर्वा तु ।

---

१ ऋतुस्नातायाः गर्भस्थितेरसम्भवात् ( एतदभिवादिनी सूक्तिर्यथा—"विपरीत-सुरतलम्पट मम किं पृच्छसि गर्भसंभूतिम् । अपवृत्ते कुम्भमुखे जललवकणिकापि किं तिष्ठति ।" इति ( ७ । ५० गाथासप्तशत्याम् ), नवप्रसूतायाः संबाधक्लेशावहत्वात्, मृग्याः सौकुमार्यातिशयेन तदसहत्वात्, गर्भवत्या गर्भपातभयात्, अतिस्थूलायाश्च तदयोग्यत्वात् न पुरुषायिते योजनम् । अत्र गोवर्धनाचार्यस्य सुभाषितं यथा—( सखी गर्भवतीं नायिकां शिक्षयति— ) "परिवृत्तनाभि लुप्तत्रिवलि श्यामस्तनाग्रमलसाक्षि । बहुधवलजघनरेखं वपुर्न पुरुषायितं सहते ॥" इति (आर्यासप्तशत्यां ३६३ आर्या)। (गर्भावस्थायां जघने कण्डूतेर्जायमानत्वात् नखैर्वारं २ कण्डूयनेन बहुधवलजघनरेखमिति । एतत्सर्वं परिपक्वगर्भस्यं लक्षणम् । एवं चाधुना प्राग्वत्पुरुषायितं न विधेयमिति व्यङ्ग्यम् । ) अथ च विपरीतरते गर्भस्य संभवेऽपि दुष्टसन्ततयुत्पत्तेः नाचरणीयम् । यथोक्तम्—"यो भार्याया-मृतौ मोहादङ्गनेव प्रवर्तते। तस्य स्त्रीचेष्टिताकारो जायते षण्ढसंज्ञितः। ऋतौ पुरुषवद्वापि प्रवर्तेताङ्गना यदि। ततः कन्या यदि भवेत्सा भवेन्नरचेष्टिता॥" इति (सुश्रुते सू. स्था. २ अ.)

२ नवा मा लक्ष्मीः शोभा यस्य तत् नवमम् । व्याख्यया सम्यगर्थविशदीकरणे-नाभिनवशोभमित्यर्थः । 'नवममनवमं' ख. ।

३ तृतीया प्रकृतिर्नपुंसकम् । आलिङ्गनादि पुरुषायितान्तं स्त्रीविषयमुक्तम् । अधुना यदौपरिष्टकमुच्यते तस्य तृतीया प्रकृतिर्मुख्यो विषयः । सा द्विविधा—स्त्रीरूपिणी स्तनादियोगात्, पुरुषरूपिणी च श्मश्रुलोमादियोगात् । तत्र स्त्रीरूपिणी स्त्रीणां वेषालापादिकमनुकरोति ।

वेषालापौ[1] यानं लीलां भावं च भीरुत्वम् ॥२॥

मृदुतासुखिताव्रीडाः स्त्रीणामनुयाति[2] चाऽसहिष्णुत्वम् ।

वदनेऽस्या जघनास्थितिशालिनि[3] वात्स्यायनः प्राह ॥३॥

प्रथं[4] (रत) मौपरिष्टकं खलु लभते[5] चैषा ततोऽधिकां वृत्तिम् ।

स्वीकृतवेश्याचरिता रतिमभिमानाद्[6] व्रजत्येषा ॥४॥

अन्या पुरुषाकृतिरिह गुप्तानङ्गा[7] प्रियं भजेद् युक्त्या[8] ।

संवाहकादिभावं द(ग)त्वा[9] नैवं[10] प्रकाशं तु ॥५॥

गत्वा संवाहकतां गात्रैरूरू परिष्वजन्त्यस्य ।

गृह्णीयात्[11]परिचं[12]यभूरूर्वोर्मूलं स्पृशन्ती च ॥६॥

---

१ 'वेषालापौ पानं लीला भावश्च भीः स्वप्नः ।' ख. ।

२ '–मनुपातिता सहिष्णुत्वम्' ख. ।

३ अस्याः जघनस्थितिशालिनि(जघनं लक्षणया स्मरमन्दिरम्) स्मरमन्दिरस्थानीये मुखे रतं वात्स्यायन औपरिष्टकमित्याह। "भगे लिङ्गेन यत्कर्म तन्मुखे क्रियमाणमौपरिष्टकम्" ज. मं. । उपरिष्टात् (मुखे) भवतीति 'तत्र भवः' इत्यण् । 'अव्ययानां भमात्रे टिलोपः' । ततः 'संज्ञायां कन्' । औपरिष्टकमिति मुखरतस्याऽऽचार्यकृता संज्ञा ।

४ 'प्रथमौपरिष्टकम्' इत्यत्र 'रतमौपरिष्टकम्' इत्युचितम् ।

५ 'लभते' ग. । 'प्रथमे' आ. पु. । एषा तृतीया प्रकृतिः । ततः औपरिष्टकात् । वृत्तिं जीविकाम् ।

६ आभिमानिकीं रतिं प्राक् (२।१।७६) लक्षितां प्राप्नोतीत्यर्थः ।

७ 'गुप्ताङ्गा च' ख. ।

८ 'युक्त्या' क. ख. । 'युक्ता' आ. पु. ।

९ 'गत्वा' क. ।

१० '–ऽन्ते च' ख. ।

११ 'मृद्गीयात्' इति सूत्रे । 'गृह्णीयात्' इति च तत्रैव पाठान्तरम् ।

१२ प्रगतपरिचयेत्यर्थः । 'परिचर्या' ख. ।

उपलभ्य ध्वजं[1]धैर्यं मथ्नीयात् पाणिना दृढं बहुधा ।
चापलमस्य सकृत्सं प्र[2]हसेदनुपक्रमेऽप्येवम् ॥७॥
स्वयमारचयेदुद्यममुद्युक्तेऽस्मिन् विवादशीलैषा ।
उपगच्छेत् कृच्छ्रादिह कर्माष्टकमत्र निर्दिष्टम् ॥८॥
अविकल्पतः प्रयोज्यं निमितं दष्टं च पार्श्वतस्तद्वत् ।
[3]संदंशौ बहिरन्तश्चुम्बितपरिमृ[4]ष्टके चैव ॥९॥
अम्रावचूषितं ननु संग[5]र इति तेषु चै[6]यमेकैकम् ।
अभ्युपगम्य विरामेऽभीप्सां संदर्शयेत् स्वस्य ॥१०॥
इत[7]रः पूर्वोपगमात् परतो निर्देशमाचरेत्परतः ।
तस्मिन् सिद्धे तदपरमिति नीतिः कर्मणामेषाम् ॥११॥

---

१ 'ध्वजधर्मम्' क. । स्थिरलिङ्गतामित्यर्थः ।

२ स्वाभिप्रायख्यापनार्थं हसेत् । न तु कथ्येत् । पुरुषः स्तब्धलिङ्गत्वेन प्रकटितरागलक्षणोऽपि इयमौपरिष्टकाभिलाषिणीति तदभिप्रायं जानन्नपि कुरु मुखचापलमिति तां स्वयं न प्रेरयति चेत्तर्हि सा स्वयमेव तस्मिन् मुखचापलं कर्तुमुपक्रमेत् । पुरुषेण स्वयं प्रेर्यमाणा तु सहसाङ्गीकारप्रतिषेधार्थं नाहमेवं करोमीति विवदेत्, पुनः पुनरनुबध्यमाना च कृच्छ्रेणाभ्युपगच्छेत् । या तु स्त्रीरूपिणी सा प्रकटकामत्वादप्रेरिताऽप्यादित एवोपक्रमेदिति ।

३ बहिःसंदंशोऽन्तःसंदंशश्चेति संदंशद्वयम् । ४ 'परिपृष्टके' क. ।

५ 'संगर' क., सूत्रे च । 'संसर' आ. पु. ग. । 'संरत' ख. । एतानि क्रमेण अविकल्पतः ( समुच्चयेन ) प्रयोज्यानि । ६ 'वैद्य–' ख. ।

७ इतरः नायकः पूर्वोपगमात्=पूर्वं निमितमुपगतमुपलभ्य ( ल्यब्लोपे पञ्चमी ) परतः=ततः पश्चात् परतः=परार्थं ( चतुर्थ्यर्थे सार्वविभक्तिकस्तसिल् )=परस्य तदुत्तरस्य पार्श्वतोदष्टस्य प्रयोगार्थं निर्देशमाचरेत् प्रेरयेदित्यर्थः । तस्मिन्नपि क्रियया सिद्धे तदपरं बहिःसंदंशं प्रयोक्तुं निर्दिशेत् । एवं स्वरागसमाप्त्यर्थं क्रमेण सर्वं प्रयोक्तुं निर्दिशेत् । नायिकापि चाभिमानिकसुखजननार्थं तथैव प्रयुञ्जीतेत्ययमौपरिष्टके चोदनायां विधिः ।

ओष्ठोपरि विन्यस्तं हस्तेनालम्बितं ध्वजं पुरुषः[1] (पुंसः)।
उपविध्यात्[2]संधुनुयादेतन्निमितं मुनिः प्राह ॥१२॥
आच्छाद्याग्रं परतो निर्दशनं[3] दशनवसनयुग्मेन[4]।
दष्टं पार्श्वत इष्टं पीडायां[5] पार्श्वतः शास्त्रे ॥१३॥
अत्र भवन्त्वेतावत् सान्त्वनमिति[6] कामिनोर्मुदेऽभिमतम्।
भूयोऽपि चोदिताऽसौ संमीलितदशनवस्त्रा चेत् ॥१४॥
संपीड्याग्रं तस्य च मुञ्चेद्[7]दंशो बहिर्भवेत्कृष्टौ[8]।
तस्मिन्नभ्यर्थनया यदि किञ्चित् प्रक्षिपेदधिकम् ॥१५॥
अग्रौष्ठाभ्यामियमथ चरितानिवृत्तिर्यदा[9] बहिः कुरुते।
अन्तः संदंशोऽसौ वात्स्यायनभाषितेनेह ॥१६॥
हस्तावलम्बितस्य च चुम्बितकं दन्तवस्त्रवद्ग्रहणे[10]।
परिमृष्टकमिदमुक्तं तत्कृत्वा जिह्वयाग्रेण ॥१७॥

---

१ अत्र 'पुंसः' इत्युचितम्।

२ 'उपविध्यांसं–' ग.। सूत्रानुसारं तु 'अपविध्यात्' इत्युचितम्। वर्तुलीकृतेन ओष्ठेन ध्वजमवष्टभ्य स्वं मुखं कम्पयेदित्यर्थः।

३ दन्तवर्जमित्यर्थः। ४ ओष्ठद्वयेन।

५ पार्श्वयोः पीडने।

६ 'साधन–' ख.।

७ अत्र सूत्रे 'चुम्बेत्' इत्यस्ति। 'मुञ्चेत्' इति तत्रैव पाठान्तरम्।

८ 'सृष्टः' ख.। कृष्टौ कर्षणे। कर्षयन्ती ध्वजस्याग्रं निष्पीड्य मुञ्चेदिति बहिःसंदंशः। ९ 'चरितनिवृत्तिम्' क.। तच्च ध्वजस्य विशेषणम्। मुखान्तरान्निवर्तितमिति तदर्थः। चरितनिवृत्तिः=कृतनिवृत्तिः (अन्तः प्रवेशितं ध्वजं निवर्त्येत्यर्थः) निष्पीड्य बहिः कुरुते ष्ठीवति। अन्तः प्रवेशितस्याग्रौष्ठाभ्यां संदंशादन्तःसंदंशः।

१० यथाऽधरोष्ठस्योष्ठाभ्यां ग्रहणं क्रियते तद्वद्ग्रहणे।

घट्टनमभितोऽग्रेण च तद् [1]व्यधनं रागभारसंयोगात् ।
अर्धप्रविष्टमीदृग्दशनासङ्गापुरस्कारात् ॥१८॥
मुहुरवपीड्य विमुञ्चेन्निगदितमिदमाम्रचूषितं शास्त्रे ।
पुरुषाभिप्रायवशादवगिरणं पीडनं च[3]ऽऽन्तम् ॥१९॥
उक्तः संग[4]रनामा प्रहणनयोगा[5] इहार्थतो ज्ञेयाः ।
वात्स्यायनानुसारी विधिरयमत्रौपरिष्टके कथितः ॥२०॥
स्वै[6]रिण्यो दास्यो वा कुलटाः संवाहिकास्तथा चैतत् ।
सम्यक् प्रयोजयन्ति न कार्यं समयस्थि[7]तेरेतत् ॥२१॥

---

१ 'रचनं' ख. ।

२ दशनानामसङ्गात्, (ध्वजस्य) अपुरस्काराच्च । दन्तवर्जं जिह्वौष्ठपुटेनैव (अवपीड्य), अर्धादधिकमन्तरप्रवेश्य चेत्यर्थः ।

३ 'वान्तम्' क. । आन्तम्=('आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः) आ अन्तात्=आसमाप्तेरित्यर्थः। "पुरुषाभिप्रायादेव गिरेत्पीडयेचाऽऽपरिसमाप्तेः" इति सूत्रम्।

४ 'संसर–' आ. पु. ग. । 'संगरतानां' ख. ।

५ '–योगादिहा–' आ. पु. ।

६ याः स्वं कुलमन्यद् वा सदृशमटन्ति भ्रष्टशीलास्ताः कुलटाः । याः सदृशमसदृशं वा कुलमविचार्य स्वच्छन्दचारिचारिण्यस्ताः स्वैरिण्यः । या अन्यपूर्वा अनन्यपूर्वा वा मुक्तप्रग्रहा नायकमुपचरन्ति ताः परिचारिकाऽपरपर्याया दास्यः । संवाहिकाः संवाहनकर्मोपजीविन्यः । एता अप्यौपरिष्टकमाचरन्ति, न तु केवलं तृतीया प्रकृतिरिति । 'कर्णाटचेटीमिव मुखरतां न प्रशंसन्ति साधवः ।' ( मुखरतां वाचाटताम् । पक्षे मुखे रतं यस्यास्ताम् ) इति ( ४ उ. ) नलचम्पूश्लेषात् तत्काले कर्णाटदेशे चेटीषु मुखरतप्रचार आसीदित्यवगम्यते ।

७ 'समुपस्थिते' ख. । 'न मुखे मेहेत' इति मुखमेहननिषेधरूपात् धर्मशास्त्रसिद्धान्तादित्यर्थः । एतत् औपरिष्टकं न कार्यम् ।

अपि वाऽसत्य(सभ्य)[1]तयाऽऽस्यां पुनरपि वदनाम्बुजस्य संसर्गे।
स्वस्याप्यार्त्यापत्तेरिति[2] कथयत्यागमाचार्यः ॥२२॥
योगाभ्यासादधिगततत्त्वो वात्स्यायनो गुणाभिरुचिः।
दोषोऽयमपरिहार्यो[3] वेश्याभिरताविति प्राह ॥२३॥
अत एव प्राच्यानां रतिलीलायामिमाः[4] सदा वर्ज्याः।
आहिच्छत्रिकदेश्या वेश्यानां संगमारुचयः[5] ॥२४॥

१ '–ऽसह्यतया' ख.। 'असभ्यतयेति सभायां साधु सभ्यम्, न सभ्यमसभ्यम्। सद्भिर्गर्हितमित्यर्थः। तस्य भावस्तत्ता तया। समयविरोधादसभ्यत्वाच्चौपरिष्टकं न प्रयोज्यमिति। अपि च यदा कुलटादीनां मुखे जघनकर्म कुर्यात्तदा पुनरपि जघनकर्मकाले रागवशाद्वदनसंसर्गे विटालितोऽस्मीत्यार्तिं प्रतिपद्येत। अतोऽपि न प्रयोज्यमौपरिष्टकम्।

२ '–त्यर्थापत्ते–' ख.।

३ अयं दोषोऽपरिहार्यः अत्याज्यः, अदोष इत्यर्थः। तथा च सूत्रम्—"वेश्याकामिनोऽयमदोषः।" इति। "कुलटादयो वेश्याविशेषास्तत्कामिनो नायकस्यादोषोऽयम्। समयविरोधादित्ययं दोषो न भवतीत्यर्थः। पत्न्याश्चौपरिष्टकादौ दोषः–'न मुखे मेहेत' इति। यदाह वसिष्ठः—"यस्तु पाणिगृहीतायां मुखे मैथुनमाचरेत्। पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च॥ इति''ज. मं.। एवमन्यत्रापि निषेधः स्मर्यते–"यस्तु-पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवेत स दुष्यति (३१) प्राजापत्येन शुध्यति (३२)" इति (उ. स्मृ. २।३१–३२) 'वक्त्रमैथुनकर्ता तु खल्वाटो जायते नरः' इति वृद्धगोतमः। "धर्मपत्न्यामास्ये प्रवर्तकः खल्वाटः" इति शङ्खलिखितवचनम्। एवं पाय्वादिगमनमप्य-प्राकृतं न कार्यं महाहानिकरत्वात्। अतएव पायुगामिनां वधदण्डो निर्दिष्टो महानिर्वाण-तन्त्रे (११।४४) "गच्छतां कामतः पुंसः स्त्रियाः पायुं दुरात्मनाम्। वध एव विधा-तव्यो भूभृता शम्भुशासनात्॥" इति।

४ इमा औपरिष्टककारिण्यो वेश्याः।

५ 'संगमेऽरुचयः' ख.।

[1]साकेतकास्तु तासु न केवलमिह वक्रकर्मणे निरताः ।
रचयति नागरि[2] (र) को नतु तत्कर्मैवाऽऽसु सक्तोऽपि ॥२५॥
अविशङ्कया तु सर्वं[3] रचयन्त्येवेह सौरसेना ये ।
ते कथयन्ति न लौकिकदृष्ट्या शौचादि नारीषु ॥२६॥
[4]त्याज्या नैतास्तासां वदने तत्कर्मपात्रभूतेऽपि ।
चुम्बनमनुप्रयोज्यं स्त्रीमुखमि[5]त्यादि वाक्येन ॥२७॥
व[6]चनं तु सावकाशं सुचरितनारीषु चुम्बने विषये ।

---

१ साकेतकाः (आयोध्यकाः) न केवलं तासु (वेश्यासु) निरताः, यावद् वक्रकर्मणे-वक्रकर्म चुम्बनं कर्तुमपि ('क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी) निरता भवन्ति । तेषां शौचाशौचविकल्पाभावात् ।

२ 'नागरको नतु तत्कर्म त्रासयुक्तोऽपि' ख. ।

३ सर्वं वेश्यासु संप्रयोगमौपरिष्टकं चुम्बनं च ।

४ 'इत्यपनेयं तासां' ख. ।

५ "वत्सः प्रस्रवणे मेध्यः श्वा मृगग्रहणे शुचिः । शकुनिः फलपाते तु स्त्रीमुखं रतिसंगमे ॥" इति वाक्यम् । (रतिसंगमे रत्यर्थे संगमे स्त्रीमुखं कृतौपरिष्टकमन्यद् वा मेध्यम् ।) अस्मिन् स्मृत्यर्थे सर्वत्र चुम्बनप्रसङ्गः । तत्र सूत्रकारस्य स्वं मतं दर्शयति-वचनं त्वित्यादिना ।

६ 'स्त्रीमुखं रतिसंगमे' इति वचनं तु सुचरितनारीणां (पत्नीनां) चुम्बने सावकाशम् । पत्नीमेवाधिकृत्य तद्वचनमित्यर्थः । तन्मुखस्य अकृतौपरिष्टकत्वात् । अत-एव कृतौपरिष्टकमशुद्धमिति कृत्वा नागरका वेश्यानां मुखचुम्बनं परिहरन्तीति पूर्व-मुक्तम् । एवं चेद् वेश्यासु "साकेतकास्तु तासु न केवलमिह वक्रकर्मणे निरताः ।" इति चुम्बनविकल्पस्यानर्थक्यमित्यत्र पाक्षिकमभ्यनुज्ञानमाह-देशस्थित्यादेरिति ।

देशस्थित्योदरिति वात्स्यायन आह संयोगम् ॥२८॥
[2]तरुणौपरिष्टकं किल तदुभयतः क्वापि चान्योन्यम् ।
स्त्रीयोगेष्वनुरागी कर्म्मैतत् सस्पृहस्तनुते ॥२९॥
[3]व्यासस्तस्य तु विदितश्चुम्बनचरिते मुखाम्बुजेनेह ।
युगपत्तु संप्रयोगो [5]यूनोरिह को (का) किलः कथितः ॥३०॥

---

१ 'स्थित्यादरितं' ख. ।

१ आदिना आत्मनो वृत्तिविश्वासौ ग्राह्यौ । यत्र देशे या स्थितिराचारस्तदनुरूपं प्रवर्तेत । देशाचारस्य तत्रत्यानां प्रामाण्यात् । एवमात्मनो यथा वृत्तिः स्यात्, यथा च विश्वासस्तथा प्रवर्तेत, न तु शास्त्रेणैव केवलेन । तस्मात्पूर्वोक्तो वेश्यासु चुम्बनविकल्पो नानर्थकस्तद्देशे तथाविधानस्य तत्रत्याचारसिद्धत्वात्, तदाचारस्य च तत्रत्यानां प्रामाण्यात् ।

२ तरुणाश्चेटस्वरूपा अजातश्मश्रवः स्वलङ्कृताश्च ( यथोक्तम्—"अजातश्मश्रवश्चेटा विश्वास्या मुखकर्मणि । योज्या गृहीतनेपथ्या नेतरे श्मश्रुदोषतः ॥" इति ) मन्दरागाणां गतवयसामतिव्यायतानां स्त्रीष्वलब्धवृत्तीनां च नराणामौपरिष्टकं (मुखचापलं) कुर्वन्ति । तदिदं तरुणौपरिष्टकं नाम । नागरकाश्च स्त्रीप्राया मिथोरूढविश्वासा 'मम तावत्कुरु, पश्चात्तवापि करिष्यामि' इति क्रमेण, रागवशात् कालानपेक्षणाद् देहव्यत्यासेन युगपद्वा अन्योन्यस्य विसृष्टिसुखजननाय औपरिष्टकं कुर्वन्ति । एवं स्त्रियोऽपि कुर्वन्ति । यथोक्तम्—"अन्तःपुरगताः काश्चिदप्राप्तभाण्डकाः (?) स्त्रियः । भगे ह्यन्योन्यविश्वासात्कुर्वन्ति मुखचापलम् ॥" इति ।

३ यथा स्त्रियः पुरुषाणां ध्वजे मुखचापलं कुर्वन्ति, तथा पुरुषाः परिचारकानायका वा स्त्रीणां संबाधे जिह्वया मुखचापलं कुर्वन्ति । तत्र पुरुषकर्तृकस्य मुखचापलस्य प्रकारः पूर्वोक्तमुखचुम्बनप्रकारवत् निमितादिना समादिग्रहणेन च यथासंभवं ज्ञेयः । 'व्यासः' इत्यत्र 'न्यासः' क. ।　　४ 'संप्रयोगे' क. ।

५ युवा च युवती च युवानौ तयोः ( 'पुमान् स्त्रिया' इत्येकशेषः ) स्त्रीपुंसयोः परिवर्तितदेहयोः ( पार्श्वसंपुटे पुमान् स्त्रिया ऊर्वोः शिरो निधाय, स्त्री च पुंसः इत्येवं-

अत एवास्मिन्निरतास्त्यक्ता वेश्या जनान् गुणैरुच्चान्।
रज्यन्ते दासादिषु नैषामस्मिञ्जुगुप्सेति ॥३१॥
विप्रो विद्वान् मन्त्री वाक्ये कुशलो न कारयेदेतत्।
अपि वा सम्प्रत्ययतां प्राप्तोऽधर्मोऽन्यथा भवति ॥३२॥
शास्त्रप्रचारमात्रान्नायं योगोऽखिलेषु देशेषु।

प्रकारेण) युगपत्परस्परोपस्थेन्द्रिये मुखचापलप्रयोगः को(का)किल इति कथितः। सूत्रे 'काकिलः' इत्यस्ति। 'कोकिलः' इति च तत्रैव पाठान्तरम्। 'काकिलः' इत्ययमेव जयमङ्गलाकारसंमतः पाठः। यदाह सः "काकिलः स्मृत इति–स्त्री पुमांश्च काक इव काकः मुखेनाऽमेध्यग्रहणात्। तौ विद्येते यस्मिन् काम इति पिच्छादिषु द्रष्टव्यम्। ककनं वा काको लौल्यम्। 'कक लौल्ये' इति धातुपाठात्। तद्विद्यते ययोः स्त्रीपुंसयोरितीनिप्रत्ययः। तौ लात्यादत्त इति।" इति। अत्र नायके कर्तरि साधारणमिदम् (असाधारणं चापि भवति)। इदं स्त्रीपुंसाभ्याम् 'कुरु तावन्मम, तवापि करिष्यामि' इत्येवं क्रमेणापि निर्वर्त्यते। परिचारके कर्तरि तु असाधारणं भवति, परिचारके स्त्रिया तदकरणादिति बोध्यम्। "तत्र साधारणासाधारणयोरसाधारणं श्रेयः। ततोऽपि परिचारकविषयं स्वतसंसर्गादि परिशुद्धम्।" (ज. मं.) तदेवाग्रिमेण दर्शयति—अत एवेत्यादिना।

१ अस्मिन मुखरते।

२ स्त्रियाः संबाधे मुखचापलकरणे। ३ लोके विश्वास्यः।

४ वदनसंस्पर्शदोषादिजोऽधर्मः। उपलक्षणमिदम्। तेन असभ्यत्वदोषो लोके लब्धप्रतिष्ठाहानिश्च भवतीत्यपि ज्ञेयम्।

५ ननु "व्यासस्तस्य तु विदितश्चुम्बनचरिते मुखाम्बुजेनेह।" इत्यनेन तस्यात्र शास्त्रेऽभिहितत्वात्, शास्त्राभिहितस्य च सर्वादरपात्रत्वात् सर्वस्याप्येतत्प्रयोगप्रसङ्गः–इति चेदत्राह–शास्त्रप्रचारेति। शास्त्रमभिधत्त इत्येतावदेव न प्रयोगे कारणम्, किन्तु शिष्टप्रवृत्तिरपीत्यर्थः। शास्त्रार्थानां व्यापकत्वात्, तत्प्रयोगाणां चैकदेशित्वात्। अत एव वैद्यके श्वमांसस्य रसवीर्यविपाकेषु अभिहितेष्वपि शिष्टाप्रवृत्त्या तन्न भक्ष्यते विचक्षणैरिति।

नास्ति श्वमांससक्तिर्वैद्योक्ता सर्वलोकस्य ॥३३॥
शास्त्रं[1] च ना ऽप्रमाणं पुरुषा देशास्तथा तथा कालाः ।
सन्त्येव यैरुपास्या अर्था निन्द्या अपि प्रकृताः[2] ॥३४॥
ज्ञात्वा च देशकालौ शास्त्रं चैव प्रयोगमात्मानम् ।
युञ्जीत योगमथवा भजतु विरागं प्रयोगेषु ॥३५॥
मनसश्चश्चलताया अर्थस्यास्यातिगुप्ततायाश्च[3] ।
को वेद कः कदाचित् कुर्यादेतत् कुतः कर्म ॥३६॥
निन्दिततामपि यातो ऽध्यायोऽयं वीरभद्रदेवेन ।
वात्स्यायनीयवृत्त्या उद्योगाप्तौ कथं त्याज्यः ॥३७॥
साध्वेव सन्निवेश्यं क्रियते चेद् भेदनात् स्वयं ग्रंथः ।
व्याख्यायां परराचिते तस्यानुसृतिः कथं त्याज्या ॥३८॥
श्रीवीरभद्रकृतिना शास्त्रेऽक्षमबाणशासनानुसृते ।
सांयोगिके ऽधिकरणे नवमो नवमः कृतोऽध्यायः ॥३९॥

# अथ दशमोऽध्यायः ।

अथ दशमं विशदयितुं राजकुमारोऽयमुद्यतारम्भः ।
संरम्भनिहतरिपुगणरमणीपरिभोगलुण्ठाकः ॥१॥

---

१ शिष्टपरिहृतत्वान्न प्रयोज्यमिदमितिचेत्—अत्र शास्त्रेऽस्याभिधानमनर्थकमित्यत्राह—शास्त्रं च नेति ।

२ प्रकृता अर्था मुखे योनिकर्म, योनौ मुखचापलं च ।

३ औपरिष्टकस्य रहसि प्रयोज्यत्वात्, मनसः ( विशेषतो रागसंदीप्तस्य ) अस्थिरत्वाच्च को विद्वानविद्वान् वा, कदा मत्तावस्थायामितरस्यां वा, एतत् पूर्वोक्तं प्रयोगजातम्, कुतो हेतोः रागवशाद्देशप्रवृत्तेर्वा कुर्यात्—इति को वेद । तस्मादत्र नियमो नाभिधातुं शक्यते ।

भोज इवायं[1] निरतो नानाविद्यानिबन्धनिर्माणे ।
समयोच्छिन्नप्राये सोद्योगः कामशास्त्रेऽपि ॥२॥
परिचारक[2]मित्राभ्यां सहितः पुष्पैः सुपुष्पितै[3]र्जुष्टे[4] ।
संचारितशुभधूपे रतिवासेऽलङ्कृते भवने ॥३॥
रचिततस्नानालङ्कृति[5]मीषत्पीतां च शास्त्रतो युक्त्या ।
रमणी[6]मुपक्रमोदिह सान्त्वनतश्चैव पानेन[7] ॥४॥
केशे हस्ते नीव्यां वस्त्रान्ते वावलम्बनं रतये ।
उपवेशनं विदध्याद्दक्षिणतो[8] हरिणशावाक्ष्याः ॥५॥
सव्येन बाहुनाऽस्याः परिरम्भोऽनुद्धतः[9] सुदृशः ।
पूर्वाध्यायनिसृष्टैर्वचनै[10] रागादिसंयुक्तैः ॥६॥

---

१ इदं क. पुस्तकानुसारम् । आदर्शग. पुस्तकयोस्तु 'इवायमनिरतः' इत्यस्ति ।

२ क. पुस्तकसूत्रयोः 'परिचारक' इति । आदर्श ग. पुस्तकयोस्तु 'परिवारक–' इत्यस्ति ।

३ 'सुपुष्टितैः' आ. पु. ।

४ 'जुष्टः' क. ।

५ 'रुपसि ज्ञानी' ख. ।

६ 'रमणीयम्' आ. पु. ग. ।

७ 'पातेन' आ. पु. ग. । 'पानेन' क. सूत्रे च ।

८ पुरुषः स्त्रिया दक्षिणपार्श्वे उपविशेत्––येन दक्षिणहस्तेन चषकग्रहणं वामेन च बाहुना आलिङ्गनम् ।

९ उद्वेगपरिहारार्थं मृदुरित्यर्थः । 'ऽप्यूरुयुग्मयोः' ख. ।

१० सूत्रे 'पूर्वप्रकरणसम्बद्धैः' इत्यस्ति । तस्य चार्थः 'अतिक्रान्तप्रस्तावसम्बन्धिभिः' इत्यस्ति । यत्पूर्वं हसितम्, विलसितम्, सहभुक्तम्, सहपीतम्, प्रणयेन कुपितम्–इत्यादि रागपरिहासयुक्तं तद्विषयकैर्वचनै रागदीपनार्थमिति यावत् । तच्च श्रीहर्षो नैषधचरिते २० सर्गे ७४ श्लोकादारभ्य "वनकेलौ स्मराध्वरथदर्ल भूपतितं प्रति । देहि मह्यमुदस्येति

गूढाश्लीलाश्चार्थाः[1](सं)परिभाष्या समस्याभिः ।
[2]अनिवृत्तसंनिवृत्तं(?)गीतं वाद्यादि वा रचयेत् ॥७॥
संकथनं च कथानां[3] भूयः पाने प्रवर्तनं तद्वत् ।
दृष्ट्वा च सानुरागां ताम्बूलाद्यैर्[4]जनोद्वासः ॥८॥
[5]उद्धर्षयेच्च विजने प्रोक्तैरालिङ्गनादिकैरेनाम् ।

---

मदिरा व्रीडितासि यत् ॥" इति ९६ श्लोकपर्यन्तं वर्णयामास । ( "अश्वत्थपत्रसदृशं विपुलं च गुह्यम् ।" इति कामशास्त्रवचनाद्भूपतिताश्वत्थदलयाचनेन वराङ्गयाचनस्य सूचितत्वाद् यद् व्रीडितासि तत्स्मरेति भावः ।" इति नारायणः) एवं च 'पूर्वप्रकरणसम्बद्धैः' इत्यस्य 'पूर्वाध्यायनिसृष्टैः' इति व्याख्यानं ग्रंथकारस्य प्रामादिकमेव । को हि नामासौ पूर्वो ऽध्यायो यत्र ग्रंथकारेण सूत्रकारेण वा तानि वचांसि प्रपञ्चितानि । 'तस्मादत्र 'पूर्वप्रकरणयुक्तैः' इति, 'पूर्वप्रकरणविषयैः' इति वा पाठ उचितः ।

---

१ समस्या संलापः ।

२ अत्र सूत्रे "सनृत्तमनृत्तं वा गीतं वादित्रम् " इत्यस्ति । तदनुसारमत्र "नृत्तयुतं वा ऽनृत्तं गीतं वादित्रमारचयेत् ।" इति पाठ उचितः । या नृत्ताभिज्ञा तत्समक्षमासीननृत्तेन् आङ्गिकाद्यभिनयेन गीतार्थं प्रकाशयीत । इतरस्या गीतमेव केवलम् । नागदन्तावसक्ता वीणावाऽत्र वादित्रम् । तामादाय वादयेत् ।

३ कथानां कामसम्बन्धिस्त्रीपुंसचरितानाम् । सूत्रे तु 'कलासु संकथाः' इत्यस्ति । तदनुसारं 'कलानाम्' इति पाठ उचितः । कलानामालेख्यादीनां संकथनं तत्र तत्र कौशलख्यापनार्थम् । एतत्सर्वं नायिकाया आवर्जनार्थं प्रयुञ्जीत । इत्थमावर्जितां च भूयः पानेन प्रोत्साहयेत् ।

४ जातरागायां च तस्यां मित्रपरिचारकादीन् कुसुमानुलेपनताम्बूलदानेन विसर्जयेत् सुरतोपयोगि विजनसम्पादनार्थम् ।

५ तथा उत्कृष्टहर्षयुक्तां ( उल्लसितां ) कुर्याद् यथा शयनीयं प्रतिपद्यते ।

उप च[1] (सं) क्रमेदनन्तरमस्मान्नीवीवियोगादि ॥९॥
अवसाने रागस्य तु लज्जाभाजोरिवान्[2]ययोर्यूनोः ।
अन्योन्यं परिदर्शनपरिहा[3]रेणोदितप्रभयोः ॥१०॥
आचार[4]भूमिगमनं प्रार्थक्येऽस्मान्निवृत्तयोरनयोः ।
व्री[5]डायमानमनसोरुचिते देशे समास्थितयोः ॥११॥
ताम्[6]बूलग्रहणोत्तरमँच्छीकृतचन्दनादि देहेऽस्याः ।
दत्वा स्[8]वयं भुजेनच तामिह परिरभ्य सव्येन ॥ १२ ॥

---

१ 'उपसंक-' ख. । उप च क्रमेत्—अनन्तरं च उपक्रमेदिति सम्बन्धः । "संहितैकपदे नित्या नित्या धातूपसर्गयोः" इति नियमस्यात्र लङ्घितत्वादप्रयोगोऽयम् । अनन्तरं शयनगताया नीवीविश्लेषणादि अत्रैवाधिकरणे ८ अध्याये १० श्लोकमारभ्य उक्तं विदध्यात् ।

२ अन्ययोरिव अपरिचितयोरिव लज्जां भजमानयोर्मिथोऽविनयाचरणात् । तत्र स्त्रीणां रतान्ते लज्जायोगो यथा––"संगताभिरुचितैश्चलितापि प्रागमुच्यत चिराय सखीव । भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य" इति ( माघे १० सर्गे ) ।

३ '-हरणप्रो-' ख. ।

४ तदवस्थदर्शनात् कदाचिद् वैराग्यं स्यादिति परस्परमपश्यतोः पार्थक्ये (पृथक् २) शौचकरणार्थमाचारभूमौ ( शौचभूमौ ) गमनम् । आरम्भात् समाप्तिपर्यन्तं सुरतविधिवर्णनं कुट्टनीमतेऽपि १४८ आर्यातः १६३ आर्यान्तं द्रष्टव्यम् ।

५ अत्र सूत्रे 'अव्रीडायमानयोः' इत्यस्ति ।

६ ताम्बूलग्रहणम्=ताम्बूलभक्षणम्, मुखवैरस्याद्यपगमार्थम् ।

७ व्यायेन शरीरस्य प्रधानधातोः क्षयो भवति । तत्र बृंहणं प्रयोज्यम् । तच्च बाह्याभ्यन्तरभेदेन द्विधा। तत्र बाह्यं चन्दनालेपनादि ( ग्रीष्मकाले प्रयोज्यम् ), आभ्यन्तरं च पानादि ।

८ स्वयमित्यनुरागख्यापनार्थम् ।

कृत्वा चषकं[1] हस्ते सान्त्वनमाधाय पाययेदुचितम्।
तदनु[2] जलस्य च पानं भुञ्जीयातां च खण्डादि ॥१३॥
सात्म्यानुसारि सर्वं देशस्य स्यात्तथाऽऽत्मनोऽप्येतत्।
अच्छं रसकं[3] यूषं रुचिरयवागूं तथैवाम्लाम् ॥१४॥
पानकर्भर्जितैरिह[4] मांसैरुपदंशशोभाढ्यम्।
आम्राणि मातुलुङ्गकचुक्राद्यं[5] शर्करासहितम् ॥१५॥
मधुरमिदं[6] मृदु विशदं निर्दिश्यैवं विदश्य दद्याच्च।
हर्म्यतलस्थितयोर्वा चन्द्रकराणां च सेवनं कर्तुम् ॥१६॥
आसनमत्र कथाभी रुचिराभिः[7] साधु वर्तेत।
अङ्के लीनामेनां पश्यन्तीं मण्डलं सुधाभानोः ॥१७॥

---

१ मद्यपानपात्रम्।

२ बृंहणीयं खण्डखाद्यकादि भुक्त्वा जलपानं कुर्वीताम्। एवमन्यदपि देशात्मसात्म्यानुसारि हितं बृंहणीयपदार्थजातमुपयुञ्जीयाताम्। तदुक्तम्—"स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम्। वातो मांसरसः स्वप्नः सुरतान्ते हिरता अमी॥" इति (भावप्रकाशे पू. खं. रात्रिचर्याप्रकरणे)।

३ "यूषं द्विविधं मांसनिर्यूहं व्रीहिनिर्यूहं च। बृंहणीयत्वान्मांसनिर्यूहं रसकयूषमच्छमुपयुञ्जीयाताम्। अम्लयावागूं मांससिद्धाम्।" (ज. मं)

४ सूत्रे तु 'भृष्ट (भर्जित)मांसोपदंशानि' इत्यस्ति।

५ मातुलुङ्गकं बीजपूरम् 'बिजौरा' इत्याख्यातम्। "बीजपूरमीषदपनीतचुक्रं खण्डशः कृतं शर्करायुक्तम् (भुञ्जीयाताम्) हृद्यत्वात्।" (ज. मं.)।

६ तत्र भक्ष्याद्युपयोगेऽनुरागख्यापनार्थं विधिमाह——मधुरमिदमित्यादिना।

७ "भुक्तविरसत्वात् कामस्य बृंहणानन्तरं कामजननार्थं तदनुकूलाभिःकथाभिरनुवर्तेत"(ज. मं)

व्यक्तीकरणं कथितं रुच्या नक्षत्रपङ्क्तीनाम्[1]।
ध्रुवदर्शनं वसिष्ठप्रेयस्याश्चैवमेव सप्तर्षेः[2] ॥१८॥
रत्यारम्भसमाप्ती कथिते वात्स्यायनेनैवम्।
अवसाने (च) रतेरिह वर्धेतासामुपस्कृता प्रीतिः ॥१९॥
प्रीतिकरैरन्योन्यं स्फुटविस्रम्भं कथायोगैः।
भावानुवर्तनैरिह निजसंबद्धैर्भवेत् परा प्रीतिः ॥२०॥
क्षणमवलोकनविरहः क्रोधात् प्रीत्या तथा दृष्टिः।
हल्लीसक्रीडनकैर्गीतैरपि नाट्यरासकैरुचितैः[3][4] ॥२१॥
रागार्द्रलोलनयनैरिन्दोरपि दर्शनैरेवम्।
प्रथमावलोकने सति पूर्वं ये स्युर्मनोरथा यूनोः ॥२२॥
दुःखं पुनर्वियोगे प्रतिकीर्तनतस्तयोरुभयोः।
उक्ता सचुम्बनैरथ रागपरीरम्भतस्तथा भावैः ॥२३॥
संयुक्तैरिह यूनोः स्नेहो वृद्धिं समायाति।
रागवशात्[5] कृतरागं कृत्रिमरागं च सान्तरे रागे ॥२४॥

---

१ "प्रायशःस्त्रीणां नक्षत्रपङ्क्तिष्वपरिचयात्। इयमरुन्धती भगवती सूक्ष्मा य एनां न पश्यति स षण्मासान् म्रियते। अयं ध्रुवादिविस्तारः यद्दर्शनाद्व्यस्तगतं पापमपैति। एते च सप्तर्षयः पङ्क्त्या स्थिताः--इति संदर्शयेत्।" (ज. मं.)।

२ वसिष्ठप्रेयस्या अरुन्धत्याः। सप्तर्षेः (सप्तसंख्याक ऋषिः सप्तर्षिस्तस्य। मध्यमपदलोपी समासः जातावेकवचनम्। सप्तर्षीणामित्यर्थः।

३ हल्लीसकनृत्यसहितैर्गीतैः। "मण्डलेन च यत्स्त्रीणां नृत्तं हल्लीसकं तु तत्। यत्र नेता भवेदेको गोपस्त्रीणां यथा हरिः॥" इति हल्लीसकलक्षणम्।

४ सूत्रे 'लाटरासकैः' इत्यस्ति। 'नाट्यरासकैः' इति च तत्रैव पाठान्तरम्।

५ रागवशात् रतं (सूत्रे) 'रागवत्' इति। कृतरागं (सूत्रे) 'आहार्यरागम्' इति। सान्तरे (सव्यवधाने) रागे रतं (सूत्रे) 'व्यवहितरागम्' इति। "स्वाभाविक-

पोटारतं खलरतं रतमनियन्त्रं च संप्रोक्तम्।
[1]अवलोकनदिवसावधि रचिते यत्नेन संगमे यूनोः ॥२५॥
गत्वा प्रत्यागमने कोपत्यागेन (च) तत्राद्यम्।
तत्रात्माभिप्रायं (यात्) प्रवृत्तिरुचितैव यावदर्थं च ॥२६॥
एवं बाह्यरतोत्तरकालं यन्त्रे विलम्बोऽत्र।
[2]मध्यस्थरागभाजोरप्यारम्भे न रज्यते यूनोः ॥२७॥
आहृतरागे (गं) यस्मिन् योगात् संधुक्षणं रागे।
[3]कार्यार्थमन्यसक्तौ यदि वा यः स्याद्रतोदयो यूनोः ॥२८॥
कृत्रिममन्यां[4] हृदि चेद् व्यवहितमेतत्समाम्नातम्।

---

आहार्यः, कृत्रिमः, दर्पजः विस्रम्भजश्चेति रागविशेषाः। तद्भेदाद् रागवदादयोऽपि रतविशेषाः।" (ज मं.)।

---

१ "संदर्शनात्प्रभृत्युभयोरपि प्रवृद्धरागयोः प्रयत्नकृते समागमे प्रवासप्रत्यागमने वा कलहवियोगयोगे तद्रागवत्।" इति सूत्रम्। "प्रथमदर्शनात् प्रभृति चक्षुःप्रीत्याद्यवस्थावशात् प्रवृद्धरागयोर्दूतसंप्रेषणादिप्रयत्नात् कृते समागमे यद्रतम्, यच्च प्रवासात् प्रत्यागमने विरहिणोरुत्कण्ठितयोः, यच्च प्रणयकलहे प्रशान्ते प्रसन्नयो रतं तद्रागवत् स्वाभाविकस्य रागस्यातिशयेन योगात्।" (ज. मं.)

२ ययोरिच्छामात्रस्योत्पन्नत्वाच्चक्षुःप्रीतिरेव, न मनःसंप्रयोगादयोऽवस्थाः—इत्यतो मध्यस्थो रागस्तयोश्चित्तमारम्भे न रज्यते (रागेण संश्लिष्यते), किन्तु सात्म्यानुबद्धैरालिङ्गनादिभिः संधुक्ष्य २ रागः प्रवर्त्यते—इति रागस्योत्पाद्यमानत्वादाहार्यरागम्।

३ अर्थसिद्ध्यनर्थप्रतिकाररूपकार्यार्थम्, न रागात्। अत एव स्वाभाविकरागस्यानुवृत्तेः कृत्रिमरागमिदं रतम्।

४ यदा पुरुषोऽन्यस्यामासक्तहृदयस्तामलभमानःस्वस्त्रिया (अन्यया वा) सुरते प्रवृत्तरतामेव हृदयप्रियां मनसाभिध्याय (अथवा स्वस्त्रियमेव तद् (हृदयप्रिया) रूपेण

**कृत्रिमरते तु योग्याः (गाः) सर्वे शास्त्रात् समुच्चयात् कल्प्याः[1]॥२९॥**
**न्यूनायां[2] दास्यां वा पोटारतमर्थलाभार्थम्।**
**पण्याङ्गनया सह यत्स्याद् ग्रामीणस्य रागघातार्थम्[3] ॥३०॥**

भावयित्वा) चेतसि रागमुत्पाद्य संप्रयोगात् प्रभृति रतावसानं यावद् व्यवहरति, तदा हृदयप्रियया रागस्य व्यवहितत्वात्तद्व्यवहितरागम्। एवं स्त्री अप्यन्यस्मिन्नासक्तहृदया—इत्यादि पूर्ववद् बोध्यम्। तथा चाऽऽह श्रीहर्षः (नैषधचरिते १। ३०) "न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम्। तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम्॥" इति। (पतिव्रताव्यतिरिक्ताः सर्वा अपि स्त्रियः स्वपतिं नलस्वरूपेण भावयित्वा, तेन च स्वचेतसि रागमुत्पाद्य रेमिरे—इति भावः) एवं बालभारतेऽपि (१। २। ६९] "स्निग्धा युवानस्तरुणीषु ताभिर्यदात्मकत्वेन रहः स्मृतास्ते। इति त्रिलोकीमिथुनानि तुल्यप्रीत्यैव किं तुल्यरतानि नाऽऽसन्॥" इति (यदात्मकत्वेन वसुनामकनृपात्मकत्वेन)।

---

१ सर्वे आलिङ्गनादयो योगाः समुच्चयेन (न तु विकल्पेन रागस्यानुत्पत्तेः) शास्त्रानुसारं कल्प्याः।

२ पूर्वोक्तं सर्वं समानप्रतिपत्त्योः स्त्रीपुंसयोर्विषये। हीनाधिकयोस्तु दर्पजो राग इति तत्र विशेषमाह—न्यूनायामित्यादिना। "न्यूनायां कुम्भदास्यां परिचारिकायां वा यावदर्थं संप्रयोगस्तत्पोटारतम्।" इति सूत्रम्। "अधमायां कुम्भदास्यां परिचारिकायां वा न्यूनायां न समायां चन्द्रापीडस्येव पत्रलेखायाम् (इदं बाणकृतकादम्बरीकथायां द्रष्टव्यम्) यावदर्थं यावद्रति। पोटारतमिति। उभयव्यञ्जना पोटा नपुंसकम्।" इति (ज. मं.)।

३ दर्पजरागशान्त्यर्थमित्यर्थः। "तथा वेश्याया ग्रामीणेन सह यावदर्थं खलरतम्।" इति सूत्रम्। "वेश्याया इति गणिकाया रूपाजीवायाः न कुम्भदास्याः अभिप्रेतमलभमानाया दर्पाद् ग्रामीणेन कर्षकादिना संप्रयोगः खलरतम्।" (ज. मं.) ग्रंथकारोक्तिस्त्वेतद्विरुद्धा।

खलरतमिदमाम्नातं नागरिको रा (ग्रा) मकान्ताद्यैः[1]।
उपचारानाद्दतिरिह[2] कथिता पोटारते मुनिग्रंथे ॥३१॥
अन्योन्या[3] (न्यं) विस्रम्भे सात्म्यादानियन्त्रितं तत्तु।
वात्स्यायनीयदृष्ट्या रतभेदा वीरभद्रदेवेन ॥३२॥
कुसुमेषोरिह कथिता ग्रंथे चूडामणौ क्रमशः।
अप्रणयायाः[4] कोपोऽयुक्तो युक्तस्तु बद्धरागायाः ॥३३॥
नामग्रहं सपत्न्यास्तस्या सम्बन्धि चा (का[5]) लापम्।
नो मर्षयेद् व्यलीकं भर्तुः स्खलितं च गोत्रस्य ॥३४॥
तत्र भृशं कलहः स्याद् रुदितायास्तौ च जायेते।
चोदः शिरोरुहाणां शयनासनतो धरातले पातः ॥३५॥

---

१ यच्च नागरिको ग्रामकान्ताद्यैः संप्रयुज्यते तदपि खलरतम्। ग्रामकान्ताः कर्षकस्त्रियः। आद्यशब्देन व्रजकान्ताः (गोप्यः), प्रत्यन्तकान्ताश्च (शबर्यादयः) ग्राह्याः।

२ केवलं दर्पजस्य रागस्यापनेयत्वेन दास्यादीनामरञ्जनीयत्वात् तासु आलिङ्गनाद्या उपचारा नादरणीयाः। ३ चिरकालसंप्रयोगात् परस्परं जातविश्वासयोः सात्म्यात् (परस्परानुकूल्यात्) नियन्त्रणस्याभावादनियन्त्रितरतमिति।

४ यथा परस्परं जातविश्वासयोरनियन्त्रितरतं तथा तयोः प्रणयात् कलहोऽपीति साम्प्रतं प्रणयकलहमाह—अप्रणयाया इत्यादिना।

५ आलापशब्दस्य पुंल्लिङ्गत्वात् 'सम्बन्धिकालापम्' इति, (सम्बन्धी एव सम्बन्धिकः। स्वार्थे कः) यद्वा 'नामग्रहं सपत्न्यास्तया च सम्बद्धमालापम्।' इति पाठ उचितः। तया सपत्न्या सम्बद्धं गुणसूचकमालापम्। अथवा 'सम्बन्धमनुवर्तिष्यते' इति महाभाष्यप्रयोगानुसारमालापशब्दस्य क्लीवत्वमपि साधिति यथास्थितपाठोऽप्यदोषः। भर्तुर्व्यलीकमपराधं सपत्न्या गृहगमनताम्बूलादिसंप्रेषणसंप्रयोगादिकम्। गोत्रस्य (नाम्नः) स्खलितं विपर्ययः सपत्नीनाम्ना नायिकाह्वानमित्यर्थः। "नाम गोत्रं कुलं गोत्रं गोत्रस्तु धरणीधरः।" इति यादवप्रकाशः। नायको हि प्रायशो विप्रियं करोति। तच्च द्विविधम्—वाचा क्रियया च। सपत्नीनामग्रहादि वाचा, सपत्नीगृहगमनादि च क्रियया।

ता[1]डनमपि भुवि शयनं भूषणमाल्यावमुक्तिश्च ।
एवं माने जाते भङ्गार्थं तस्य युक्तसामादे[2]ः ॥३६॥
युक्ते सति प्रयोगे तस्यां जातप्रसादायाम् ।
सा[3]ममयोपक्रमतः शयनतले रोहयेदेनाम् ॥३७॥
तस्य च बन्धनमुचितं वस्त्रेणास्योत्तरीयेण ।
एवं विवृद्धकोपा सकचग्रहमुन्नमय्य तस्यास्यम् ॥३८॥
हन्यादङ्घ्रिकमलतो बाह्वोः पृष्ठेऽथवा शिरसि ।
वक्षसि वा वारैकं द्वित्रिर्घातं निहत्य सं (सा) ग[4]च्छेत् ॥३९॥
यावद् द्वारमथास्रं करकमलेनापमृज्यात् सा ।
क्रोधाधिक्येऽपि च सा भूयो न द्वारदेशतो गच्छेत् ॥४०॥
इत्याह दत्तकः खलु मत्वा दोषं[5] तथा तस्याः ।
तत्र[6]ानुनीयमाना युक्त्या सा स्यात् प्रसादसाकाङ्क्षा ॥४१॥
लब्ध्वापि च प्रसादं सक[7]षायोक्तिस्तुदेत् कान्तम् ।
सुरताकाङ्क्षातरलामबलामेनां समालिङ्ग्य ॥४२॥

---

१ स्वस्य नायकस्य वा। एवं शिरोरुहक्षोदः केशविधूननं स्वस्य, केशेष्वालम्बनं च नायकस्य ।

२ आदिना पादपतनम । साम प्रियवचनम् ।

३ 'सानुनयो--' क. ग. ।

४ संगच्छेदित्यत्र संगत्यर्थाभावान्नात्मनेपदम् ।

५ द्वारदेशाद् भूयोगमने कोपव्याजेनान्यत्र गमनशङ्कोत्पत्तिरूपं दोषम् ।

६ पादेन ताडनं क्रोधस्यावधिरिति मन्यमानो नायकः पुनस्तां प्रियवचन-प्रयोगात्प्रभृति पादपतनान्तया युक्त्याऽनुनयेत् । सा च तेनैवमनुनीयमाना पादपतनं प्रसादनोपायस्यावधिरिति मन्यमाना प्रसादसाकाङ्क्षा स्यात् ।

७ सासूयवचना ।

नीत्वा शय्यापृष्ठे स्वाङ्कालङ्कारतां गमयेत्।
प्राप्य[1] निमित्तं स्वीये यदि भवने स्यान्मृगेक्षणा रुष्टा ॥४३॥
जुष्टा तादृशचिह्नै[2]रभिगच्छेन्नायकं त्वरया।
तत्र नियुक्तैर्भर्त्रा सानुनयाऽसौ च पीठमर्दाद्यैः[3] ॥४४॥
दूरे विधाय रोषं तेन सह स्वं गृहं गच्छेत्।
तत्रैव[4] वा वसेदिति प्रणये कलहो निरूपितो यूना ॥४५॥
ऊना ग्रीष्मदिवाकरदवदहनास्तेजसो यस्य।
चतुरधिकां षष्टि[5]मिमां बाभ्रव्येण प्रकीर्तितां कान्तः।
वरनारीषु विरचयन्नधिगच्छति मान्मथीं सिद्धिम् ॥४६॥
शास्त्रान्तराणि कथयन्नप्ययमज्ञापयंश्चतुःषष्टिम्।
विदुषां संसदि न तथा कथया परिपूज्यतामेति ॥४७॥
शास्त्रान्तरानभिज्ञो यस्त्वनयालङ्कृतश्चतुःषष्ट्या।
गोष्ठ्यां[6] स स्त्रीनरयोर्गोष्ठीष्वग्रं[7] विगाहते नियतम्[8] ॥४८॥
एनां विद्वत्पूज्यामधिकृतमं पूजितां च खलैः[9]।

१ उपर्युक्तो विधिः कुलयुवत्याः पुनर्भ्वाश्च विषये मतः। वेश्यायाः परपरिगृहीतायाश्च विषये विशेषमाह—प्राप्य निमित्तमित्यादिना। निमित्तं पूर्वोक्तं नायकव्यलीकादि।

२ तादृशैः कोपासूयासूचकैर्दुर्निरीक्षणभ्रूभङ्गादिभिश्चिह्नैः।

३ आद्यशब्दाद् विटविदूषकौ ग्राह्यौ।

४ अथवा नायकभवन एव तां रात्रिं वसेद् रागसंधुक्षणार्थम्।

५ आलिङ्गनादिकाम्। ६ गोष्ठ्यामासनबन्धे।

७ गोष्ठीषु = कामशास्त्रसम्बन्धिष्वालापेषु अग्रं विगाहते = अग्रणीर्भवति।

८ स्त्रीसंरक्षणोपायत्वात्।

९ विविधयुक्तिचातुर्यविगमेन परनारीचेतोग्रहणे सौकर्योपलम्भात्।

गणिका[1]गणपरिपूज्यां स्वीकुरुते नन्दिनीं को न ॥४९॥
नामान्यस्याः शास्त्रे सुभगंकरणीति[2] नन्दिनी[3] सुभगा[4] ।
नारीप्रिया[5] च सिद्धा[6] कामाचार्येण गीयन्ते ॥५०॥
कन्यापरयोषिद्भ्यां[7] पण्याङ्गनया च भावशालिन्यां[8] ।
निपुणोऽस्यां विद्यायां बहुमानेनेच्यते कामी ॥५१॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
सांप्रयोगिकेऽधिकरणे दशमोऽध्यायः कृतो विशदः ॥५२॥

इति द्वितीयं सांप्रयोगिकाधिकरणं
समाप्तम् ।



१ जीविकोपायत्वात् ।

२ स्त्रीपुंसयोः सौभाग्यकरणात् ।

३ आनन्दसम्पादकत्वात् । यद्वा "नन्दनं नन्दः पूजा सा विद्यते यस्याः (सा नन्दिनी) इति ।" (ज० मं०) ।

४ सर्वैर्गृहमेधिभिरनुष्ठानेनाद्रियमाणत्वात् ।

५ विशेषतो नारीणां सुखजननात् ।

६ सिद्धमन्त्र इव वशीकारकारिणी ।

७ पुनर्भूः परयोषित्येवान्तर्भूतत्वान्न पृथगुक्ता ।

८ कन्यापरयोषिद्भ्यामपि भावशालिनीभ्यामिति बोध्यम् । भावो हि बहुमानेनेक्षणे हेतुः ।

# अथ
# कन्यासंप्रयुक्तकं नाम तृतीयमधिकरणम्।

## प्रथमोऽध्यायः ।

इत्थं स्मरसर्वस्वं सांयोगिकमादितो निरूप्यासौ ।
शास्त्रेऽस्मिन्नधिकरणं तस्मात्परमादरात्तनुते ॥ १ ॥
कन्यायुक्तकनामन्यधिकरणेऽथ द्वितीयतः परतः ।
यतते सार्थकतायै प्रथमेऽध्याये महाबाहुः ॥ २ ॥
अध्यायाः पञ्चास्मिन् कन्यायाः संप्रयुक्तके कथिताः ।
तत्र प्रथमेऽध्याये वरणविधेर्निर्णयः सम्यक् ॥ ३ ॥
कन्याया विस्रम्भणमुदितं तस्य द्वितीयकेऽध्याये ।
बालोपक्रमसहितं चेष्टाकारस्य नान्यरागेषु ॥ ४ ॥
सूचनमुक्तं विशदं कथितोऽध्याये तृतीयतः परतः ।
एकपुरुषाभियोगः प्रतिपत्तिश्चात्र कन्यायाः ॥ ५ ॥
पञ्चम इह चाध्याये भूमीपञ्चेषुणा यूना ।
कथिताः स्फुरत्प्रपञ्चं योगा वैवाहिका विशदाः ॥ ६ ॥
इत्थं कृत्वा संग्रहमाग्रहपरिदृष्टकामशास्त्रार्थः ।
अधिकरणं विशदयति स्मरशास्त्रस्य (स्त्रीयं) तृतीयं सः ॥ ७ ॥

---

१ अयं पाठः ख. पुस्तकस्थः 'वरणविधिर्निर्णयः सङ्गे' आ. पु. ।

२ नान्यरागेषु=अनन्यानुरागेषु जातेषु तेषामिङ्गिताऽऽकाराभ्यां सूचनम् । कन्यानामनुरागेङ्गितवर्णनमित्यर्थः । 'चेष्टा मानश्च रागेषु' ख. ।

३ 'कथितेऽध्याये तृतीयेऽतः' ख. ।

अधिगन्तव्या विधिना यस्या[1] दानोपभोगयोः पूर्वम्।
नान्यः सा च सवर्णा भूमिर्धर्मार्थपुत्राणाम्[2] ॥ ८ ॥
अनुपस्कृता[3] रतिः स्यात्पक्षाधिक्यं[4] च जायते तस्मात्।
निन्दिततोपस्कृतता[5] न्यूनाधिकवर्णयोर्विदिता ॥ ९ ॥
साभिजनामिति[6] कन्यां मात्रा पित्रा च संयुतां युक्ताम्।

---

१ 'या स्याद्दा......नान्या-' ख.। दानेनोपभोगेन वा पुरुषान्तरापरिगृहीतेत्यर्थः। अनेन पुनर्भूर्व्यावर्त्यते। अत्र काश्यपवचनम्—"सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला॥ उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रसवा च या ॥ इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्।" इति। बौधायनवचनमपि—"वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः। तां गृहीत्वा न प्रजां न धर्मं विन्देत।" इति।

२ शास्त्रोक्तेन वरणपूर्वेण विवाहविधिना स्वीकृतायां यज्ञानुष्ठानादिजो धर्मः। यौतुकलाभाद् गार्हस्थ्यानुष्ठानाच्च अर्थः। पुत्रा दृष्टादृष्टार्थाः वार्द्धके सेवादिकरणात्, वंशप्रतिष्ठाहेतुत्वात्, पितृऋणापाकरणकारणत्वादितश्च।

३ अकृत्रिमा रतिर्विश्वासातिशययोगात्।

४ पक्षान्तरलाभात् स्वपक्षवृद्धिरित्यर्थः।

५ उपस्कृतता रतेः कृत्रिमता समानवर्णाभावेन तादृशविस्रम्भाऽतिशयानुत्पत्तेः।

६ अयं क. पुस्तकस्थः पाठः। 'सानिरताम्' ग. आ. पु.। 'मानरताम्' ख.। अभिजनं कुलं मातापितृसम्बन्धि तेन सहिताम्। शुद्धकुलद्वयसम्पन्नामित्यर्थः। गुणेभ्यः कुलस्य प्राधान्यात्तत्परीक्षणमत्यावश्यकम् ("कुलानुरूपाः प्रजाः संभवन्ति" इति हारीतवचनात्)। यदाहाऽऽश्वलायनः स्वगृह्यसूत्रे "कुलमग्रे परीक्षेत मातृतः पितृतश्च" इति। "कुलशब्देनोभौ वंशौ महापातकादिरहिताविति सिद्धौ तथाऽपस्मारादिदोषरहिताविति कुलमग्रे परीक्षेत।" इति तद्वृत्तौ गार्ग्यनारायणः।

वर्षत्रयेण वयसा यदि वा नवनोनेह ? (न्यूनेन) कालेन ॥१०॥
वर्षत्रयेण वयसा यदि वा नवनोनेह ? (न्यूनेन) कालेन ॥१०॥
श्लाध्याचारे धनवति पक्षिणि सम्बन्धिनां मुहुः सुखदे।
सम्बन्धिभिः परीते जातामेवंविधे वंशे ॥ ११ ॥
पितृपक्षाधिक्यवतीं संपन्नां रूपलक्षणैरुचितैः।

१ वरापेक्षया वर्षत्रयेण वयसा न्यूनेन, यदि वा ततोऽपि न्यूनेन कालेन (वयसा) युक्ताम्, वर्षत्रयात् प्रभृति न्यूनवयसमित्यर्थः। नतु एकेन द्वाभ्यां वा वर्षाभ्यां न्यूनवयसं नाऽप्यधिकवयसं न चापि समवयसम्। 'मात्रा पित्रा च संयुतो युक्ताम्।......यदि वा नवमो न कालेन।' ख.। मात्रा पित्रा च संयुतो वरस्ताभ्यां युक्तां कन्यां वरयेत्। वरः कन्याऽपेक्षया वयसि वर्षत्रयेणाधिकः स्यात् न तु न्यूनः- इति तदर्थः।

२ प्रशस्तप्रभूतपक्षवति।

३ "रूपं शरीरस्य शोभनो यो वर्णः संस्थानं च।" (ज. मं.) "अवयवानां रेखास्पाष्ट्यं रूपम्। गौरतादिधर्मविशेषो वर्णः।" (सहृदयलीलायाम्)। "अङ्गोपाङ्गानामसाधारणशोभाप्राशस्त्यहेतुरौचित्यात्मा स्थायी धर्मो लक्षणम्।" इति च। तच्च अवैधव्यादि सूचकं द्विविधम्। बाह्यमाभ्यन्तरं च। बाह्यं सामुद्रिके, वीरमित्रोदये, चतुर्वर्गचिन्तामणौ, बृहत्संहितायाम् (७० अ.), गरुडपुराणे (६४ अ.), "अव्यङ्गाङ्गीं सौम्यनाम्नीम्—" इत्यादिना (३। १०) मनुस्मृतौ, "अस्याः खलु कन्यकायाः सर्वेऽवयवाः-" इत्यादिना (६ उ.) गोमिनीवृत्तान्ते दशकुमारचरिते च सम्यक् प्रपञ्चितम्। भरतोऽप्याह—"विपुलजघनवदनस्तननयनैस्ताम्रऽधरोष्ठकरचरणैः। आयतनासागण्डैर्ललाटकर्णैः शुभा कन्या॥" इति (१५। १५४)। आभ्यन्तरं च "दुर्विज्ञेयानि लक्षणानीति, अष्टौ पिण्डान् कृत्वा-" इत्यादिना आश्वलायनगृह्यसूत्रे (१।५।४-६) उक्तम्। लक्षणानां दुर्ज्ञेयत्वात् परीक्षान्तरमुच्यते-पूर्वस्यां रात्रौ क्षेत्रगोष्ठवेदिकाह्रदकितवस्थानचतुष्पथेरिणश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्तव्यम्। त 'ऋतमग्ने' इत्यादिमन्त्रेणाभिमन्त्रणीयम्। कुमारी च इत एकं पिण्डं गृहाणेति वक्तव्या। तत्रानुक्रमेण प्रथमे पिण्डे गृहीते तस्याः प्रजा धान्यवती, भवति द्वितीये पशुमती, तृतीयेऽग्निहोत्रशुश्रूषणपरा, चतुर्थे सर्वसंपन्ना (विवेकिनी चतुरा

अ[1]न्यूनानधिकाङ्गीमक्षीणाक्षिस्तनीमपि वा ॥ १२ ॥
अक्षीणकेशद[2]न्तां नखकर्णाक्षैण्यशालिनीं तद्वत्।
सहजाऽरोगशरीरां श्रुतवाने[3]र्वंविधः पुरुषः ॥ १३ ॥

सर्वगुणाढ्या), पञ्चमे चपला कलहप्रिया द्यूतादिदुर्व्यसनपरा च, षष्ठे व्यभिचारिणी, सप्तमे अधन्या (दुर्भगा, वन्ध्या, रोगिणी च), अष्टमे च विधवा भवतीति तद्भावः। एवं "तदलाभे पिण्डान्......" इत्यादिना (२।१) गोभिलगृह्यसूत्रे (तदलाभे= कन्यालक्षणविदोऽलाभे पिण्डान् कृत्वा परीक्षेतेत्यर्थः), "शक्तिविषये द्रव्याणि प्रच्छन्नान्युपधाय ब्रूयादुपस्पृशेति......" इत्यादिना (१।३) आपस्तम्बगृह्यसूत्रे, "विज्ञानमस्याः कुर्यात्, अष्टौ लोष्टानाहरेत्-" इत्यादिना मानवगृह्यसूत्रे, "लोष्टानां कुमारीमाह यमिच्छेत्..."-इत्यादिना अथर्ववेदीये कौशिकसूत्रे (५।१) च द्रष्टव्यम्। लक्षणपरीक्षाया अवश्यकर्तव्यताविषये संस्काररत्नमालायां बौधायनः— 'वर्जयेत्सर्वथा कन्यामशुभा लक्षणैस्तु या। भर्तुरायुर्हरन्त्येता आलस्यादपरीक्षिताः ॥" इति। "सदा गृही सुखं भुङ्क्ते स्त्री लक्षणवती यदि। अतः सुखसमृद्ध्यर्थमादौ लक्षण-मीक्षयेत्।" (काशीखण्डे) इति च स्मरणम्।

---

१ बाह्यलक्षणानि प्रपञ्चयति—अन्यूनेत्यादिना। एतेन सर्वथा वैरूप्यराहित्य-मुक्तम्। स्वतो दोषस्य वैरूप्यस्य दोषान्तरसद्भावसूचकत्वाद् विरूपा वरणे परिवर्जनीया इति भावः। अतएवाह आचार्यवराहमिहिरः—"प्रायो विरूपासु भवन्ति दोषा यत्रा-ऽऽकृतिस्तत्र गुणा वसन्ति।" इति (७०।२३) बृहत्संहिता।

२ अक्षीणदन्तेत्युपलक्षणम्। तेन दन्तानां स्थूलत्वम्, करालत्वम्, विषमत्वम्, कृष्णमांसत्वञ्चापि दुष्टत्वात् परिहार्यम्। "स्थूलाः कराला विषमाश्च दन्ताः क्लेशाय चौर्याय च कृष्णमांसाः।" इति (७०।२३) बृहत्संहितोक्तेः। 'नखकर्णा-' इत्यत्र 'कर्णाक्षत्रैण्य—' ख.।

३ गृहीतविद्य इत्यर्थः। एवंविधः सवर्णोऽभिजनाद्युपेतः। यदाह याज्ञवल्क्यः "एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः। यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जन-प्रियः॥" इति (या. स्मृ. १।५५) पुंस्त्वपरीक्षोपायस्तु नारदेन दर्शितः—"यस्या-ऽप्सु प्लवते वीर्यं ह्रादि मूत्रं च फेनिलम्। पुमान् स लक्षणैरेतैर्विपरीतैस्तु षण्ढकः॥"

शीलयतु[1] यां[2] गृहीत्वा मन्येतात्मानमेष सत्कृतिनम्।
याचेत चैव नैनामन्यसवर्णान्वितां[3] पूर्वम् ॥ १४ ॥
इति घोटकमुखभणितेर्न्यूनाधिक्ये तु[4] (न) याचनं युक्तम्।
तस्या वरणे पित्रोर्यत्नः सम्बन्धिनां चैव ॥ १५ ॥
मित्राणामपि युक्तः संसक्तानां प्रवरोवरा ?(प्ररोचना[5]) वाक्ये।
वरयित्रन्तरदोषं दिशतां निजसंस्तवं[6] चैव ॥ १६ ॥

---

इत्यादिना ( ना.स्मृ. १२ । १०–१३ )। पुंस्त्वपरीक्षाकारणमपि स एवाऽऽह—"अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं नाऽबीजी क्षेत्रमर्हति ॥" इति ( ना. स्मृ. १२ । १९ )। मानवगृह्यसूत्रेऽपि—"पञ्च विवाहकारकाणि भवन्ति वित्तं रूपं विद्या प्रज्ञा बान्धवाः।" इति । 'बन्धुशीललक्षणसंपन्नः श्रुतवानरोग इति वरसंपत् ( वरगुणाः )' इत्यापस्तम्बः ( १ । ३ । १९ ) वरदोषानाह कात्यायनः—"उन्मत्तः पतितः कुष्ठी षण्ढश्चैव स्वगोत्रजः । चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः ॥ वरदोषाः स्मृता ह्येते......॥" इति ।

४ 'एवगुणाम्' ख. ।

---

१ मनसि समादध्यादित्यर्थः ( 'शील समाधौ' इति धातुपाठात् )।

२ 'ताम्' ख. ।

३ अनेन यां गृहीत्वा समानैर्निन्द्येत तां न याचेतेत्युक्तम् ।

४ 'ऽपि' ख. 'न' क. । 'न' इत्येव पाठ उचितः । न्यूनाधिक्ये याचनं नोचितं किन्तु साम्य एव । समयोरेव विवाहस्य मैत्र्याश्च सुखसाधनत्वात् ।

५ 'प्रचारोऽत्र' ख. । मित्राणि वरगुणवर्णनापूर्वैः प्ररोचनावाक्यैः कन्यामातापितरौ प्रलोभयेयुरिति । "प्रयतेरन् मित्राणि च गृहीतवाक्यान्युभयसंबद्धानि" इति सूत्रम् ।

६ 'शस्तताम्' क. 'संस्तवेनैव' ख. ।

अनुकूलयेयुरनिशं कथया कौलादितद्गुणायत्याः[1] ।
कन्यामातुर्हृदयं विशिष्य[2] मित्राणि यत्नेन ॥ १७ ॥
ज्योतिर्वित्सुहृदस्य तु शकुनग्रहलग्नराशिनक्षत्रैः ।
दृष्टैरपि च निमित्तैः[3] सम्बन्धं भावयेत्तस्याः ॥ १८ ॥
कन्यान्तरलाभकथाः कथयित्वाग्रे च कन्यकामातुः ।
उन्मादयेयुरस्या हृदयं केचित् प्र[4]यत्नेन ॥ १९ ॥
दद्याद्व व[5]र्गेण्या दैवादे[6]रानुकूल्यतः कन्याम् ।
न तु केवलं यदृच्छा तत्र समर्थेति के[7]ऽप्याहुः ॥ २० ॥
[8]धावनरोदनशीलां वरणावसरे न (च) निद्रया युक्ताम् ।
परिवर्जयन्ति कन्यां वरणे सन्तः प्रयत्नेन ॥ २१ ॥

---

१ कौलीन्यादितद्गुणविस्तारस्येत्यर्थः । २ 'बहुना' ख. ।

३ नायकस्य भविष्यतो महैश्वर्यस्य सूचकैः ।

४ 'प्रपञ्चेन' ख ।

५ "वराय दीयमानामीप्सेन दद्याच्च कन्यापक्षः" ( ज. मं. )

६ आदिना निमित्तशकुनोपश्रुतयः सूत्रोक्ता ज्ञेयाः । "पूर्वजन्मकृतं शुभमशुभं वा कर्म दैवम् । तदभिव्यञ्जकत्वान्नक्षत्रग्रहा अपि दैवमुच्यते ।..........किमियमूढा कल्याणकरी नेति शास्त्रोक्तं निमित्तं शकुनपृच्छा च कार्या । निशीथे चोपश्रुतिर्ग्राह्या ।" (ज. मं.) ।

७ "न यदृच्छया केवलमानुषायेति घोटकमुखः ।" इति सूत्रम् ।

८ वरणकाले कन्यां दृष्ट्वा निमित्तं पश्येत् । यदि कन्या धावनरोदनादिदुर्निमित्तयुक्ता स्यान्न तां वरयेदित्याह—धावनेत्यादिना । धावनशीलां गृहान्निष्क्रामन्तीमित्यर्थः, सूत्रे 'निष्क्रान्ताम्' इति दर्शनात् । निद्रया युक्तां=सुप्ताम् । वरयितृषु वरणार्थं प्राप्तेषु कन्याया गृहान्निष्क्रमणं गृहत्यागम्, रोदनं दुःखभागित्वम्, शयनं च अल्पायुष्ट्वं सूचयति ।

यस्या नामाऽशस्तं[1] ( यात्रामदाविविकारिभिर्दाने[2]? )।
अन्यार्थं या गुप्ता[3] या चात्यन्तं नता विकटा ॥ २२ ॥
व्यङ्गा मित्राऽरियुता ( वृषभा स्कन्धास्तवर्षशीला वा ? )।
वृषली मुण्डा गुल्मं बिभ्राणा दूषिका चैव ॥ २३ ॥
फलिनी नक्षत्राख्या नाम्ना नद्यास्तथा च वृक्षाणाम्।
वरणे वर्ज्योपान्ते नाम्नो युक्ता लकाररेफाभ्याम् ॥ २४ ॥

१ 'न शस्तम्' ख.।

२ 'पात्रमदाधिकारिभिर्दाने' ग.। 'यावददन्ती विकारिभिर्दशनैः' ख. ( यावत् प्राप्तमदन्ती भक्षयन्ती बहुभोजिनीत्यर्थः )।

३ अत्र सूत्रकारेण "सुप्तां रुदतीम्" इत्यारभ्य—"वर्षकरीं च वर्जयेत्।" इत्यन्तं सूत्रद्वयमापस्तम्बगृह्यसूत्रस्थं ( १ । ३ ) किञ्चिद्विशेषमुपसंयोज्य स्वसूत्रेषु निवेशितम्। 'गुप्ताम् अप्रदर्शिताम् आशङ्क्यमानदोषत्वात्' ( ज. मं. ) 'गुप्ता प्रयत्नेन रक्ष्यमाणा। दुःशीला वा सा भवत्यशुभलक्षणा वा।' इति ( आपस्तम्बगृह्यसूत्रटीकायां हरदत्तः )। 'गुप्ता अदर्शनार्थं कञ्चुकादिभिरावृता प्रयत्नरक्ष्यमाणा वा दौःशील्यादिशङ्कया।' इति(आपस्तम्बगृह्यसूत्रटीकायां सुदर्शनाचार्यः)। अत्यन्तनता 'विनताम्' इति सूत्रे। 'विनतां स्कन्धदेशावनतां दुःशीलाम्' (ज. मं)। 'विनता विनतगात्रा कुब्जा वा' ( हरदत्तः ) विकटा—'विकटामसंहतोरूं दुःखभागिनीम्।' ( ज. मं ) । 'विकटा विकटजङ्घा विस्तीर्णजङ्घा वा' ( सुदर्शनाचार्यः ) व्यङ्गा अङ्गविकला दुर्लक्षणा। मित्रा—'मित्रां मित्रत्वेन गृहीतामगम्याम्।' ( ज. मं. ) 'मित्रा मित्रवती बहुमित्रेत्यर्थः। स्वयं वा मित्रभूता।' ( हरदत्तः ) अरियुता शत्रुसंसृष्टा अनर्थकारिणी 'अरिसुता' इति पाठान्तरम्। 'भिन्नारियुता' ख.। वृषभा 'ऋषभाम्' इति सूत्रे। 'ऋषभां पुरुषसंस्थानां दुःशीलाम्।' ( ज. मं. ) 'ऋषभा प्रधाना ऋषभस्येव शरीरं गतिः शीलं वा यस्याः ककुद्वाऽस्ति यस्याः।' ( सुदर्शनाचार्यः )। 'वृषभस्कन्धाऽप्यमर्शशीला वा' ख.। मुण्डा—'विमुण्डाम्' इति सूत्रे, 'मुण्डाम्' इति च तत्रैव पाठान्तरम्। 'विमुण्डां बृहल्ललाटां पतिघ्नीम्' ( ज. मं. ) 'मुण्डा अपनीतकेशा अजातकेशा वा'

ऐके तु चित्तनयने यस्यां पुरुषस्य वाऽनुरज्येते । [2]

( सुदर्शनाचार्यः ) । 'वृषभस्कन्धातिवर्षशीला वा' इति पाठ उचितः । वृषभस्कन्धा पुंसंस्थाना दुःशीला । अतिवर्षशीला अतिस्वेदनशीला, अत्यन्तं रजःस्रावणशीला रजोरोगिणी वा । सूत्रे 'वर्षकरीम्' इति पाठः । 'वर्षकरीं स्विद्यत्करचरणां पतिघ्नीम्' (ज. मं) । गृह्यसूत्रे 'वर्षकारीम्' इति पाठः । 'वर्षेणाधिका वर्षकारी वराद्वर्षेणाधिका । वर्षकारी स्वेदनशीलेत्यन्ये ।' ( हरदत्तः ) 'वर्षकारी वराद्वर्षेणाधिका । केचिद्वर-जन्मसंवत्सर एव पश्चाज्जाता । याऽत्यन्तं स्रवति सा वा' ( सुदर्शनाचार्यः ) । गुल्मं बिभ्राणा उदरादौ । दूषिका दूषयित्री । अत्र सूत्रे 'शुचिदूषिताम्' इति पाठः । 'शुचि-दूषितां पितुर्मृतस्य दत्तोल्कां क्रियया न प्रशस्ताम् ।' ( ज. मं. ) 'फलिनी मूका संव्यवहारबाह्या' (ज मं.)। 'गुल्मा बिभ्राणा दूषिकां चैव' ख. । नक्षत्रनामा रोहिण्यादिः । नदीनामा गङ्गादिः । वृक्षनामा कदल्यादिः । लकारोपान्तनाम्नी विमलाचपलादिः । रेफोपान्तनाम्नी रागमञ्जर्यादिः । 'नक्षत्रनामा वृक्षनामा नदीनामाश्च गर्हिताः । सर्वाश्च लकाररेफोपान्ता वरणे परिवर्जयेत् ।' इत्यापस्तम्बगृह्यसूत्रे ( १ । ३ । १२–१३ ) अत्र विशेषोऽपि दृश्यते । यथा संस्काररत्नमालायां बौधायनवचनम्–'नक्षत्रनामा नदी-नामा पर्वतनामा प्रेष्यनामा पक्षिनामा पिशाचनामाश्च गर्हिताः' इति । 'फलिनी नक्षत्राणां ख्यात्या ख्यात्या तथा च वृक्षाणाम् । वरणे वर्ज्या यत्नाद् युक्ता या रेफनाम्नाऽऽदौ ।' ख. ।

---

१ "यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः । नेतरामाद्रियेतेत्येके ।" इति सूत्रम् । इदमविकलं सूत्रकारेण आपस्तम्बगृह्यसूत्रात् ( १ । ३ । २० ) स्वसूत्रेषु निवेशितम् । 'यदाह आपस्तम्बः–' इत्युक्त्वा माजतीमाधवेऽपीदं सूत्रमुद्धृतम् । "यस्यामभिजनादितद्भावेऽपि मनःसङ्गश्चक्षुःप्रीतिश्चोभयमपरमस्ति तस्यां पत्न्यां सत्यां सिद्धिस्त्रिवर्गप्राप्तिरित्युत्तमः पक्षः । नेतरामिति यस्यां नास्ति न तामाद्रियेतेत्यधमः पक्षः । केवलमभिजनाद्यपेक्षां वरयेत् । पूर्वामादरेणेति विशेषः । दोषेषु तु मनश्च-क्षुर्निबन्धनेऽप्युपेक्षाभूः । तत्रापि दोषाणां गुरुलाघवं परीक्ष्यमिति" ( ज. मं. ) "यस्यां कन्यायां वरस्य मनसश्चक्षुषश्च निबन्धस्तृप्तिरुत्पद्यते तस्यामृद्धिर्ध्रुवा । नेतरच्च दत्तादिगुणदोषदर्शनमादरणीयमित्येके शिष्टा ब्रुवते ।" ( हरदत्तः ) ।

२ 'चानु–' ख. ।

तस्यामृद्धिं प्राहुस्तदभावे लक्षणं विफलम् ॥ २५ ॥

[1]तस्मात् प्रदानकाले कर्तव्योदा[2]रवेषसंयुक्ता ।

स्थाप्या दर्शनविषये नायकचेतोऽनुरागाय ॥ २६ ॥

अपराह्णे वा नित्यं सालङ्काराऽऽचरेदसौ क्रीडाम् ।

यज्ञविवाहादिषु वा जनसमवाये निरीक्ष्यैषा ॥ २७ ॥

[3]संदर्शनानुचि[4]तंतां हन्ति च [5]पण्येन साम्यमेतस्याः ।

तस्मात् कन्या कुलजै[6]रेषा संदर्शनीयैव ॥ २८ ॥

वरणायाग[7]मभाजः शुभदर्शनसाधुवादसं[8]युक्तान् ।

---

१ यतः पूर्वोक्तशयनरोदनादिनिमित्तात् कन्या न व्रियते तस्मादित्यर्थः । प्रदानकाले कन्याया वाग्दानसमये ( यदा वरयितारो वरणार्थमुपागच्छेयुस्तदा ) कन्यां प्रसाधितां वरणार्थमुपगतानां दर्शनविषये स्थापयेयुः ।

२ 'दान' आ. पु., ग., ख. ।

३ यस्मात्कन्याः पण्य ( विक्रेतव्यपदार्थ ) तुल्यास्तस्मात्तासां संदर्शने नाऽनौचित्यम् । पूर्वं दृष्ट्वा परीक्ष्य च गृहीत पण्यं यथा न ग्रहीतुः पश्चात्तापाय, नापि च विक्रेतुरुपालम्भाय निन्दायै च, तथैव पूर्वं दृष्ट्वा लक्षणादितः परीक्ष्य च वृता कन्या न वरस्य जीवनक्लेशाय, नापि च कन्याबन्धूनामुपालम्भनिन्दादिजन्यचिन्तायै, किन्तु उभयोः पक्षयोः परमप्रमोदाय भवतीति कन्या प्रयत्नेन दृश्या, परीक्ष्या च । न तु अनौचित्यादिशङ्कया वृथालज्जया वा कन्यादर्शनपरीक्षणयोः संकोचः आलस्यं वा कार्यम् । यस्याः साधुत्व एव जीवनस्य सुखमयत्वमायतते ( अन्यथात्वे तु जीवनं नरकस्य प्रतिरूपं भवति ) तस्या अपरीक्षणं नाम मौर्ख्यस्य परमा काष्ठा । एवं वरस्यापि दर्शनं परीक्षणं च सम्यक् कार्यम् । अन्यथा कन्यानां जीवनभ्रंशः ।

४ '–नुचितता' ख. ।

५ 'पुण्येन' ख. ।

६ 'इष्टा' ख. ।

७ आगतानित्यर्थः ।  ८ 'संदर्भान्' ख. ।

सम्बन्धिसुहृदुपेतान् कुलपुरुषान् मङ्गलैरुचितैः ॥ २६ ॥
प्रतिगृह्णीयुः कन्यापक्षीयास्तां च भूषितां तेषाम्।
संदर्शयेयुरुचितं रम्यामन्यापदेशेन[1] ॥ ३० ॥
दैवपरीक्षणमवधिः[2] स्थाप्यो यावन्न निश्चयो दाने।
उक्त्वा[3] भविष्यतीति च ते स्नानादौ नियोज्याः स्युः ॥ ३१ ॥
परिणयमस्या रचयेद् ब्राह्मादीनामथैकेन[4]।
इति संक्षिप्य निगदितो वरणविधिः कामसूत्रेषु ॥ ३२ ॥
संगतयोऽथ[5] विवाहः सहलीला वा तथा समस्याद्याः।

---

१ अन्यकार्यव्याजेन।

२ यदुक्तम्—"गोष्ठसीताह्रदवृक्षश्मशानेरिणदेवतः। चतुष्पथाच्च मृत्पिण्डैः कुर्याद्दैवपरीक्षणम्॥" इति। प्रपञ्चितमेतत् पूर्वं (१२ श्लोकटिप्पण्यां) गृह्यसूत्रवचनैः।

३ 'उक्त्वा' ख.।

४ आदिना सूत्रोक्ताः प्राजापत्यार्षदैवा ग्राह्याः। "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥ एभ्यो धर्म्यास्तु चत्वारः पूर्वं ये परिकीर्तिताः।" (शङ्ख स्मृ. ४। २–३) इति शङ्खोक्तेर्धर्म्याणां ब्राह्मादीनां चतुर्णां विवाहानां मध्यादेकतमेन कन्यायाः परिणयं कुर्यात्। तेषां लक्षणानि यथा "ब्राह्मो विद्याचरित्रबन्धुशीलसंपन्नाय दद्यादाच्छाद्याऽलङ्कृताम्। प्रजापत्ये सह धर्मं चरतामिति (उक्त्वा कन्यां दद्यात)। आर्षे गोमिथुनं कन्यावते दद्यात्। अन्तर्वेद्यृत्विजे दानं दैवः।" (गौतमस्मृ० ४ अ.) "आसुरो द्रविणाऽऽदानाद् गान्धर्वः समयान्मिथः। राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्॥" (याज्ञ. स्मृ. १। ३। १६) इति। ब्राह्मणबहुनाऽथवैकेन, ख.।

५ 'समितैर्विवाहकार्ये' ख.।

तुल्यैः कार्या विषमैर्नैवमै(र्नतु तै?)रिव नोत्तमैरुचिताः ॥ ३३ ॥
कृत्वोद्वाहं गमनं यदि वा तत्रैव रोचयेद् वासम्।
एष विकल्पो युक्तो देशाचाराद्व्यवस्थायाम् ॥ ३४ ॥
वर्तेत यत्र रमणः कन्यामुद्वाह्य दासभावेन।
उच्चोऽसौ सम्बन्धः सद्भिर्निन्द्यस्ततस्त्याज्यः ॥ ३५ ॥
वर्तेत यत्र रमणः कन्यामुद्वाह्य भावकर्तृत्वेन।
नीचोऽसौ सम्बन्धः सद्भिर्निन्द्यस्ततस्त्याज्यः ॥ ३६ ॥
यत्र सुखानि परस्परमपि घनयन्तीह शोभना लीलाः।
मिथ उत्कर्षनिदानं सम्बन्धोऽसौ विधेयः स्यात् ॥ ३७ ॥
कृत्वोच्चं सम्बन्धं बन्धुषु कन्यां नयेदसौ नम्रः।
नीचं नतु रचयेदिह सम्बन्धं निन्दितं सद्भिः ॥ ३८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
कन्यायुक्ताधिकृतौ प्रथमोऽध्यायः कृतः साङ्गः ॥ ३९ ॥



---

१ विषमैः सह नतु=नैव। तैरिव=विषमैरिव उत्तमैरपि नोचिताः संगत्यादयः। '-रवमैरिह' ख.।

२ अयं श्लोकः एतत्पूर्व (संगतयोऽथेत्यादि) श्लोकात् पूर्वं पठितुमुचितः।

३ 'देशाचाराद् व्यवस्थायाम्' ख.।

४ द्रव्यायतिराहित्यात्।

५ 'निर्धन्यतः' ख.।

६ प्रभुत्वेन द्रव्यायतिमत्त्वात्। 'वक्रभावेन' ख.।

७ 'निर्धन्यतः' ख.।

८ घनाः (सान्द्राः) कुर्वन्ति।

९ उच्चनीचसम्बन्धयोरपि कः श्रेयानित्याह–कृत्वोच्चमित्यादिना।

# अथ द्वितीयोऽध्यायः ।

अथ कथयत्यध्यायं द्वितीयमेषोऽद्वयप्रभो[1] वीरः ।
दोर्द्वयविक्रमसादित[2]परभटरणपाटवो झटिति ॥१॥
शयनमधः[3] कुर्यातामक्षारालवणभोजनावेतौ ।
यतमानसौ त्र्यहं किल संचरितब्रह्मचर्यौ च ॥२॥
तूर्येण सह निगदितं सप्ताहं[4] चैव मङ्गलस्नानम् ।
भूषणकृति[5]सहभुक्ती प्रेक्षा सम्बन्धिपूजा च ॥३॥
नववासः परिधानं पाठा[6] (यात्रा ?) धिकृतेरनध्यायः ।
इति परिणयनानन्तरमाचरणीयं समस्तवर्णेन[7] ॥४॥

---

१ 'प्रभुर्वीरे' ख. । २ 'पाटित' ख. ।

३ 'मथो' ख. । अधः शयनम्=भूमौ शयनम् । यदाह आपस्तम्बः—"त्रिरात्रमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ।" (आ. स्तं. गृ. ३ । ७ । ८) । एवं हिरण्यकेशिगृह्यसूत्रेऽपि—"त्रिरात्रमक्षारलवणाशिनावधःशायिनावलङ्कुर्वाणौ ब्रह्मचारिणौ वसतः ।" इति (१।२३।१०) । त्रिरात्रं विवाहोत्तरं यावच्चतुर्थीकर्म बोध्यम् । द्राह्यायणस्तु दुग्धमपि वर्जयति—"त्रिरात्रं क्षारलवणे दुग्धमिति वर्जयानौ सह शयीयातां ब्रह्मचारिणौ ।" इति (द्रा. गृ. सू. १ । ४ । ६) । अन्यत्र त्रिरात्रादधिकं न्यूनञ्चापि ब्रह्मचर्यविधानं दृश्यते यथा—"संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं त्रिरात्रमेकरात्रं वा ।" (मानवगृह्यसूत्रे १ । १४) "त्रिरात्रमक्षारलवणाशिनावधः शयीयाता ऽऽ संवत्सरं न मिथुनमुपेयातां द्वादशरात्र ऽऽ षड्रात्रं त्रिरात्रमन्ततः ।" (पारस्करगृह्यसूत्रे १ । ८ । २१) ।

४ त्रिरात्रादनन्तरं सप्ताहम् । तत्र कर्माण्याह-तूर्येण सह (सवाद्यमित्यर्थः) मङ्गलस्नानमित्यादि । ५ भूषणकृतिः प्रसाधनम् । सहभुक्तिः एकस्मिन् स्थाने द्वयोर्भोजनम् । प्रेक्षा दर्शनं सम्बन्धिनां नटादीनां च । ६ इदं ख. पुस्तकानुसारम् । 'यात्राधिकृतेरनध्यायः' क. आ. पु. ग. । ७ अविरुद्धत्वात् । "एतच्च लोके (त्रिरात्रं सप्ताहश्चेतिमिलित्वा) दशरात्रिकमित्युच्यते । तथाचोक्तम्—कन्यावेश्मनि निर्वर्त्य राजवद्दशरात्रिकम् । सभार्यः स्वगृहं यायाद्दिस्थतेर्वा कृतदेशयोः । इति ।" (ज. म.) ।

मृदुभिरुपायैरेतां तस्मिन् निशि निर्जने वशीकर्तुम्।
आदध्यादुद्यममिह मूकवदासीत केषांचित् ॥५॥
स्तम्भीभावे भर्तुः संमतिरिह नास्ति बाभ्रवीयाणाम्।
त्र्यहमेवं पश्यन्ती गाढं दूयेत सा यस्मात् ॥६॥

---

१ कन्याया विस्रम्भणोपायमाह—मृदुभिरित्यादिना। द्विविधा हि कन्या संसर्गयोग्या, इतरा च। पूर्वस्या विस्रम्भणं रतापेक्षया। द्वितीयस्या भयलज्जागमापेक्षया। मृदुभिरनुद्वेगकरैः। उपायैः आलापस्पर्शनादिभिः। तस्मिन्=दशरात्रिके निशि मन्दसाध्वसत्वात्। निर्जने एकान्ते कौतुकगृहे।

२ केषांचिन्मते मूकवदासीत=आलापमपि न कुर्यात्। तस्यापि अष्टविधमैथुनान्तर्गतत्वेन ततो ब्रह्मचर्यव्रतभङ्गप्रसङ्गात्।

३ बाभ्रवीयास्तु त्रिरात्रमवचने हि स्तम्भमिव निश्चेष्टं मूकं नायकं पश्यन्ती कन्या तत्र विरक्ता भवेत्, नपुंसकोऽयमिति बुद्ध्या तं तिरस्कुर्याच्च। एवमादावेव मनोमालिन्ये समुत्पन्ने कुतो जीवनसुखस्वारस्यम्। तस्मादुपक्रमेत—इति मन्यन्ते। अस्मिन् पक्षे आलापादेर्यन्त्रयोगान्तस्य सर्वस्याविशङ्कया करणे प्राप्ते गृह्योक्तस्य धर्म्यस्य ब्रह्मचर्यविधेरुल्लङ्घनं स्यादिति वात्स्यायनमतमाह—तस्मादुपक्रमेत्यादि। "उपक्रमेत विस्रम्भयेच्च, नतु ब्रह्मचर्यमतिवर्तेत—इति वात्स्यायनः।" इति सूत्रम्। "उपक्रमेत यथा न निर्विद्येत। विस्रम्भयेच्च यथा संप्रयोगेऽनुकूला भवेत्। नतु ब्रह्मचर्यमतिवर्तेत। अनुकूलायामप्यकाले व्रतखण्डनस्याऽधर्मत्वात्।" (ज. मं) यन्त्रयोग एव ब्रह्मचर्यव्रतभङ्गो नेतरथेति यन्त्रयोगं विहाय आलापालिङ्गनादिकं कन्यायाः लज्जासाध्वसापगमाय चेतोऽनुकूलनाय च प्रयोजयेदेव। नच "स्मरणं कीर्तनं केलिः संस्पर्शो गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिवृत्तिरेवच। एतन्मैथुनमष्टाङ्गम्......" इत्युक्तेरालिङ्गनादिकस्यापि मैथुनान्तःपातित्वात्तत्प्रयोगे ब्रह्मचर्यभङ्ग इति वाच्यम्। मैथुनाभिप्रायेण आलिङ्गनादेः प्रयोगाभावात्। मैथुनाभिप्रायेण तत्प्रयोग एव मनोवैकृतेन व्रतभङ्गः, कन्याविस्रम्भणाभिप्रायेण तत्प्रयोगे तु मनोवैकृताभावेन व्रतभङ्गाभाव इति बोध्यम्।

परिभवति षण्ढमिव तं स्तम्भत्वं यस्त्वहं समातनुते ।
तस्मादुपक्रमी स्यान्न तु यं[1] ना ( यन्त्रं ? ) रोचयेत्तत्र ॥७॥
एवं स्याद् विस्रम्भः[2] कन्यायाया न व्रतस्य भङ्गश्च[3] ।
सति यन्त्रे व्रतभङ्गं स्वीयाद्यां[4] ( या ? ) मामनन्त्यार्याः ॥८॥
साम्ना[5] प्रयोजयेदथ यन्त्रं परतास्त्रिरात्रतः सुभगः ।
कुसुमसमानां तासां सुकुमारोपक्रमेऽभिरुचिः ॥९॥
प्रसभमकृतविश्वासैर्यन्त्रायाऽऽदीयमानतायां[6] तु ।
नियतो भवति द्वेषो[7] यन्त्रे पुरुषे ऽथवा तासाम् ॥१०॥
युक्त्यापि[8] यतः प्रसरं स्वयमुपलभते विशेत्तु तेनैव ।

---

१ 'स्तम्भं नारोचयेत्तत्र' ख. ।

२ 'विस्रब्धः' ग्रा. पु. ।

३ 'भद्रश्च' ग. ग्रा. पु. ।

४ 'स्वीयायाम्' ख. ।

५ साम्ना यन्त्रं प्रयोजयेत् । बलात्कारेण तु स्पर्शनमपि न कुर्यात् । तत्र हेतुमाह—कुसुमसमानामित्यादिना । "कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सप्रयोगविद्वेषिण्यो भवन्ति । तस्मात् साम्नैवोपचरेत् ।" इति सूत्रम् । उद्धृतमिदं सूत्रं मालतीमाधवे सप्तमाङ्कप्रारम्भ-एव बुद्धिरक्षितावाक्ये महाकविश्रीभवभूतिना । अयमेवार्थो महाकविश्रीकालिदासेन "सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति । अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ।" ( रघुवंशे ८ । ७ ) इत्यत्र उपमया विशदीकृतः ।

६ 'यन्त्रायाऽदीयमानमारायाः—'ख. अप्रबुध्यमानकामायाः—इत्यर्थः ।

७ 'नियतो भवति द्वेषोऽयत्ने पुरुषे तथा तासाम्' ख. ।

८ युक्त्यापि तत्कालभाविन्या यतः प्रसरम्=तत्सख्या सह संभाषणे क्रीडने वा आत्मनोऽवकाशमुपलभेत तेनैव संभाषणेन क्रीडनेन वा द्वारेण तामनुप्रविशेत्=तद्धृदयप्रविष्टः ( प्राप्तगाढपरिचयः ) स्यात् ।

यौवनतरतमभावं[1] विद्यादस्याः प्रयत्नेन ॥११॥
कृत्वा[2] संगतिमस्या निजकरकमलेन पाणिकमलस्य ।
तत्र[3] च सिद्धामेतां परिरम्भे साधयेद् बालाम् ॥१२॥
सह्यत्वात् परिरम्भं क्षणमारचयेत्तु पूर्वकायेण[4] ।
मृदु कठिनोपक्रमतो भूयादेषा[5] विरक्ताऽति ॥१३॥
सिद्धां वै परिरम्भे दद्याद्वदनेन[6] ताम्बूलम् ।
अप्रतिपत्तौ[7] तत्र च सान्त्वनवाक्यैरिमां शपथैः ॥१४॥
प्रतियाचनैः[8] प्रपतनैश्चरणाम्बुजयोः सरोजरम्याक्ष्याः ।
संग्राहयेदिदं[9] खलु तासूचित[10]मन्यकार्येऽपि ॥१५॥

---

१ इयमस्फुटयौवना उद्भिन्नयौवना पूर्णयुवतिर्वेत्यादि प्रयत्नेन जानीयात् । तदनुरूपमेव च मृदुमध्यादिरूपेणोपक्रमेत येन उद्वेगो न स्यात्, प्रीतिश्च वर्धेतेतिभावः । 'यौवनतरलितभावम्' ख. ।

२ लब्धप्रसरस्य करणीयमाह—कृत्वा संगतिमित्यादिना । 'सन्नतिम्' ख. ।

३ तत्र सिद्धाम्=तत्सौष्ठवतीम् ।

४ पूर्वकायेण=नाभेरूर्ध्वभागेन क्षणं नतु चिरकालम्, मृदु नतु कठिनम् ।' तस्यानुद्वेजकत्वात् ।

५ भूयादिति प्रामादिकः पाठः । नह्यत्राशीरर्थः । अथवा भवेदित्यर्थे तिङ्विभक्तिप्रतिरूपकमव्ययं स्वीकृत्य कथञ्चिन्नेयम् ।

६ चुम्बनायाऽनुकूलनार्थम् ( चुम्बनसाधनाभिप्रायेण ) ।

७ ताम्बूलाऽग्रहणे ।

८ मुहुर्मुहुस्तद्ग्रहणार्थमनुबन्धैः । अन्ततः पादपतनैश्च तद् ग्राहयेत् । समा हि स्त्रियः पुंसामिति सति तादृशे प्रसङ्गे तासांपादपतनं न दोषाय । यत्तु अतुल्यत्ववचनम्, तत्तु अस्वतन्त्रत्वेनैव, नतु अधिकारन्यूनतया ।

९ इदं सान्त्वनवाक्यप्रयोगप्रभृति पादपतनान्तमन्यकार्ये क्रोधापनयनादावपि प्रयोक्तुमुचितम् । १० 'तामुचितं मध्यकार्येऽपि' ख. ।

लज्जानिमग्नहृदया यदि वा रुष्टा महापराधेन।
[१]नातिक्रामति सुमुखी चरणनिपतनं क्षणं यूनः ॥१६॥
[२]अस्य तु दानावसरे मृदु चुम्बनमाचरेदसावुचितम्।
आलापयेत्त सिद्धां चुम्बनपरिरम्भयोरुभयोः ॥१७॥
आकर्णनार्थमस्य[३] तु [४]परिमितवर्णाऽमिताभिधेयं च।
किञ्चित्[५] पृच्छेत् कामी रहित इवैतस्य बोधेन[६] ॥१८॥
[७]पृष्टे सकृदभिधत्ते यदि नेयं तदा (तत्) सकृच्चरेत् पृच्छाम्।
[८]युक्तां सान्त्वनया खलु नोद्वेगः स्याद् यथा तस्याः ॥१९॥
[९]तत्राऽप्यथाऽवदन्तीं निर्बध्नीयाच्छुभेक्षणां रमणः।
विषहन्ते[१०] पतिवचनं नैव नवोढाः स्वयं ब्रुवते ॥२०॥

---

१ अनतिक्रमणीयं हि स्त्रीणां भर्तुःपादपतनं महापराधादावपीत्याह नातिक्रामतीति। 'तां विक्रामति सुमुखीम्' ख.। "व्रीडायुक्तापि योषिदत्यन्तक्रुद्धापि न पादपतनमतिवर्तत इति सार्वत्रिकम्।" इति सूत्रम्। (सार्वत्रिकमिति न कन्यायामेव, अन्यस्यामपीदं निसर्गसिद्धम्।

२ अस्य ताम्बूलस्य। 'आस्यमुदस्यावसरे' ख.।

३ अस्य आलापस्य। 'अस्याः' ख.।

४ सुकथनीयत्वात्। ५ किञ्चित् तदानीं दृष्टं श्रुतं वा।

६ अजानन्निव। अन्यथा सा मामालापयितुमयमेवं प्रयुङ्क्ते इति जानीयात्।

७ 'पृष्टा' ख.। ८ 'युक्त्या' ख.।

९ 'संश्लिष्टा नलिनाद्ययोर्निर्विरणा या शुभेक्षणा रमणे।............नैव च दोषान् स्वयं—।' ख.

१० सर्वा एव हि कन्याः पुरुषेण प्रयुज्यमानं वचनं विषहन्ते नतु लघुमिश्रामपि वाचं वदन्ति इति घोटकमुखः।" इति सूत्रम्। (लघुमिश्रां कतिपयाक्षरामन्यार्थश्लिष्टामपि वाचं न वदन्ति लज्जापरतन्त्रत्वात्)।

[1]निर्बध्यमानतायां प्रतिवचनं साऽऽचरेच्छिरःकम्पैः ।
[2]कलहे नैव विदध्यात् कम्पं शिरसोऽपि पद्माक्षी ॥२१॥
इच्छसि[3] मां नेच्छसि वा रुचितोऽहं तेऽथवा न ते रुचितः ।
इति पृष्ट्वा (ष्टा) व्यर्वतिष्ठेत् सुचिरं वश्या स्मरार्तस्य ॥२२॥
[5]निर्बध्यमानतायां कम्पो मूर्ध्नोऽत्र चानुकूल्येन ।
अत्र प्र[6]पञ्च्यमाना विवदेद्वेणीदृशैषापि ॥ २३ ॥

---

१ निर्विद्यमानतायां ख० । अजानतेव किमिदं भवत्या ज्ञायत इति पृष्टा जानामीति ऊर्ध्वाधःशिरश्चालनेन, न जानामीति तिर्यक् शिरश्चालनेन उत्तरं दद्यात् धाष्ट्र्यपरिहारार्थम् ।

२ अस्यामवदन्त्यां यदि कदाचिदर्थयुक्त्या प्रेरणप्रतिप्रेरणादिरूपे वाक्कलहे जाते तत्र नायकेन 'किं सुभ्रु, कुपितासि' इति पृष्टा न शिरः कम्पयेत् कोपख्यापनार्थमिति भावः ।

३ अकलहे तु स्नेहजिज्ञासायामालापयोजनमाह—इच्छसीत्यादिना ।

४ 'दृष्ट्वा व्यवतिष्ठेदचिरं वश्यः स्मरात्रस्य' ख० । 'इच्छसि मां नेच्छसि वा' वर्तमानकालिकः प्रश्नः लटो वर्तमानार्थत्वात् ( वर्तमाने लट् ) । 'रुचितोऽहं ते न वा' ( परिणयात् पूर्वकालिकः प्रश्नः क्तप्रत्ययस्य भूतार्थत्वात् )-इति नायकेन पृष्टा, यदि ( इच्छामि भवन्तम् , रुचितो मे भवान्–इति ) पूर्वपक्षमाश्रयामि तदा धाष्ट्र्यं लाघवं च, ( नेच्छामि, न च रुचितः इति ) इतरं पक्षमाश्रयामि चेत् नैष्ठुर्यमिति प्रश्नस्य संकटत्वात् किमुत्तरयेयमिति विचारयन्ती चिरं तिष्ठेत्—न किमप्युत्तरयेत् । उत्तरदानार्थं पुन पुनः प्रश्नेन निर्बध्यमाना तु उभयपक्षाश्रयणमेव युक्तमिति उभयपक्षाऽऽनुकूल्येन उभयथापि ( विधिसूचकं निषेधसूचकं च ) शिरःकम्पनं कुर्यात् । एवं कृते प्रपञ्च्यमाना (अनिश्चितार्थप्रकाशनान्नायकेन प्रतार्यमाणा, स्पष्टं ब्रूहीति निर्बध्यमाना वा) कोपख्यापनार्थं 'न मे रुचितोऽसि, नेच्छामि त्वाम् , इति विरुद्धं वदेत् ।

५ 'निर्विद्यमानतायाम् ' ख० । ६ 'प्रवक्ष्यमाण' ख० ।

[1]विस्रब्धामुभयोर्वा कृत्वा स्वसखीमिहान्तराऽनुगुणाम् ।
कुर्यात् कथाप्रसङ्गं नवोढया संस्तुता चेत् स्यात् ॥२४॥
सख्या कथाप्रसङ्गे विहसेन्नतवक्त्रपङ्कजा बाला ।
अतिवादिन्यां तस्यां साक्षेपः स्याद्विवादस्तु ॥२५॥
अनयैतत् परिकथितं कथयेत् साऽनुक्तमप्यधीराक्ष्या[2] ।
तूष्णीमासीत न वा (नता) तस्मिन् सत्यानुकूल्येन ॥२६॥
निर्वन्धे सति [3]नैवं वच्मीत्यव्यक्तमर्थतोऽपूर्णम् ।
प्रब्रूयाद्विहसन्ती पश्येत्तिर्यक् कदाचित्तम् ॥ २७ ॥

---

१ पूर्वपरिचिताया नवोढाया आलापयोजने विधिमाह—विस्रब्धामित्यादिना । उभयोर्विदितपूर्ववृत्तान्तया विश्वस्तां सखीमन्तरा कृत्वा किमहमस्या रुचितो न वेत्यादि पृच्छेत् । यदेव भवतो नागरत्वकलाकुशलत्वादिकमनयाऽवगतं तत एवारभ्याऽस्यास्त्वं रुचितोऽसीति सख्या कथ्यमाने अधोमुखी लज्जया विहसेत् । अतिवादिनीं इयं त्वयि तथाऽनुरक्ता यथाऽस्या जीवनमेव त्वत्प्राप्त्यधीनमासीत्, त्वत्प्राप्तये इयं प्रत्यहं सनियमं गौरीं पूजयति स्म, क्षणमपि तव विरहोऽस्या असह्यः इत्यादिवचनैर्निरतिशयमनुरागं प्रकाशयन्तीं तु सखीमधिक्षिपेत्, असत्यं त्वं वदसि, न मया कदाऽप्येवं कृतमिति तया सह विवदेच्च । सखी तु तयाऽनुक्तमपि अद्यैव चेत्पाणिं गृह्णाति तदा साधु भवति, क्षणमप्यसह्यो विरहः इतीयं कथयति स्म, साम्प्रतं च कथयति क्षणमप्यपश्यन्ती उत्कण्ठिता भवामि—इत्यादि कथयेत् । नायिका तु तथा कथ्यमाने तदानुकूल्येन नतवदना तूष्णीमासीत । निर्बध्यमाना तु मुग्धात्वख्यापनार्थं नाहमेवं ब्रवीमीति अस्पष्टाक्षरमनवसितार्थं ब्रूयात् । नायकं च विहसन्ती अनुरागख्यापनार्थमन्तराऽन्तरा परिचयवशात् सकटाक्षमुन्मुखीव प्रेक्षेतेति भावः ।

२ '–क्षी' ख० ।

३ अत्र 'नाम कथयेत्सात्यव्यक्त–' इति पाठः क० प्रभृतिपुस्तकेषु । स चाऽस्पष्टार्थः छन्दोभङ्गावहश्चेति नादृतः । 'निर्बध्यमाना तु नाहमेवं ब्रवीमि' इति सूत्राऽ-

आलापनविधिरधिको यूना कथितो नवीनकान्तायाः।
श्रीवीरभद्रविदुषा निखिलधराचक्रशक्रेण ॥ २८ ॥
जातपरिचया तूष्णीं याचितमेतेन नागवल्ल्यादि[1]।
अस्यान्तिके निदध्याद् बध्नीयाद्वोत्तरीयेऽस्य ॥२९॥
युक्तां तथा छुरितकै[2]रुपरि[3] कुचस्वर्णकुम्भयोरुभयोः।
सद्यः स्पृशेदजस्रं विषयीभूतः स्मरास्रस्य ॥ ३० ॥
प्रियया निवार्य[4]माणो नैवं कुर्या यदा परीरम्भम्।
कुरुषे ममेति कथयन् परिरम्भं कारयेदेषः ॥ ३१ ॥
आलिङ्गनसमये स्वं करकमलं नाभिदेशपर्यन्तम्।
व्यावर्तयेत् प्रसार्य हि हारिणदृशः शोभनाकारः ॥३२॥
आरोप्य स्वोत्सङ्गे कान्तां क्रमशो[5]ऽधिकं ततोऽप्यधिकम्।
सोपक्रमतां कलयेदतिपत्तौ[6] भीषयेदेवम् ॥ ३३ ॥

---

नुसारं 'नैवं वच्मि' इति पाठः कल्पितः। 'निर्विण्णे सति नाथे यत्स्यादव्यक्तमर्थतः पूर्णम्।' इति ख०।

---

१ ताम्बूलादि।

२ छुरितम्=आच्छुरितं नखविलेखनभेदः पूर्वं ( २ । ४ । १५ ) लक्षितः।

३ उपरिग्रहणमतिस्पर्शनिवृत्त्यर्थम्।

४ नायिकया स्तनस्पर्शात् निवार्यमाणश्च नायकः त्वमपि मामालिङ्ग, ततो नैवमाचरिष्यामीति स्थित्या तामात्मानमालिङ्गयेदित्यर्थः। कुरुषे ममेति काकुः। यदि मामालिङ्गनान्निवारयसि तर्हि किं त्वं मम आलिङ्गनं कुरुषे ?– यदि भवती मामालिङ्गेत्तर्हि नाहं भवतीमालिङ्गामीति। 'नैवं कुर्याद्यदा' ख०।

५ न तु सहसा अधिकमधिकं नखदन्तपदैरुपक्रमेत।

६अप्रतिपत्तौ। अधिकोपक्रममप्रतिपद्यमानां भीषयेत्। तत्प्रकारमाह दशनेनेत्यादिना।

दशनेन क्षतमधरे स्तनपृष्ठे नखरदन्तयोः कुर्यात् ।
कृत्वा च स्वयमात्मनि सख्याः सविधे त्वया रचितम् ॥३४॥
कथयिष्यामि किमत्र त्वं वक्ष्यासि तासु जातहासासु ।
इत्थं प्रतारयेत्तां बालप्रत्यायनैश्चैव[1] ॥ ३५ ॥
उत्तररात्रिष्वधिकं विस्रम्भे हस्तयोजनं रचयेत् ।
सर्वाङ्गिकं[2] च चुम्बनमासङ्गः स्यात् करस्यैवम् ॥ ३६ ॥
विन्यस्तपाणिरूर्वोरुपरि च संवाहयेदिमां तत्र ।
संवाहयेत् क्रमेण च सिद्धां तत्रोरुमूलेऽपि ॥३७॥
संवाहने निषिद्धे दोषो नास्तीति तां समाकुलयेत्[3] ।
स्थैर्यं तत्र[4] विदध्याद् गुह्यस्थलसङ्गमं करतः[5] ॥ ३८ ॥
रशनावियोजनादनु नीवीमोक्षं तथा परावृत्तिम् ।

स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम् ।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभङ्गसर्वसहायाः ॥ इति अनर्घराघवे ।

१ यदि त्वं मद्वचनं करिष्यसि, तदा नाहमेवं करिष्यामीत्येवंरूपैः ।

२ ललाटनयनादिषु सर्वत्र चुम्ब्यमाना पर्याकुला सर्वमभ्युपगच्छतीत्येतदर्थम् ।

३ चुम्बनच्छुरितादिभिः ।

४ तत्र = पूर्वाभ्युपगत उरुमूलसंवाहजे स्थैर्यं विदध्यात् = तत्स्थिरीकुर्यात् क्षान्त्यर्थम्, न तु ततो विरमेतेत्यर्थः । 'स्थैर्ये तत्र' ख० । तत्र उरुमूलसंवाहने स्थैर्ये सहिष्णुतायाम् नायिकया तस्मिन् सोढे । एतच्चाऽन्यच्च प्रियाऽभिमतं त्रिरात्रादर्वागन्यापदेशेन ( भयलज्जापगमाविस्रम्भणाद्यभिप्रायेण ) न तु व्रतखण्डनमधिकृत्येत्यर्थः ।

५ 'त्वरतः' ख० ।

वस्त्रस्योर्वोर्मूले संवाहनमाचरेद् भूयः ॥ ३९ ॥
अन्यापदेशतः खलु कुर्यादन्यत् स्वकीययाभिमतम्[1] ।
यन्त्रं प्रयोजयेन्न तु तत्कालं क्वाप्यतिक्रम्य ॥ ४० ॥
तामनुशिष्याद्[2] रमणः स्वस्य च तस्यां प्रदर्शयेद्रागम्[3] ।
अनुवर्णयेन्मनोरथवृत्तीः पूर्वं समुत्पन्नाः ॥ ४१ ॥
प्रतिजानीयादग्रे स्वाचरणं स्वा(चाऽ)नुगुण्येन ।
साध्वसमस्याश्छिन्द्यात् प्रतिपत्नीभ्यः[4] प्रयत्नेन ॥४२॥
इत्थं तस्याः कन्याभावं क्रमतो विधाय दूरेण ।
विगतोद्वेगं रचयेद्[5] भोगान् सोपक्रमः पुरुषः ॥ ४३ ॥
इति कन्याविस्रम्भणमुक्तं श्रीवीरभद्रदेवेन ।
आकर्ण्य यस्य कीर्तिं लज्जितमिह देवदेवेन ॥ ४४ ॥
इत्थं चित्तानुगतो बालामिह साधु साधयेद् बहुभिः ।
उचितोपायैरेवं रागस्तस्याश्च विस्रम्भः ॥ ४५ ॥
[6]अत्यन्तमानुकूल्यं प्रतिकूलत्वं तथा च नाऽत्यन्तम् ।

---

१ 'स्वकार्यमभिमतम्' ख० ।

२ चातुःषष्ठिकान् योगान् ॥ 'तामनुशिक्षीत पतिः' ख० ।

३ इङ्गिताकाराभ्याम् । स्वानुगुण्येन = सा स्वकीया नायिका (विस्रम्भणविषयभूता) तस्या आनुकूल्येन यदाह भवती तन्मया विधातव्यम् इत्येवं प्रतिज्ञां कुर्यात् ॥

४ यद्यधिविन्ना स्यात् ।

५ इदं ख० पुस्तकानुसारम् । पुस्तकान्तरेषु तु ' रचयन् भूयात् ' इत्यस्ति ।

६ आदौ कन्याया अत्यन्तमानुकूल्यमाचरता आलापस्पर्शादिकेऽप्रयुक्ते उत्तरकालमपि मार्गान्तराभावेन तदप्रयोगः स्यात् । ततश्चास्य स्वेच्छाविघातात्तद्विषयाऽसिद्धिरेव । कन्येच्छाप्रातिकूल्येन अत्यर्थमुपक्रमे तु तदानीमेव तस्या विरागे जाते तद्वि-

कन्यासिद्धौ हेतुस्तस्मान्मध्यस्थता युक्ता ॥ ४६ ॥
स्वस्य प्रीतौ हेतुर्माननिदानं च मानशीलानाम् ।
विस्रम्भणमधिगच्छन् कन्यानां जायते प्रीतः[1] ॥ ४७ ॥
मन्दाक्षं[2] कन्यानामालक्ष्याऽमन्दमाचरंस्त्यागम् ।
वेद न तासां हृदयं पशुवत् परिभूयते तस्मात् ॥ ४८ ॥
सहसोपक्रान्तौ (न्ता) सा चित्ताऽविदुषा भयं तथा पीडाम् ।
उद्वेगं[3] द्वेषं खलु सद्यो यातीति शास्त्रार्थः ॥ ४९ ॥
अतिसाध्वसमातनुते[4] रमणोद्वेगेन दूषिता बहुधा ।
पुरुषद्वेषं[5] प्राप्ता विद्विष्टा स्याद्रतात् परतः ॥ ५० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ रचितोऽध्यायो द्वितीयोऽसौ ॥ ५१ ॥

---

षयाऽसिद्धिरेव । तस्मात्तत्सिद्धये मध्येनोपायेनोपक्रमेत् येन स्वेच्छासिद्धिः कन्याया विरागाभावश्च स्यात् ।

---

१ प्रीतं प्रीतिर्विद्यतेऽत्रेति प्रीतः ( अर्श आद्यच् ) प्रिय इत्यर्थः ।

२ लज्जाम् । यः कन्यानामातिशयितां लज्जां दृष्ट्वा तासामुपभोगं त्यजति स तद्धृदयानभिज्ञः पशुरिव तासामनादरपात्रं भवतीति । '—माचरन् रागम्' ख० । कन्यानां लज्जाधीनतां विलोक्य तासु रागं कुर्वन्नपि तद्धृदयानभिज्ञतया तासु अनुपक्रामन् पशुवत् परिभूयत इति तदर्थः ।

३ 'उद्वेगं द्वेषं च प्रथयेद्योषेति शास्त्रार्थः ।' ख० ।

४ इदं ख० पुस्तकानुसारम् । पुस्तकान्तरेषु तु 'प्रीतिं सा लब्धा न तु तेनोद्वेगेन दूषिता बहुधा ।' इत्यस्ति । सर्वेऽपि पुरुषा एवंविधा इति धिया ।

५ 'विद्विष्टा वा ततोऽन्यगा' इति सूत्रानुसारं तु 'रता परतः' ( परतः परस्मिन्—सर्वविभक्तिकस्तसिः—रता भवति) इति 'ततः परगा' (परगा तं मुक्त्वा परपुरुषगामिनी भवति ) इति वा पाठः कल्प्यः ।

# अथ तृतीयोऽध्यायः ।

अथ कथयत्यध्यायं तृतीयमात्मत्रयीस्फुरन्मार्गः ।
नेत्रत्रयीव शंभोरनुपहतार्थत्रयी यस्य ॥ १ ॥
[1]गुणवानपि धनहीनो मध्यगुणो वाऽथवा गुणै रहितः ।
पित्रादेः[2] परतन्त्रो वरयेयुर्[3]नैवमाद्यास्तु ॥ २ ॥
[4]कन्यासुलभ्यतायां बाल्यादारभ्य रञ्जनं तस्याः ।
व[5]रयेयुः स्वयमेते सापि तमिच्छेत् समीपे[6] यः ॥ ३ ॥
इति घोटकमुखभणितिस्तस्याश्चेहाऽनुरञ्जनोपायाः ।
सहपुष्पावचयाद्या वात्स्यायनभावि(षि)ता ज्ञेयाः ॥ ४ ॥
मालाच(क)रणं [7]कृत्रिमदुहितृक्रीडा च [8]पट्टिकालीला ।
पा[9]को (पाशक)मुष्टिकलीलाऽऽकर्षक्रीडाऽङ्गुलिग्रहणम् ॥ ५ ॥

---

१ वरणसंविधानपूर्वमधिगताया विस्रम्भणमुक्तम् । या तु व्रियमाणा न लभ्यते स गान्धर्वो राक्षस आसुरः पैशाचश्चेति पूर्वं लक्षितानां चतुर्णां विवाहानां विषयः । तत्राऽलाभकारणान्येव तावदाह–गुणवानित्यादिना ।

२ 'पित्रादौ' ग० ।

३ कन्या न वरयेयुः अलभ्यताया हेतोः । एवं च तत्प्राप्तये बाल्यादारभ्य तस्या रञ्जनमुपायः । 'पित्रादेः परतन्त्रः पुरुषाः पुरतः समायान्ति ।' ख०

४ बाल्यादारभ्य कन्याया रञ्जनं तस्याः सुलभ्यतायां कारणमित्यर्थः । 'कन्यामलभ्यताया' इति ख० पुस्तकातिरिक्तपुस्तकेषु ।

५ 'रचयेयुः' आ० पु० क० ग० । ६ 'समीपा ये' आ० पु० क० ग० ।

७ सूत्रदार्वादिमयपुत्रिकाक्रीडनम् ।

८ पट्टिकालीला वस्त्रेण नेत्रे बद्ध्वा क्रीडनम् ।

९ पाकः पाकक्रीडा ' रांधीपुसुलिया ' इति प्रसिद्धा । पाशकमुष्टिकं–मुष्टिद्यूतम्

यष्टिकुन्तकविच्युतिरुपलक्रीडादि[1] देशसम्बन्धि ।
तत्सात्म्यात् समयेषु कुर्यादनया च चेटीभिः ॥ ६ ॥
उदकक्ष्वेडनकानि[2] च मीलितकं लवणवीथिका चैव ।
अनिलाङ्गुलिताडितया सारसगोधूमपुञ्जित( क )या[3] ॥ ७ ॥

---

(अद्यत्वेऽपि बालका बदरादिकं मुष्टौ गृहीत्वाऽन्यं पृच्छन्ति जानीहि समसंख्या सन्मुष्टौ विषमसंख्या वेति। अन्यस्य कथने सत्ये मुष्टिगतं तस्मै अर्प्यते, असत्ये च तावत् ततो गृह्यते। तदिदं मुष्टियूनम् )। आकर्षक्रीडा–पाशकक्रीडा। 'वर्षक्रीडा' ख०। अङ्गुलिग्रहणम्–अङ्गुलिविपर्यासेन गोपितुर्मध्यमाङ्गुलेर्ग्रहणम्। यष्टिकुन्तकविच्युतिः–यष्टिप्रक्षेपक्रीडा कुन्तकप्रक्षेपक्रीडा च। उपलक्रीडा सूत्रोक्ता 'षट्पाषाणकक्रीडा' यत्र स्थलानि षट् पाषाणानि हस्तस्य क्रोडेनोत्थाप्य पृष्ठेन गृह्यन्ते।

---

१ 'दिवापदेशसंबन्धि' ख० ८। तत्सात्म्यात् कन्यायाः सात्म्यमुपलक्ष्य यासु तस्या अभिनिवेशस्ताः क्रीडाः पूर्वं तस्या आप्तदासचेटीभिः, ततो लब्धप्रसरस्तया चानुक्रीडेत।

२ उदकक्ष्वेडनकं वंशनाड्या मिथो जलप्रक्षेपक्रीडा। मीलितकं नेत्रनिमीलनक्रीडा यत्रैकस्य कश्चिन्नेत्रे निमीलयति शेषाः प्रच्छन्नदेशेष्वात्मानं गोपायित्वा तिष्ठन्ति। ततोऽसावुन्मीलितचक्षुर्यं गृह्णाति तस्य नेत्रनिमीलनमिति। 'प्लावितकं' ख०। 'लवणवीथिका लवणहट इति प्रतीता' ( ज०मं० )। अनिलताडिता अङ्गुलिताडिता च। यत्र पक्षवद् बाहू प्रसार्य चक्रवद् भ्रमणं सा अनिलताडिता। यत्र निमीलितनयनस्यैकस्य प्रसारिते हस्ते इतरे क्रमशः अङ्गुल्या ताडयन्ति। असौ अभिज्ञाय यस्य नाम गृह्णाति तस्य नेत्रनिमीलनमिति। "यत्रैकं निमीलितनेत्रमन्यैर्ललाटे आहत्य प्रश्नः केनाभिहतोऽसीति।" (ज० मं०) इयं क्रीडा साम्प्रतमपि बालैर्बहुत्र क्रियते।

३ सूत्रे तु 'गोधूमपुञ्जिका' इत्येव। गोधूमपुञ्जिकामिति गोधूमग्रहणं व्रीह्युपलक्षणम्। यत्र बहूनामेकः प्रत्येकं रूपकानादाय व्रीहिषु क्षिप्त्वा संमिश्रय्य च तावतो भागान् करोति। अतस्ते यथेच्छं भागमादाय रूपकमन्विष्यन्ते। तत्र यो न लभते सोऽन्यद्ददाति।" (ज० मं०)। 'सारसगोधूमशुक्तिनाम्' ख०।

[1]अन्याः क्रीडा देश्याः प्रीत्यै कुर्यात् प्रयोज्यायाः ।
तस्या विश्वास्याभिः प्रीतिं कृत्वा च परिचयान् बुध्येत् ॥८॥
धात्रेयिका तु तस्या अनुरक्ता चानुरञ्जयति ।
अनभिहिताऽप्याचार्यत्वेनास्या योजने गुणान् स्तौति ॥९॥
कौतुकमस्या यत्र (च) यत्र च तत्साधयेत् प्रयत्नेन ।
क्रीडनकान्यपि तस्या अपूर्वभूतानि चान्यासाम् ॥ १० ॥
विद्यन्ते विरलानि तानि च यत्नात्समानयेत्त्वरितम् ।
कन्दुकमनेकवर्णं सूत्रभवां [2]गेवलजां च दन्तमयीम् ॥११॥
मृद्दारुपिष्टरचितां मधु[3]मलजां पुत्रिकां ( समावर्यात् ) ।

( इति परिचयानु( यस्व )रूपं रचयेत् क्रीडास्तदीयसात्म्येन ।
प्रीतिं कुर्यादस्या विश्वस्ताभिः प्रयत्नेन ॥ ८ ॥
बुध्येत् परिचयमस्या धात्र्याः कुर्यात् प्रियादीहाम् ।
सा प्रीता विदिताकृतिरप्रतिषेधेन तां ( रता ) संगे (ऽ) ॥ ९ ॥
अनभिहिता विदिताकृतिरभिदध्यात्तद्गुणानेव ।
एवं स्यादनुरक्ता कन्यैतस्मिन् गुणांस्ततो ज्ञात्वा ॥ १० ॥
साधयतु कौतुकं वा कन्याहृदयानुकूल्येन ।
क्रीडाहेतुरपूर्वो विरलो( तो ) योऽन्यासु कन्यकास्वस्ति ॥ ११ ॥
अस्याः साध्यो यत्नात् प्रेमाऽऽकाङ्क्षाप्रवृत्तेन ।

---

१ इत आरम्भ्य २५ श्लोकपर्यन्तं पाठो ग० पुस्तकानुसारी बोध्यः । अयं भूयसा सूत्रानुसारित्वात् स्पष्टार्थत्वाच्च आदृतः । आदर्शपुस्तके ख० पुस्तके च पाठान्तरं विद्यते । तदधो निर्दिश्यते तत्र च ( ) एवंविधकोष्ठकान्तर्गतः पाठः ख० पुस्तकस्थो बोध्यः ।

२ शृङ्गनिर्मिताम् ।

३ सिक्थकमयीम् ।

२०

पा[1]कस्थानं तस्यै प्रदर्शयेदर्पयेच्च पाका[2]नि ॥ १२ ॥
काष्ठादिनिर्मितानां युद्धरतादिक्रियां समाचरताम् ।
मेषाजैडकदैवतकुलग्रहाणां तथाऽन्येषाम् ॥ १३ ॥
मृ[3]ण्मयद्विज(बिदलज)दारुजपरभृतशुकमदनसारिकादीनाम् ।
लावककुक्कुटतित्तिरिपञ्जरकाणां विचित्रवर्णानाम् ॥ १४ ॥
रुचिराकृतियुक्तानां जलपात्राणां सुयन्त्राणाम् ।
क[4]ण्डोलीपिण्डोलीपट्टलिकावीणिकादीनाम् ॥ १५ ॥

---

कन्दुकमनेकभक्त्या चित्रं कालैश्च सान्तरं दृग्भिः ( बहुभिः ) ॥ १२ ॥
अन्यद्यातद्या ( अन्यद् वा तद्योग्यं ) दृष्ट्याध्वनि योजयेदस्याः ।
अन्यद्यच्चापि तथा पूर्वं दृष्ट्या नियोजयेदस्याः
गजदन्तदारुसूत्रैः पिष्टमधूच्छिष्टमृण्मुखैश्चैव ॥ १३ ॥
कृत्वा दुहितरमस्यै दद्यादेष प्रयत्नेन ।
साधनभूतं पाके स्थलमस्यै दर्शयेत् पुनः प्राज्ञः ॥ १४ ॥
काष्ठे च ( काष्ठेन ) संप्रयुक्तौ मेषौ छागादिकं चैव ।
देवकुलानि तथाल्पं गेहं मृद्विदलकाष्ठसंजातम् ॥ १५ ॥

---

१ पाकस्थानं महानसम्, महानसविषयं कर्मेत्यर्थः । पाकविद्यायाः स्त्रीणां प्रधानविद्यात्वात्तत्तच्छास्त्रोक्तेन विधिना भक्तादिपाकार्थं कर्म दर्शयेदिति भावः ।

२ 'सम्बन्धमनुवर्तिष्यते' इति वैयाकरणमहाभाष्यप्रयोगात् 'पाकानि' इति क्लीबत्वं साधु । पाकानि सूपशास्त्रोक्तविधिना पक्वानि विविधभोज्यद्रव्याणि ।

३ अयं पाठो न शोभनः असंगतविन्यासत्वात् ।

लावककुक्कुटतित्तिरिपरभृतशुकमदनसारिकादीनाम् ।
मृद्विदलदारुजानां पञ्जरकाणां विचित्रवर्णानाम् ॥

इति पाठ उचितः । ( विदलानि = वंशविदलानि )।

४ कण्डोली सूचीकर्मोपयोग्युपकरणस्थापनार्थम् । पिण्डोली "पिण्डोलिका यत्र

हरितालहिङ्गुलादि(क)मनःशिलाचित्रधातूनाम् ।
सिन्दूरालक्तादि(क)चन्दनकाश्मीरपूगानाम् ॥ १६ ॥
ताम्बूलानां दानं प्रच्छन्नं वा प्रकाशं वा ।
प्रच्छन्नहेतुतायां गुरुजनभीतिं प्रदर्शयेदस्यै ॥ १७ ॥
तद्वत्कथाप्रयोगः प्रच्छन्नं याचनं तथान्याभिः ।
स्पृहणीयं चान्येषां देयं प्रच्छन्नमर्पयेदत्र ॥ १८ ॥
कुद्धिंगतानुरागैः (गां) प्रसज्यमानां कथासु ताभिस्ताम् ।
शाकुन्तलादिकथया विषयासक्तां तथेन्द्रजालाद्यैः ॥ १९ ॥

शुकसारिकापिकानामपि लावककुक्कुटप्रभृतेः ।
पञ्जरकं सुविचित्रं शोभनमपि भोजनं तथा पयसाम् ॥ १६ ॥
एवं यन्त्रकवीणे ( वाणौ ) तद्वदिहान्यन्मनोहारि ।
चन्दनकुङ्कुमहिङ्गुलमनःशिलालक्तकं श्यामम् ॥ १७ ॥
पूगफलं ताम्बूलं शक्त्या कालोद्भवं दद्यात् ।
यस्य प्रकाशदाने भवति विमा( गा )नं द्वयोः सुहृद्वर्गे ॥ १८ ॥
तत्प्रच्छन्नं देयं भयहेतुर्दर्शनीयश्च ।
कुर्यात्तथा यथेयं सर्वाभिप्रायपूरकं वेत्ति ॥ १९ ॥

---

दुहितृकाः स्थाप्यन्ते ।" (ज० मं०) । पेटलिका लघुमञ्जूषा वंशादिघटिता । वीणिका लघुवीणा ।

---

१ प्रकाश्यद्रव्याणां कन्दुकादीनां प्रकाशं दानम् । अप्रकाश्यद्रव्याणां कुङ्कुमादीनां प्रच्छन्नं दानमिति यथायोग्यम् यथासम्भवञ्च कल्पनीयम् ।

२ सूत्रे "विस्मयेषु प्रसह्यमानामिन्द्रजालैः प्रयोगैर्विस्मापयेत् ।" इत्यस्ति । "आश्चर्यदर्शनेच्छा यदि तस्यास्तदिदमिन्द्रजालाद्यैः ।" इति आ० पु० पाठः साधु तदनुवादी । उल्लिखितानुसारम् 'विषयासक्ताम्' इत्यस्यापि 'आश्चर्यकरविषयदर्शनासक्तचेतसम्' इत्येवार्थः कथञ्चित् करणीयः ।

आनन्दयेत्कलाभिः कलासु सक्तां विचित्राभिः।
संगीतेषु [1]प्रसक्तां सुखयेद्रागानुवर्धकैर्गीतैः ॥ २० ॥
[2]शारद्यां राकायां कौमुद्यां चापि कार्तक्याम्[3]।
[4]इन्द्रध्वजोत्सवादिषु संदर्शितचित्रभूषाभिः ॥ २१ ॥
[5]मार्गाष्टमीन्दुपूजादिषु सुरयात्रासु यात्रासु[6]।
पाणिग्रहोत्सवादिषु सत्कारे चोपरागादौ ॥ २२ ॥

---

वीक्षणदणसं (विशदं) दद्याद् गुप्तं तद्वस्तुजातं तु।
कथयेदस्याः पुरतो देयद्रव्ये परस्पृहामाधिकाम् ॥ २० ॥
कथया रञ्जनमुचितं रागे छन्नं प्रकाशं वा।
आश्चर्यदर्शनेच्छा यदि तस्यास्तदिदमिन्द्रजालाथैः( द्यैः ) ॥ २१ ॥
चेतोऽनुरञ्जनीयं कलया तत्रानुरक्तायाः।
गीतवरैराश्चर्यं युञ्ज्यात् कुतुकैस्तथा चान्यैः ॥ २२ ॥

---

१ 'प्रहे वा' इति पिङ्गलसूत्रानुसारं प्रे हे च परे संयुक्तपरस्य विकल्पेन गुरुत्वात् 'षु' इत्यस्य 'प्रे' परे न गुरुभावः। 'संगीतेष्वासक्ताम्' इति पाठकल्पने तु न कापि शङ्का।

२ आश्विनपूर्णिमायाम् ( पूर्वोक्ते कोजागरोत्सवे इत्यर्थः )

३ "यत्र कन्याभिर्ज्योत्स्नामण्डलकपूजा क्रियते साऽत्र द्रष्टव्या" ( ज० मं० )

४ इन्द्रध्वजोत्सवः पुराणप्रसिद्धः।

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः।
नवाभ्युदयदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥

इति रघुवंशे( ४ स० )ऽपि उपमया इन्द्रध्वजो वर्णितः।

५ मार्गशीर्षकृष्णाष्टम्यामिन्दुपूजा क्रियते। "अष्टमीचन्द्रके--मार्गशीर्षबहुलाष्टम्याम्। तत्र हि दिनमुपोष्योद्गते चन्द्रे भुज्यते।" ( ज० मं० )

६ यात्रासु-उद्यानदर्शनीयस्थानादियात्रासु।

विस्मापयेत्सुमुकुटाभरणाद्यै रञ्जनायैव ।
[1]दद्याद्वा गृह्णीयादुपकारं तत्र मन्येत ॥ २३ ॥
[2]अन्यासक्तां तस्या धात्रेयीं वा प्रियामन्याम् ।
कामकलानां व्याख्यानुष्ठानै रञ्जयेच्चतुःषष्ट्या ॥ २४ ॥
सा तैः प्रीता प्रेम्णा प्रीणयती मां प्रयोजयन्तीह ।
रतिकौशलेन महिला रक्ताः स्युः कामिनस्तेन ॥ २५ ॥
स्यादयमुदारवेषोऽनुपहतसंदर्शनश्चैव ।
जानीयाद्भावरतिं स्वस्मिंस्तस्यास्तथेङ्गिताकारैः (रम्) ॥२६॥
भावं प्राप्ता अपि ता (ह्यपि सा) निरता नैवाभियोगेषु ।
पश्यत्य[3]संमुखं सा दृष्ट्वा मन्दा[4]क्षवश्यतां तनुते ॥ २७ ॥

गीतरती गीतवैरयस्वियुजीकां तुकैस्तथा चान्यैः ॥ २२ ॥
आपीडैरतिचित्रैर्भूषणदानैरदोषश्च ।
आपाद्यैरतिचित्रैर्भूषणदानैरुदारवेषैश्च
पुरुषान्तरेष्वभिरतामेनां धात्रेयिकां तथा चास्याः ॥ २३ ॥
चातुःषष्टिकयोगान्निपुणतया ग्राहयेच्चिरतः ।
रतिकौशलं च तस्याः ख्यातं स्यादेवमात्मनस्तेन ॥ २४ ॥ )

---

१ आभरणादिकं दद्याद्वा गृह्णीयाद्वा ।

२ अन्यासक्ततया पुरुषविशेषाभिज्ञामित्यर्थः । सा हि जातसंप्रयोगा कामकलाव्याख्यानुष्ठानै रञ्जिता अन्येभ्यः पुरुषेभ्योऽस्य विशेषं वर्णयिष्यति । येन प्रयोज्या भृशं रक्ता भविष्यति ।

३ इदं ग० पुस्तकानुसारम् । 'पश्यति ससंमुखम्' आ० पु० । बाला हि भावं प्राप्ता अपि लज्जादिपरवशतया नाभियुञ्जते अतश्चाभियोगेऽप्रसज्यमाना बाला तन्मात्रेणैव असंजातभावेति न बोध्यमिति 'तासां' भावसूचकानिङ्गिताकारानाह––पश्यतीत्यादिना । ४ मन्दाक्षं–त्रपा ।

अङ्गं स्वस्य च्छलतः प्रकाशयेत्तत्तदेतस्मै[1] ।
यान्तं प्रच्छन्नं तं पश्यति दृष्टेः[2] पथि च्युतं यत्नात् ॥ २८ ॥
पृष्टा किञ्चित्सस्मितमव्यक्तं भाषतेऽपूर्णम् ।
मन्दं मन्दं निकटे स्थानममुष्याऽभिनन्दतीह चिरम् ॥ २९ ॥
दूरे पश्यतु[3] मामिति मत्वा विकृतं[4] च भाषते किञ्चित् ।
मुञ्चति न तं च देशं दृष्ट्वा किञ्चिच्च हासकृद् भवति ॥३०॥
मन्दं तत्र स्थितये कथया समयं क्षिपत्युचितम् ।
बालस्याङ्कगतस्य च परिरम्भणचुम्बने[5] मुहुः कुरुते ॥ ३१ ॥
तिलकविशेषान्निपुणं रचयति परिचार(रि)कादीनाम् ।
सावष्टम्भा[6] परिजनवर्गे लीलाश्च दर्शयत्यधिकाः ॥ ३२ ॥
तन्मित्रेषु च कुरुते विश्वासं वाक्यमेतेषाम् ।
बहु मन्यते करोति च तद्भृत्यैः प्रीतिमादरान्वियताम् ॥३३॥

---

१ इदं क० ग० पुस्तकानुसारम् । '—तदसौ' आ० पु० ।

२ कान्तं छन्नं पश्यति दृष्टेः पथि विच्युतं यत्नात् । ख० । दृष्टेः पथि च्युतम् = अतिक्रान्तम् ( सूत्रे ) दूरगतम् ।

३ 'पश्यति' ग० ।

४ विकृतम् = सवदनविकारम् ( सूत्रे ) = सभ्रूभङ्गकटाक्षम् ।

५ इदम् ( अङ्कगतस्य बालस्य ) परिरम्भणं चुम्बनञ्च 'संक्रान्तकम्', इत्याख्यया पूर्वम् ( २ । ३ । ) उक्तम् ।

६ "परिजनानवष्टभ्य तास्ताश्च लीला दर्शयति" इति सूत्रे 'परिजने सावष्टम्भा तां तां लीलाम्' इति तत्रैव पाठान्तरम् । 'परिजनानवष्टभ्येति परिजनक्रोडापाश्रया' ( ज० मं० ) ।

द्यूतं कथां च कुरुते प्रभुरिव चैतान्नियुङ्क्ते च ।
नायककथां परस्मै कथयत्ये(त्स्वे)तेषु कर्णयोः कुरुते ॥ ३४ ॥[1]
प्रविशति नायकवेश्म च धात्रीकथनेन संहृष्टा ।
तामन्तरा विधाय च तेन सह द्यूतभाषणे कर्तुम् ॥ ३५ ॥
इच्छत्यभूषिताऽस्य च दृष्टिपथं दूरतस्त्यजति ।
अभ्यर्थिताऽमुनापि च कर्णाभरणाङ्गुलीयके मालाम् । ३६ ।
सख्या[2] हस्ते यच्छति गात्रादवमुच्य धैर्येण ।
धारयति तेन दत्तं नित्यं स्रक्चन्दनादिकं भूषाः ॥ ३७ ॥
खिन्नाऽपरवरकथया तत्पक्षै[3]र्वर्जयेत् संगमम् ।
दृष्ट्वा तस्या भावानाकारानिङ्गितानि पद्माक्ष्याः ॥ ३८ ॥
कन्यासंयोगार्थं योगान् संचिन्तयेदुचितान् ।
बालां लीला[4]द्रव्यैर्यौवनपदशालिनीं कलानिचयैः ॥ ३९ ॥
विश्वास्य वत्सला[5]मपि गृह्णीयात्संग्रहान्निपुणः ।
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ रचितोऽध्यायस्तृतीयोऽसौ ॥ ४० ॥

---

१ 'तेषु च नायकसंकथामन्यस्य कथयत्स्ववहिता तां शृणोति' इति सूत्रम् ।
२ सख्या हस्ते यच्छति, न तु लज्जया नायकहस्ते ददाति ।
३ अन्यवरपक्षैः ।
४ 'लीलानिचयैः' ख० । इदं ग० पुस्तकानुसारम् । 'बालद्रव्यैः' आ० पु० ।
५ वत्सला = प्रौढा । 'विश्वास्य प्रौढामपि' इति पाठे तु स्पष्टार्थता ।

# अथ चतुर्थोऽध्यायः।

अध्यायमथ चतुर्थं सार्थकमाख्यातुमुद्यमं कुरुते।
गीतस्तीरे जलधेरर्थिप्रत्यर्थिनारीभिः॥ १॥
दर्शितचेष्टाकारामभियुञ्जीतेह हेतुभिः कन्याम्।
गृह्णीयात् करकमलं क्रीडायां विवदमानायाः॥ २॥
आलिङ्गनं[1] विदध्यादुच्च(त्स्पृष्ट)कमुखयु(मु)क्तया तया रीत्या।
एवं भवति वशे सा ज्ञातस्मरशास्त्रतत्त्वस्य॥ ३॥
पत्राणां छेद्यादौ स्वाभिप्रायं च[2] सूचयेन्मिथुनम्।
संदर्शयेदिहास्या एवं चान्यत्तथाऽन्यच्च॥ ४॥
जललीलायां दूरे पयसि निमग्नो विधाय तत्स्पर्शम्।
उन्मज्जेन्मज्जनभुवि[3] कौ(कु)तुकी पुरुषः[4] सरोजाक्ष्याः॥ ५॥
नवपत्रिकादिषु[5] चरेत् सविशेषं भावसंकथां[6] निरतः।

---

१ "यथोक्तं च स्पृष्टकादिकमालिङ्गनविधिं विदध्यात्," इति सूत्रम्।

२ '—प्रायस्य' आ० पु०। '—हास्यादेवं' आ० पु०।

३ अयं पाठः छन्दोभङ्गावहः सूत्रविसंवादी च। 'उन्मज्जेदिह कौतुकशीलः पुरतः सरोजाक्ष्याः।' इति पाठ उचितः। "जलक्रीडायां तद्दूरतोऽप्सु निमग्नः समीपमस्या गत्वा स्पृष्ट्वा चैनां तत्रैवोन्मज्जेत्।" इति सूत्रम्।

४ 'पुरतः' ग० ख०।

५ नवपत्रिकादयो देश्याः क्रीडास्तासु पत्रच्छेद्यादिना स्वाभिप्रायसूचकेन सविशेषं स्वभावं निवेदयेदित्यर्थः।

६ इदं ग० पुस्तकानुसारम् 'संकथा' आ० पु०।

दुःखस्यात्मगतस्य च कथनमिह[1] स्यादनिर्वेदात्[2] ॥ ६ ॥
अपदेशात्[3] प्रेक्षणके स्वजनसमूहेऽथवा स्थितो निकटे।
छलतः[4] कुर्यात्स्पर्शं पीडनमह्यो(मप्यङ्घ्रिणा[5]) रचयेत् ॥ ७ ॥
शनकैरेकैकाङ्गुलिमभिमृशति नखाग्रघट्टनं कुरुते।
सिद्धस्[6]तत्र पदात्पदमभिकाङ्क्षेदभ्यसेत्तच्च[7] ॥ ८ ॥
शौचे चरणाम्बुजयोरङ्गुलिसंदे(दं)शपीडने रचयेत्।
लक्ष्यस्[8]तत्र विकारो द्रव्यग्रहणे विसर्गे च ॥ ९ ॥

---

१ 'न जाने किं कृता मम चेतसि पीडा' इत्येवंरूपेण।

२ अनिर्वेदात् = भूयोभूयः ( कथनम् ) आत्मदुःखकथनेन तत्सहानुभूतिग्रहणस्य प्रधानकार्यत्वात्।

३ इतः पूर्वम् 'स्वप्नस्य च भावयुक्तस्यान्यापदेशेन' इत्यस्ति सूत्रे, तदिह नोक्तम्। "अन्यापदेशेनेति—त्वत्तुल्यरूपया सहोपगमः स्वप्ने ममाभूदिति कथनम्।" ( ज० मं० )

४ 'बलतः' ग०।

५ "अपाश्रयार्थं चरणेन चरणस्य पीडनम्।" इति सूत्रम्। ( अपाश्रयस्तदङ्गे स्वाङ्गस्थापनम् ) 'पीडनमस्या उरोजयो रचयेत्' ख०।

६ 'सिद्धा' ग०। 'सिद्धाम्' सूत्रे पाठान्तरम्। "पदात् पदमिति स्थानात् स्थानान्तरम्। जघनोरुनितम्बादिकं स्प्रष्टुं सोपानक्रमेण काङ्क्षेत्" ( ज० मं० ) 'सिद्धा तत्र यथा स्यादभि—' ख०।

७ तत्पूर्वाभ्युपगतां सहनार्थमभ्यसेत्।

८ "द्रव्यस्य समर्पणे प्रतिग्रहे वा तद्गतो विकार।" इति सूत्रम्। "द्रव्यं पूगफलादिकं समर्पयता प्रतिगृह्णता वा द्रव्यगतो विकारः कार्यः। सनखस्पर्शमर्पयेत् प्रतिगृह्णीयाद्वेत्यर्थः" ( ज० मं० ) 'कार्यस्तत्र विकारो' इति पाठे कृते जयमङ्गलानुसारित्वं संपद्यते। यथास्थितपाठस्य तु 'द्रव्यस्य ताम्बूलपूगादेर्ग्रहणसमये दानसमये च

आचमनार्थपयोभिः कार्यः सेकोऽप्यनेन वामाक्ष्याः ।
द्वन्द्वं[1] तमसि च तिष्ठन् क्षान्तः (न्तिं) कुर्यात्तदेकशय्यादौ ॥ १० ॥
तत्र[2] च भावं कथयेन्न स्याद्देषा यथो(यथा समु)द्विग्ना ।
जानीयादपि भावं भाविन्या भूरिभावज्ञः ॥ ११ ॥
एकान्ते वक्तव्यं मम कियद[3]स्तीति बोधयन् कथयेत् ।
स्वप्नादिभावयुक्तं जिज्ञासुर्भावमेतस्याः ॥ १२ ॥
जानीयात्तद्भावं वक्तव्यात् पारदारिके तत्र ।
ज्ञात्वा भावममुष्या उक्त्वा व्याधिं नयेद् गेहम् ॥ १३ ॥
अभियोगो[4]ऽभिगतायाः शिरसः सम्पीडने भवेत् स्वस्य ।
संयोजयेत्तदीयं करमवलम्ब्य स्वनेत्रादौ ॥ १४ ॥

---

प्रयोज्याया विकारः हर्षव्रीडाप्रभृतिर्लक्ष्यः सुनिपुणं ज्ञेयः' इत्यर्थः ।

---

१ द्वन्द्वं तिष्ठन् = तया सह स्थितः विजने तमसि च एकशय्यायाम् । (शयनेन) आदिना नखस्पर्शादिना क्षान्तिं कुर्यात् ( कन्या यथा नखस्पर्शादिकं सहेत तथा कुर्यात् ) तत्काले तस्याः लज्जाभावात् । 'शयनं कुर्यादथैकशय्यादौ' ख० ।

२ तत्र आसने शयने च भावं कथयेत् = सूचयेत् आकारेण, न तु वाचा प्रत्याख्यानभयात् । न चेत् प्रत्याख्यानशङ्का तर्हि वाचापि कथयेत् । वाचा कथनस्य विधिमाह—एकान्ते वक्तव्यमित्यादिना ।

३ किञ्चित् । 'एकान्ते मम किञ्चिद् वक्तव्यमस्ति' इति वदेत् । 'किं तत्' इति तया उक्ते तस्या भावं जिज्ञासमानः' स्वप्नादिभावयुक्तम् ( त्वं रात्रौ स्वप्ने मया सह संगता—इत्येवमादिरूपम् ) कथयेत् तत्र च तस्या भावं ( संप्रयोगाभिलाषम् ) पारदारिके वक्तव्यात् = पारदारिके तृतीयेऽध्याये वक्तव्यं प्रवृत्त्या भावपरीक्षणमाश्रित्य ( ल्यब्लोपे पञ्चमी ) । जानीयात् 'वक्तव्यान्' ख० ।

४ नियोगः ।

भिषजा कन्या साध्यं भेषजमिदमत्र साधु निर्दिष्टम् ।
इति कुर्विति कथयित्वा कर्मैनां कारयेत् प्राज्ञः ॥ १५ ॥
पुनरागमननिबन्धं कृत्वा शपथैः[1] पुनस्तयाऽनुमतैः ।
विसृजेदेनां कार्यो योग इहासौ[2] त्रिरात्रादौ ॥ १६ ॥
गोष्ठीवृद्धिरभीष्टा[3] द्रष्टुमिहाभीक्ष्णमागमे तस्याः ।
अभियुक्तो[4] विस्रम्भे स्यादन्यासामसावधिकम् ॥ १७ ॥
वाचा नैव तु कथयेदेवं स्याद् गूढभावमानोऽपि ।
कन्या विगलितभावा[5] घोटकमुख आह चाचार्यः ॥ १८ ॥
मन्येत यदि च सिद्धां बहुधैनां स्यादुपक्रमेऽभिरतः ।
तत्काले ना[6]सिद्धा सहते सोपक्रमं यस्मात् ॥ १९ ॥
नार्यः साध्वसमन्दा[7] निशि वा तमसि प्रदोषवेलायाम् ।
सुरतव्यवसायिन्यो जायन्ते रागवत्यश्च ॥ २० ॥

---

१ 'मम जीवितेन शापितासि चेत् पुनर्नागच्छसि' इत्येवंरूपैः ।

२ 'अस्य च योगस्य (कन्यासाध्यस्य) त्रिरात्रं त्रिसन्ध्यं च प्रयुक्तिः' इति सूत्रम् । 'कार्योपगम इहासौ' ख० ।

३ कलानामाख्यायिकानां वा गोष्ठीं वर्धयेत्, येन तदासक्ता चिरं तिष्ठेत् ।

४ 'अन्याभिरपि विश्वासनार्थमधिकमाधिकं चाभियुञ्जीत' इति सूत्रम् । विश्वासनार्थम् = ताभिर्विश्वासनं कार्यमिति हेतोः ।

५ ( बहुशोऽभियोगापेक्षणीयत्वात् कन्यानाम् ) 'दूरगतभावोऽपि हि कन्यासु न निर्वेदेन सिध्यतीति घोटकमुखः ।' इति सूत्रम् । तदर्थोऽत्र न स्पष्टीभवति ।

६ यस्मात् तत्कालेऽसिद्धा सा उपक्रमं न सहते अत एनां बहुधा साधयित्वोपक्रमेदित्यर्थः ।

७ 'मन्दसाध्वसाः' इति सूत्रे । छन्दःपारवश्यात् 'साध्वसमन्दाः' इति पठितम् ।

पुरुषे[1] प्रतिषेधं न च भूरि चरन्तीति तेषु कालेषु।
कुर्यादुपक्रमेच्छां कथितः प्रायः प्रवादोऽयम् ॥ २१ ॥
सख्या धात्रेय्या वा लाभादर्थस्य[2] भावकारिण्या।
तम[3]कथयन्त्या चार्थं बहिरेनां निर्गतां सहिताम् ॥ २२ ॥
ऐका[4]भियोगविरहे कुर्यादभियोगमङ्कमारोप्य।
पूर्वोक्तेन च विधिना मतमेतत् कामशास्त्रस्य ॥ २३ ॥
यात्रोत्सवयोर्यज्ञे व्यसने प्रेक्षारते जने निखिले।
सोपक्रमोऽन्यदाऽपि हि भूया[5]द्विज्ञातभाषा(वा)यासु ॥ २४ ॥
अवधृतभावा योषा देशे काले यथेहितं निपुणैः।
व्यावर्तते नियुक्ता नेति मतं कामशास्त्रस्य ॥ २५ ॥
एकपुरुषाभियोगा इत्थं श्रीवीरभद्रदेवेन।
वात्स्यायनोपदिष्टा आर्यावृत्तेन निर्णीताः ॥ २६ ॥
म[6]न्दापदेशजाता गुणवत्यपि कन्यका वापि।

---

१ 'पुरुषप्रतिषेधम्' ग०। 'केषु' ख०।

२ 'गृहीतार्थया' इति सूत्रे अर्थस्य नायकोऽपि नायिकां समीपमानायितुमिच्छतीत्येतद्रूपस्य लाभात् ज्ञानात्--इति जयमङ्गलानुसारी अर्थः। अर्थस्य = 'धनस्य' लाभात् = प्राप्तेः--इति ग्रन्थकर्तृसंमतोऽर्थः प्रतिभाति।

३ तं नायकपार्श्वगमनरूपम्। 'तं कथयन्त्याचार्याः' ख०।

४ विप्रकृष्टत्वात् स्वयमसहायेनाभियोक्तुमशक्यत्वे।

५ भूयादित्याशीर्लिङ् विध्यर्थे बहुशः प्रयुक्तो ग्रन्थकृता। तदिदं प्रमादकृतमेव।

६ 'मन्दान्यदेश--' ख०। यथा निर्धनत्वादियुक्तः पुमान् कन्यामलभमानः तां स्वार्थं स्वयमेवानुरञ्जयेदित्युक्तम्, तथा कन्यापि हीनाभिजनत्वादियुक्ता केनाप्ययाच्यमाना स्वयं सदृशं पुमांसमावर्जयेदित्याह--मन्दापदेशेत्यादिना। अपदिश्यते इत्यपदेशः

पितृहीना ज्ञातिकुले तिष्ठन्ती वा स्वयं रचयेत्[1] ॥ २७ ॥
सा गुणवन्तं शक्तं[2] सुदर्शनं प्रीतिसंयुतं रचयेत् ।
इन्द्रियवशम(मु)पचारैर्गुर्वनपेक्षं चरेत्स्ववशे ॥ २८ ॥
एनां सह धात्र्याद्यैर्माताभिमुखे चरेत् पुनस्तस्याः ।
विजने तथा विकाले तदुपस्थानं[3] सपुष्पायाः[4] ॥ २९ ॥
संवाहनादिकर्माणि कौशलमथवा कलाकलापे[5]ऽस्मै ।
संदर्शयेत् कथा अपि कुर्यात् साम्ये(त्म्ये)न तस्यैव[6] ॥ ३० ॥
कथितानुपक्रमेषु च बालायां नाचरेदसौ सर्वान् ।
अनुरक्तापि न कुर्यात् स्वयमभियोगं विशालाक्षी ॥ ३१ ॥

---

कुलम् । मन्दापदेशजाता हीनकुलजा ।

---

१ अत्र 'वरयेत्' इति पाठः साधुः प्रतिभाति । प्राप्तयौवना कन्या ऽजातपाणिग्रहणा सदृशं पतिं स्वयं वरयेदिति भावः । यथोक्तम्--

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम् ॥
अदीयमाना भर्तारमधिगच्छेद् यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥ (मनुस्मृ० ९ । ९०–९१) इति ।

२ 'युक्तं' ख० । १० ।

चरेत्–कुर्यात् । 'माता चैनां सखीभिर्धात्रेयिकाभिश्च सह तदभिमुखीं कुर्यात्' इति सूत्रम् । 'धात्र्या वै' ख० ।

३ नायकसमीपगमनमित्यर्थः ।

४ पुष्पशब्द उपलक्षणार्थः । तेन सूत्रोक्तयोर्गन्धताम्बूलयोरपि ग्रहणम् । 'पुष्पगन्धताम्बूलहस्तायाः' इति सूत्रम् ।

५ 'कलापं च' ख० ।

६ 'तस्यै च ख० ३ ।

सौभाग्यं[1] विजहाति हि कुरुते येहाभियोगमेणाक्षी।
इत्याचार्यनिरुक्त्या स्वयमभियोगं चरेन्नैव ॥ ३२ ॥
तस्याभियोगमेषा संगृह्णीयादिहानुलोम्येन[2]।
विकृतिं[3] नैव भजेदथ चुम्बनपरिरम्भयोर्बाला ॥ ३३ ॥
श्लक्ष्णं प्रतिगृह्णीयादाकारं चारु(प्य)जानतीवेयम्[4]।
यूना मनोजभावाद्वदनग्रहणे बलाद्रचिते ॥ ३४ ॥
अभ्यर्थनासु[5] च रतौ कृच्छ्रात् संद(स्प)र्शनं भवेद् गुह्ये।
अभ्यर्थितातिविवृता[6] न स्यात् सुरतादृते नारी ॥ ३५ ॥
अव्यावर्तकमेषा[7] बुद्ध्वा चैवानुरागमेतस्य।
अभियुञ्जाना जह्यात् कन्याभावं[8] सरोजाक्षी ॥ ३६ ॥
कन्याभावविमुक्ता विश्वास्येषु[9] प्रकाशयेदेषां।
स्वोपावर्तनमित्थं[11] कथितं श्रीवीरभद्रदेवेन[10] ॥ ३७ ॥

---

१ 'शोभार्थं' ख०। 'चेहा–' ख०।

२ आनुकूल्येन। यथा न विमुखीभवेत्।

३ मा त्रासन्नायको मामुद्विग्नामिति हेतोः।

४ श्लक्ष्णमस्फुटं यथा स्यात्तथा (धाष्र्यपरिहारार्थम्) अजानतीव नायकस्य भावसूचकमाकारं गृह्णीयात्।

५ '–नया च' ख०।

६ '–र्थिताविवृत्ता' ख०।

७ स्थिरमित्यर्थः।

८ गान्धर्वविवाहपूर्वकं विमुक्तकौमारभावा स्यात्।

९ सखीधात्र्यादिषु। विश्वास्ये संप्र—ख०।

१० '–देव' ग०।

११ 'सोपावर्तनम्' ग०। स्वोपावर्तनम्–स्वयं वरस्य अभिमुखीकरणम्।

अभियुज्यमानतायां कन्या मन्येत यं[1] सुखोपायम्।
अनुकूलत्वाद् वश्यं परिग्रहं तस्य सा कुर्यात् ॥ ३८ ॥
अनपेक्ष्य गुणसमूहं रूपौचित्ये च लोक(भ)तोऽर्थस्य[2]।
पतिमाचरति सपत्नीभीतिं[3] यत्रापहायापि ॥ ३९ ॥
तत्र गुणाढ्यं वश्यं शक्तं बलवन्तमर्थिनं पुरुषम्।
हेतुभिरुप(रभि)युञ्जीत न[4] तु प्रतिलोमे मनः कुर्यात् ॥ ४० ॥
युक्तं गुणैरनेकैर्हित्वा साधारणं पतिं नार्यः।
गृह्णन्ति वश्यतायां निर्गुणमपि निर्धनं चैव ॥ ४१ ॥
धनिनो[5] लोकाः प्रायो बहवो निरवग्रहा बाह्ये।
सत्युपभोगे विपुले निर्विस्रम्भा बहिः सुखिनः ॥ ४२ ॥

---

१ 'यत्' ख०।

२ 'धनलोभेन' इति सूत्रम्। '–चित्यैव लोभनार्थाय' ख०।

३ प्रायेण धनिनां बहुभार्यत्वात्। 'पतिमाचरति सयत्ना प्रतिलोभं तं प्रहायापि' ख०।

४ 'नुन' ख०। गुणाढ्यशक्तवश्यत्वादियुक्तं पुरुषमभियुञ्जानं नापाकुर्यात्। पत्युर्वश्यत्वस्य स्त्रीणां धनादितोऽपि अधिकमभीष्टत्वात्। स्वाधीनपतिका हि स्त्रियः तावतैव आत्मानं सर्वानन्दास्पदं कलयन्ति। यथोदाहृतम्—

अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलम्
नो वक्रा गतिरुद्धतं न हसितं, न नैवास्ति कश्चिन्मदः।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥ इति।

तथा च सूत्रम्—

वरं वश्यो दरिद्रोऽपि निर्गुणोऽप्यात्मधारणः।
गुणैर्युक्तोऽपि न त्वेवं बहुसाधारणः पतिः ॥ इति।

५ यस्तु न वश्यस्तत्र दोषमाह—धनिन इत्यादिना। 'धनिनां दारा' इति

**नीचो यस्त्वभियोक्ता पतितो[1]ऽप्यथवा विदेशगतिशीलश्च ।**
**संयोगमेष नार्हति युक्तः पत्न्याऽप्यपत्यैश्च ॥ ४३ ॥**
**यश्च यदृच्छावशतो नि(ऽभि)[2]योगकर्त्ता तथाऽक्षदण्डा[3](म्भा)भ्याम्।**
**नार्हति सोऽपि मृगदृशा संयोगं भोग[4]साध्यं हि ॥ ४४ ॥**
**पुरुषोऽभियोक्तृता[5]ख्यः सर्वगुणापेक्षया मतः श्रेष्ठः ।**
**पुरुषाभियोगतः खलु रागः संवर्धते स्त्रीणाम् ॥ ४५ ॥**
**श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।**
**कन्यायुक्ताधिकृतौ रचितोऽध्यायश्चतुर्थोऽसौ ॥ ४६ ॥**

---

पाठ उचितः ।

प्रायेण धनिनां दारा बहवो निरवग्रहाः ।

बाह्ये सत्युपभोगेऽपि निर्विस्रम्भा बहिःसुखाः ॥ इति सूत्रम् ।

धनिनां स्त्रियः निरवग्रहाः–निरङ्कुशा भवन्ति । तत्र कारणं तु बाह्ये अशनासनालङ्काराद्युपभोगे विपुले सत्यपि निर्विस्रम्भत्वम्–विस्रम्भेण आन्तरेण रताख्येन सुखेन रहितम् ।

---

१ इदं ख० पुस्तकानुसारम् । पुस्तकान्तरेषु तु 'पलितो वा विदेशगतिशीलश्च' इत्यस्ति तच्छन्दोऽननुकूलम् ।

२ बलात्कारेणेति भावः ।

३ अधिक इति शेषः । व्याजबहुलो द्यूतासक्तश्चेत्यर्थः । 'दम्भद्यूताधिकः' इति सूत्रम् ।

४ 'नागसाक्ष्यम्' आ० पु० । '—दृशां संयोगं राग–' ख० ।

५ अभियोक्तृतया वरयितृत्वेन आख्यातः स्वयमनुरागेणाभियोक्ता इति भावः । 'ऽभियोक्तृताढ्य' ख० । तस्याभियोक्तुः इतरवरापेक्षया श्रेष्ठत्वे हेतुमाह 'पुरुषाभियोगतः' इत्यादिना ।

# अथ पञ्चमोऽध्यायः।

अथ पञ्चममध्यायं प्रपञ्चयत्येष दानमानेषु।
यस्यांऽवञ्चनभावादाकूपारं वशो लोकः ॥ १ ॥
प्राचुर्येणालाभे विविक्तभावस्य कन्यका धात्रीम्।
नीत्वोपसर्पयेदिह भूयादेवं वशीभावः ॥ २ ॥
सा वै(चै)नामज्ञाता भूत्वा कपटेन नायकस्याऽस्य।
अनुरञ्जयेदजस्रं तस्य गुणैर्वर्ण्यमानैस्तु ॥ ३ ॥
रुच्या तस्याः पुनरियमस्य गुणान् वर्णयेन्मुहुर्बहुधा।
वरयित्रन्तरदोषान् प्रकाशयेद्रागबोधाय ॥ ४ ॥

---

१ 'यस्यालम्बन' ख०।

२ पूर्वोक्तियुक्त्याऽनुरञ्जितां स्वयम्वरप्रवृत्तां कन्यां गान्धर्वेण विवाहेन आत्मीकुर्यात्, विपरीताञ्च आसुरादिभिरिति विवाहयोगान् व्याचक्षाणः पूर्वं गान्धर्वसम्बद्धं सहायसाध्यविधिमाह प्राचुर्येणेत्यादिना। ३ 'कन्यकां' ग०।

४ 'धात्रेयिकाम्' इति सूत्रे। कन्यकाया धात्रीं प्रियहिताभ्यामावर्ज्य तस्याः समीपे निसृष्टार्थां दूतीं कृत्वा प्रेषयेदिति भावः। ५ 'तस्य' ग०।

६ 'मन्य' आ० पु०। अस्य गुणान् वर्णयेदिति। यथा मालतीमाधवे कामन्दकी—

असौ विद्याशाली शिशुरपि विनिर्गत्य भवनात्
इहायातः सम्प्रत्यविकलशरच्चन्द्रवदनः।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ (२।११)

इत्यादिना मालतीरुच्या माधवगुणानवर्णयत्।

७ यथा मालतीमाधवे द्वितीयेऽङ्के तस्मिन् वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन इति लवङ्गिकावाक्यम्। 'दुर्दर्शनेन घटतामियमप्यनेन धूमग्रहेण विमला शशिनः कलेव' इति कामन्दकीवाक्यम्।

दोषान् प्रकाशयेदथ पित्रोरिह तथैव[1] बन्धुवर्गस्य ।
लोभं गुणेष्ववबोधं निरपेक्षत्वं च चापल्यम्[2] ॥ ५ ॥
रुच्या स्वकीयया किल भर्तारं प्राप्य याः शुभोदर्काः ।
अस्याः प्र(नि)दर्शयेत्ताः[3] शकुन्तलामादितः कृत्वा ॥ ६ ॥
युक्ता महाकुलेष्वपि या विद्विष्टाः सुदुःखितास्त्यक्ताः ।

---

१ अयं पाठः छन्दोभङ्गावहः । 'पित्रोरस्याश्च बन्धुवर्गस्य' इति पाठे तु छन्दोऽनुकूलता सम्पद्यते ।

२ यथा मालतीमाधवे—

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदन्त्वैदम्पर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स भवान्नन्दन इति ॥ ( २।७ ) इत्यादिना ।

३ 'यथा मालतीमाधवे "कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकम उर्वशीत्याख्यानविद आचक्षते । वासवदत्ता च पित्रा संजयाय राज्ञे दत्तमात्मानमुदयनाय प्रायच्छत्" इत्यादिना कामन्दक्या मालतीपुरतो वर्णितम् । इत्थं मालतीमाधवस्य द्वितीयोऽङ्कोऽस्य प्रकरणस्य उदाहरणतया बोध्यः । यथा द्वितीयाङ्कान्ते प्रकरणबोधितेतिकर्तव्यतायाः सारः कामन्दक्या अवलोकितां प्रतीत्थमभिहितः—"अवलोकिते साधु सम्प्रति तटस्थयैव मया निसृष्टार्थदूत्यस्य लघूकृतो भारः । कुतः—

वरेऽन्यस्मिन् दोषः पितरि विचिकित्सा च जनिता
पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी ।
स्तुतं माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचयः ॥ इति ।

"अनुरूपभर्तृगामिनीनां वासवदत्तादीनां वर्णनने ग्राहयाऽनुशयम्" इति दशकुमारचरितेऽपि ( उ० पी० ३ उ० )

प्रतिपत्नीकृतदुःखा अस्याः संदर्शयेत्ताश्च ॥ ७ ॥
आयतिमत्ता सुखिता निरन्तरं चैकचा(चा)रिता[1] रागः ।
वश्यत्वं च रमण्या इत्यादीन्[2] वर्णयेदस्यै ॥ ८ ॥
अस्मिन् मनोरथेऽस्याः साध्वसलज्जे तथैव चापायम् ।
छिन्द्यादुधेतुभिरेषा दूतीकल्पेन[3] धात्रेयी ॥ ९ ॥
आदास्यते बलात्त्वां त्वदननुमत्यैव नायकः स्मरभूः ।
स्यादेवं सुगृहीतं[4] कथयेदित्थं[5] रहस्येनाम् ॥ १० ॥
एनां च प्रतिपन्नामुचितस्थलवर्तिनीं मनोरमणः ।
आनाय्याग्निं श्रोत्रियगेहाद्दर्भान् परिस्तीर्य ॥ ११ ॥
हुत्वा त्रिः स्मृतिविधिना परिणयमस्याश्चरेदसावुचितम् ।
पश्चात् प्रकाशयेदिहं[5] पित्रोः पुरतः कृतार्थत्वात् ॥ १२ ॥
परिणयविधयः क्लृप्ताः साक्षीकृत्येह ये पुनः शिखिनम् ।
आचार्याणां वचनादतिवृत्तिं न प्रयान्त्येते ॥ १३ ॥
एनां च दूषयित्वा शनकैरवबोधयेदसौ[6] स्वजने ।

---

१ एकचारिता = एकपत्नीत्वम् । कामन्दक्या मालतीपितुर्दोषप्रकाशः कृतः येन मालतीपितरं स्वार्थपरम् वीक्ष्य क्षुब्धहृदया आह 'कथमुपहारीकृतास्मि राज्ञस्तातेन राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती । हा हतास्मि समुपस्थितार्थवज्रपतन्या मन्दभाग्या' इत्यादि ।

२ नायकागुणानिति दोषः ।

३ 'दूतीकल्पं च सकलमाचरेत्' इति सूत्रम् । पारदारिके वक्ष्यमाणं प्रतारणादि सकलं नायकार्थसाधनक्षमा दूतीकर्म कुर्यादिति तदर्थः ।

४ 'स्यादेवं सुष्ठु हितं' ख० । दिदं १ आ० पु० ।

५ 'दिति' ख० ६ प्रकाशयेत् ।

तद्बान्धवाश्च तस्मै दद्युरिमां दण्डभीत्यादेः ॥ १४ ॥
प्रीत्य दिभिरथ तानिह कुर्यान्निजवश्यतामनुप्राप्तान् ।
कुर्यात्ततोऽग्निसाक्ष्यं गान्धर्वोऽयं विवाहः स्यात् ॥ १५ ॥
[2]अप्रतिपन्नामन्तश्चारिण्या प्रीतया स्त्रियाऽऽनाय्य ।
च(छ)लतो हि सावकाशं छ(ब)लतः स्यादग्निसाक्ष्यं तु ॥१६॥
[3]ज्येष्ठं भ्रातरमस्या वयसा तुल्यं पराङ्गनानिरतम् ।
वेश्यासु वा प्रसक्तं दुष्करसाहाय्यदानेन ॥ १७ ॥
प्रियकरणैश्च सुदीर्घं कालं ह्यनुरञ्जयेत्तदन्ते च ।
स्वाभिप्रायं तस्मै कथयेत् प्रायो युवानो हि ॥ १८ ॥
शीलस्य व्यसनस्य च साम्ये वयसो वयस्यवर्गाणाम् ।
अर्थे जीवितमपि निजमत्यक्तव्यं न जानन्ति ॥ १९ ॥
आनाय्य तेन बलतः छलतो वश्येन सावकाशे ताम् ।
तेन मनोरथसिद्धिं[4] कुर्यात् पूर्वेण यत्तुल्यम् ॥ २० ॥
धात्रेयिकया यदि वा मदनीयं[5] साधु पाययित्वैनाम् ।

---

१ गान्धर्वेण विवाहविधिना ऊढामपि दूषितामपि च वोढ्रेऽप्रतिपाद्यमानां श्रुत्वा राजा दण्डं पातयेदिति भयेन आदिना स्वकुलदूषणभीत्या च कन्याबान्धवाः तस्मै एव कन्यां दद्युरिति भावः।

२ स्वयं पाणिग्रहणमस्वीकुर्वाणाम् । अन्तश्चारिण्या = अन्तरङ्गया ।

३ इतः पूर्वम् "आसन्ने च विवाहे मातरमस्यास्तदभिमतदोषैरनुशयं ग्राहयेत् । ततस्तदनुमतेन प्रातिवेश्या भवने निशि नायकमानाय्य श्रोत्रियागारादग्निमिति समानं पूर्वेण ।" इति सूत्रमस्ति । तच्च ग्रन्थकारेण न स्पृष्टम् । त्रुटिता वा भवेयुरत्रत्याः कतिचित् श्लोकास्तदनुवादकाः ।

४ 'सिद्धिं' ख० । 'तुल्यः' आ० पु० । ५ सुराप्रभृति ।

बलतः छलतः स्वान्तिकमानाय्याऽप्राप्तसंज्ञां[1] तु ॥ २१ ॥
दूषयति तत्परं स्यात्तुल्यं पूर्वेण वह्निकार्यं[2] तु।
सुप्तां चैकां यदि वा वरयित्वा नष्टसंज्ञां ताम् ॥ २२ ॥
दूषयति चरति परतः पूर्वसमानं विवाहकार्यं[3] तु।
उद्यानादिषु यान्तीं यदि वा हरतीह तां कान्तः[4] ॥ २३ ॥

---

१ 'नाय्य प्राप्त' आ० पु०।

२ 'जयमङ्गलाकारस्तु 'अत्राग्न्याहरणादिकं नास्ति अधर्मत्वादिति' इत्याह।

३ अनेन प्रकारद्वयेन पैशाचो विवाह उक्तः 'सुप्तप्रमत्ताभिगमात् पैशाच' इति ( विष्णुस्मृ० २४ अ० )वचनात् 'स्त्रीपानमद्यभोगसंप्रयोगात् पैशाचः' ( स्त्री कुट्टनी दूती वा' पानं हृद्याः पानीयपदार्थाः ( आपानगोष्ठी वा ) मद्यं सुरादि, भोगो वस्त्रा-लङ्कारादिकम् एतैः कन्यां कन्यापित्रादिं वा वशीकृत्य विवाहः पैशाचः) इति हारीत-वचनानुसारं तु पूर्वोक्ता दूतीप्रयोगादिना सम्पादनीया विवाहा अपि पैशाचसंज्ञा एव।

४ अयं राक्षसो विवाह उक्तः 'प्रसह्याऽऽदानाद्राक्षसः' ( गोतमधर्मसूत्रे ) इत्युक्तः। श्रीकृष्णकृतरुक्मिणीहरणमस्योदाहरणम्।

श्वो भाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य पृतनापतिभिः परीतः।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥

इति (११ भागवते १० स्कन्धे ५३ अध्याये) रुक्मिण्याः श्रीकृष्णं प्रति सन्देशः।

सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य च।
चौर्येणापि विवाहेन सा विवाह्या रहः स्थिता ॥ इति वत्सवचनमप्यत्र बोध्यम्। न चासुरादिविवाहेषु सप्तपदाभिक्रमणाभावात् पतित्वभार्यात्वयोरनुपपत्तिरित्याशङ्कनी-यम्। तत्रापि स्वीकारानन्तरं संस्कारविधानात्।

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥ इति देवलः।
गृह्यपरिशिष्टेऽपि—गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥ इति। ( वीरमित्रोदये )

एते विवाहयोगाः प्रभुणा श्रीवीरभद्रदेवेन ।
वात्स्यायनानुरोधात् कथिताः क्रमशो(तो)[1] विविच्येह ॥२४॥
पूर्वः पूर्वो मुख्यो योगेष्वेतेषु धर्मचिन्तायाम्[2] ।
तस्मादर्थात् सिद्धं पूर्वाभावे पराऽऽचरणम्[3] ॥ २५ ॥
सिद्धा यतो विवाहा[4] जनयन्त्यनुरागमुत्कटं सुखदम् ।
गान्धर्वो मध्योऽपि हि संद्योगात्[5] पूजितस्तस्मात् ॥ २६ ॥
सुखदोऽनधिकक्लेशः प्रचुराच(व)रणः[6] पुनर्महापुरुषैः ।
अपि चानुरागबहुलो गान्धर्वः पूज्यते सद्भिः ॥ २७ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
कन्यायुक्ताधिकृतौ पञ्चम इह निर्मितोऽध्यायः ॥ २८ ॥

---

१ 'क्रमेण' ख० पुस्तकातिरिक्तपुस्तकेषु ।

२ एतद्विषयः प्रपञ्चः ( राक्षसादिविवाहानां वर्णभेदेन व्यवस्था फलाफलमूलकं प्राशस्त्याप्राशस्त्यादि च ) मन्वादिधर्मशास्त्रनिबन्धेषु द्रष्टव्यम् ।

३ 'परावरणम्' ख० पुस्तकातिरिक्तपुस्तकेषु ।

४ 'विवाहान् जनयत्यनुरागं' ख० । विवाहात् सिद्धा स्त्री अनुरागं जनयतीति ।

५ 'संयोगात्' ग० ।

६ प्रचुरमाचरणं यस्य सः महद्भिः प्रचुरतयाऽऽचरितः । 'प्रचुरावरणः' इति पाठे तु प्रचुरम् आवरणं गुप्तिर्यत्र सः । गुप्ततयैवात्र सर्वं कार्यं सम्पद्यते, नास्ति वरण-संविधानसंभारभारगौरवस्यात्रावश्यकतेति भावः । 'अवरणात्'इति सूत्रम् । 'वरणसंविधानाभावात्' ( ज० मं० ) इति तदर्थः ।

# अथ भार्याधिकारिकं नाम चतुर्थमधिकरणम् ।

## प्रथमोऽध्यायः ।

अधिकरणेऽथ चतुर्थे घटते भार्याधिकारिके चतुरः ।
चतुरुदधितीरगामी निद्रां नोपैति यद्विधुरः ॥ १ ॥
अध्यायद्वयमस्मिन् प्रथमे तत्रैकचारिणीवृत्तम् ।
उक्ता प्रवासचर्या चरमे वृत्तं गरिष्ठादेः ॥ २ ॥
वृत्तं पुनर्भुवोऽपि च तद्वदिहास्त्येव दुर्भगावृत्तम् ।
आन्तःपुरिकं पुंसः प्रतिपत्तिर्भूरिनारीषु ॥ ३ ॥
संगृह्येत्थमिहार्थानधिकरणेऽस्मिन्नसौ चतुर्थे तु ।
कुरुते प्रथमाध्यायं विशदं विशदं यशो यस्य ॥ ४ ॥
भार्यैकचारिणी[1] या दृढविस्रम्भा[2]ऽनुकूलमाश्रित्य[3] ।

---

१ जातपाणिग्रहणतया भार्यात्वं प्राप्तया कन्यया पुंसि कथं वर्तितव्यमित्युपदेष्टुं भार्याधिकारिकमुच्यते । तत्र भार्या द्विविधा—एकचारिणी सपत्नी च । तत्र प्राधान्येनादावेकचारिणी वृत्तमाह भार्यैकचारिणीत्यादिना ।

२ 'गूढविस्रम्भा' इति सूत्रे । दृढविस्रम्भा—कपटाचारहीना, परं विश्वासस्थानम् ।

३ भर्तुश्चित्तवृत्तेरनुकूलं संव्यवहारमाश्रित्य पत्न्या अनुकूलवर्तन एव गृहस्थाश्रमस्य साफल्यात् । यथोक्तम्—

पत्नीमूलं गृहं पुंसां यदि च्छन्दानुवर्तिनी ।
गृहाश्रमात् परं नास्ति यदि भार्यावशानुगा ।
अनुकूलकलत्रो यः स्वर्गस्तस्य इवैह तु ।
प्रतिकूलकलत्रस्य नरको नात्र संशयः ॥ ( दक्षस्मृ० ४।१७५ )

वर्तेत देवतुल्यं[1] भर्तारि सा सर्वभावेन ॥ ५ ॥

संमत्याऽस्य निजात्मनि चिन्तां कलयेदसौ कुटुम्बानाम्[2] ।

वेश्म च शुचि सम्मृष्टस्थानं विरचित[3]विविधकुसुमम्[4] ॥ ६ ॥

संश्लक्ष्णभूमिभागं हृदयाह्लादं नमेक्षणं[5]ऽ(-ह्लादप्रदेक्षणं) चैव ।

त्रिषवण[6]विरचितबलिविधिपूजितदेवाश्रमं[7] चैव ॥ ७ ॥

गोनर्दीयः कथयति चित्तग्रहक्षमत्वमेतस्य[8] ।

न ह्येतावति सति तच्चित्तग्रहणे परापेक्षम्[9] ॥ ८ ॥

---

१ यथोक्तम्—

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।

उपचर्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ (मनुस्मृ० ५।१५४)

स्त्रीणामाचारो व्यासस्मृतौ द्वितीयेऽध्याये सम्यक् निदर्शितः ।

२ यथा सम्राजः साम्राज्यसुव्यस्थाचिन्ता भवति, तथैव पत्न्या अपि कुटुम्बस्य । तस्य हि सा सम्राज्ञी—

सम्राज्ञी श्वसुरे भव सम्राज्ञी श्वश्र्वां भव ।

ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ इति ऋग्वेदे ( १०।८५।४६ ) श्रुतिः ।

३ 'विचित' आ० पु० ।

४ 'कुसुमं च' ग० आ० पु० । 'कुसुमं च' इति पाठे चकारोऽधिकश्छन्दोभङ्गावहः ।

५ हृदयाल्हादप्रदम् ईक्षणं दर्शनं यस्य तत् । दर्शनीयामित्यर्थः । 'हृद्यदर्शनम्' इति सूत्रात् । 'हृदयाल्हादनमीक्षणीयं च' ख० ।

६ त्रिषवणम्=त्रिसन्ध्यम् ।

७ देवाश्रमः=देवगृहम् ।

८ वेश्मनः । 'मेतेषाम्' ख० ।

९ 'क्षा' ख० । 'नह्यतोऽन्यद् गृहस्थानां चित्तग्राहकमस्तीति' गोनर्दीयः इति सूत्रम् ।

गुरुषु च मन्त्रिषु भृत्ये नायकभगिनीषु तत्पतिष्वपि च ।
प्रतिपत्तिः[1] कर्तव्या यथार्हतः पद्मपत्राक्ष्यां[2] ॥ ९ ॥
परिपूते च स्थाने हरितं चणकस्य[3] वप्रमादध्यात् ।
इक्षुस्तम्बा[4]जीरकसर्षपमजमोदकं चैव ॥ १० ॥
शतपुष्पां कुब्जक[5]मपि कुरण्टकं मल्लिकां तथा जातीम् ।
नवमालिकां जपामपि नन्द्यावर्तं परं कुसुमम् ॥ ११ ॥
रचयेदसौ प्रयत्नात् फलं तु (ऽ)वृक्षांश्च[6] बालकोशीरम् ।
ऊर्जितमसतः(उच्छ्रितमस्त[7])तृणादि च वृक्षवने स्थण्डिलं रचयेत् १२
देशे[8] सर्वसमाने कूपं वा दीर्घिकां रचयेत् ।
एवं कूपादीनां सर्वमनुष्योपयोगः स्यात् ॥ १३ ॥
अस्मै रुचितमिदं स्याद् द्वेष्यमिदं पथ्यमीदृशं नेति[9] ।

---

१ सत्कारः ।

२ 'क्ष्याः' ग० आ० पु० ।

३ 'हरितशाकवप्रान्' इति सूत्रे ( 'हरितं धान्याकार्द्रकादि । शाकं पालङ्क्यादि च । एषां वप्रान् केदारान्' ज० मं ) 'हरितं चणकस्य पत्र' ख० । हरितक्षणकस्य वप्र' आ० पु० क० ग० ।

४ 'इक्षुर्वास्तुक' ख० ।

५ 'कुन्दकमपि' ख० । 'कुत्रकमपि' क० ।

६ 'फलं सुवृक्षांश्च' ख० । 'फलवद्वृक्षांश्च' इति स्यात् ।

७ 'उच्छ्रूत' क० । 'ऊर्जितमशनतृणादि च' ख० ।

८ 'मध्ये कूपं०' इति सूत्रम् । 'सामान्येषु देशेषु कूपं०' इति च तत्रत्यं पाठान्तरम् । इदमेव ग्रन्थकृताऽनुसृतम् ।

९ 'वेत्ति' ख० ।

विद्याद् भोजनवस्तुनि हृद्या रमणस्य पद्माक्षी ॥ १४ ॥
बहिरायान्तं श्रुत्वा स्वैरं सज्जा गृहान्तरा(रे) तिष्ठेत् ।
प्रक्षालयेत्तदङ्घ्री स्वयमपनुद्याथ दासीस्तु ॥ १५ ॥
एतस्याऽगमने यत् किमपि निदानं विचिन्तयेत्तदसौ ।
तत्कर्तुं च सयत्ना भूयाद्दुःसाध्यमप्युचितम् ॥ १६ ॥
कुलटा कुहकेक्षणिका श्रव(म)णा अथ मूलकारिका चैव ।
अपि भिक्षुकीमसुभगां संसर्गे वर्जयेन्नित्यम् ॥ १७ ॥
तस्मा(न स्या)न्मुक्तालङ्कृतिरेषा पुरतः स्वकीयरमणस्य ।
प्रेमार्थिनी प्रियेणं च सालङ्कृतिरावसेद्विजने ॥ १८ ॥

---

१ एतेन पत्युः स्वास्थ्यरक्षायामवधानदानमपि स्त्रियाः कर्तव्यमिति सूचितम् ।

२ इतः पूर्वम् "भिक्षुकीश्रमणाश्रपणाकुलटाकुहकेक्षणिकामूलकारिकाभिर्न संसृज्येत" इति सूत्रमस्ति तच्च ग्रन्थकृता इतोऽनन्तरं १७ श्लोकेऽनूदितम् । 'बहिरायातं श्रुत्वा स्वैरं शय्यागृहान्तरं प्रविशेत् । ' ख ।

३ 'मपरुध्याथ' ख० ।

४ 'कर्तुंश्च' ग० आ० पु० ।

५ कौतुककारिका ।

६ विप्रश्निका ।

७ प्रव्रजिता ।

८ 'मूलकारिका' ख० । मूलेन वशीकरणेन या कर्म करोति सा तन्त्रप्रयोगकारिकेति वा ।

९ 'गाः' ग० आ० पु० । 'अपि भिक्षुकीस्वयमिश्राः' ख० ।

१० 'प्रेमार्थिनी हि देवं न च' ख० पुस्तकातिरिक्तपुस्तकेषु । तत्र 'न च' इत्यक्षरद्वयं छन्दो न सहते, नापीदमर्थानुकूलम् । 'नायकस्य च न विमुक्तभूषणं विजने संदर्शने तिष्ठेत्' इति सूत्रात् ।

कुर्वाणं व्ययमधिकं रहसि निषेधेदसद्व्यये सक्तम् ।
गोष्ठीं सह च सखीभिर्गमनं यज्ञे विवाहादौ ॥ १९ ॥
कुर्यात्तेनानुमता क्रीडाः कुर्यात्तदानुलोम्येन ।
शयनं पश्चाद्रचयेज्जागरणं पूर्वमेवास्मात् ॥ २० ॥
सुप्तस्य न प्रबोधनमाचरणीयं विना महाकार्यम् ।
आहारासंदर्शनमात्माहारश्च गोप्यः स्यात् ॥ २१ ॥
नाधिक्षेपः कार्यः कलुषितया नायकाचारे ।
मित्रजनमध्यवृत्तिं ब्रूयादेकाकिनं वापि ॥ २२ ॥
न स्यान्मूलकृदेषा भूयादेवं महानविश्वासः ।

---

१ 'गोष्ठ्या' ख० ।     २ पूर्वोक्ता यक्षरात्र्यादयः ।

३ संगृहीतोऽयमुपदेशभागः—

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्तधर्मागमः ॥

४ प्रसुप्तं तु सुखासीनं रममाणं यदृच्छया ।
आतुरेष्वपि कार्येषु पतिं नोत्थापयेत् क्वचित् ॥ इति स्कन्दपुराणोक्तेः ।

'आहारसंदर्शनमिमामाहारं चैव गोप्यं स्यात्' क० ग० आ० पु० । 'महानसं च सुगुप्तं स्याद्दर्शनीयं च । ' इति सूत्रम् । 'आहारं च महानसं च सुगुप्तं प्रवेशसंकटं सुदर्शनीयं च । ' इति तत्रैव पाठान्तरम् ।

५ धीरोदात्तत्वख्यापनार्थम् ।     ६ उपालभेत ।

७ मूलकारिका । यास्तन्त्रमन्त्रप्रयोगैर्नायकं वशीकर्तुमिच्छन्ति न तु तदनुकूलव्यवहारैस्ता मूर्खा नायकस्य नितरामविश्वासपात्रतां यान्ति, तत्प्रेमलेशमपि च न लभन्ते ।

गोनर्दीयाचार्यः कथयत्येवं विचार्यैव ॥ २३ ॥
दुर्व्याहृतं[1] परिहरेन्न च कुर्याद्दुर्निरीक्षितं निपुणा ।
अन्यत्र [2]मन्त्रणं न च वृत्तिद्वारप्रदेशे च ॥ २४ ॥
प्राङ्गणविविक्तयोरपि सुचिरं वृत्तिश्च चारु वर्ज्याऽस्याः ।
एवं स्मृतिविनिषिद्धा[3] नग्नस्नानादयस्त्याज्याः ॥ २५ ॥
द्वारनिरीक्षणमानिशं न चरेन्न च कूटमन्त्रणं च [4]कलिम् ।
दन्ते [5]रागः कार्यो वार्यौ दुर्गन्धपङ्कौ च ॥ २६ ॥
बहुभूषणानुलेपाद्ब(ब)हुतरकुसुमोल्बणांशुकावरणा[6] ।
भूयाद् भावाभिज्ञा वेषे वैहारिके[7] नारी ॥ २७ ॥

---

१ दुर्व्याहृतम्–दुर्वचनम् । दुर्निरीक्षितम्–अस्निग्धवीक्षणम् । अन्यत्र मन्त्रणम्–तिर्यङ्मुखं कृत्वा भाषणम्–एतत्त्रयं वैराग्यजनकम् । द्वारदेशावस्थानं च अयत्नसाध्यत्वसूचकम् । यथोक्तं सूत्रे—"अयत्नसाध्या योषितस्त्विमा अभियोगमात्रसाध्या–द्वारदेशावस्थायिनी प्रासादाद्राजमार्गावलोकिनी—"इत्यादि ( ५ । १ ) वक्ष्यति च ग्रन्थकारोऽपि ( ५ । ४५ ) ।

२ 'भ्रमणं' ख० । सूत्रे तु 'निष्कुटे मन्त्रणं विविक्तेषु चिरमवस्थानम्—' इत्यस्ति । विविक्ते चिरमवस्थानमस्निग्धताजनकम् ।

३ नग्नस्नाननिषेधो भागवते दशमस्कन्धे चीरवस्त्रहरणलीलायां गोपीः प्रति कृष्णोक्तिषु द्रष्टव्यः । एवं–नैकाकिनी क्वचिद्गच्छेन्न नग्ना स्नानमाचरेत् ।

भर्तृविद्वेषिणी नारी साध्वी नो भाषयेत् क्वचित् ॥ इति स्कन्दपुराणेऽपि ।

४ कलहम् ।

५ एष श्लोकार्धो यद्यपि 'द्वारनिरीक्षणमनिशम्—' इत्यतः पूर्वमस्ति सर्वपुस्तकेषु तथापि उचितत्वादत्र निवेशितः ।

६ '–ल्वनांशु–' ग० । '–शुकाभरणा' ख० ।

७ 'वैवाहिके' आ० पु० । 'वैहारिके' क० ग० । "बहुभूषणं विविधकुसुमानुलेपनं

वैहारिके[1] तु वेषे भूयात्तनुशुक्लपट्टवस्त्राढ्या[2]।
[3]सि(मि)तभूषा मि(सि)तकुसुमा मिततरदेहाङ्गरागा च ॥२८॥
अनुवृत्तिः कर्तव्या[4] शुभया भर्तृव्रतोपवासादेः।
तत्र निषेधो युक्तः प्रतिषेद्धव्यैः प्रणामाद्यैः[5]॥ २९ ॥
मृद्विदलकाष्ठकृत्रि(त्ति[6])ज लोहमयानां कार्यभाण्डानाम्।
काले कार्यं ग्रहणं तेन हि लाभः समर्घः[7] स्यात् ॥ ३० ॥
एवं लवणस्नेहौ गन्धद्रव्यादि दुर्लभं यत्तु।
कर्तव्यं प्रच्छन्नं धारणमेतस्य कृत्याय ॥ ३१ ॥
मूलकपालङ्क्यादेर्दमनकवार्ताकसूरणादीनाम्[8]।

विविधाङ्गरागसमुज्ज्वलं वास इत्याभिगमिको वेषः।" इति सूत्रप्रयुक्ताभिगमिकशब्दस्यैवार्थेऽयं वैहारिकशब्दः प्रयुक्तो ग्रन्थकृता--विहारः नायकाभिगमनं प्रयोजनमस्येत्यर्थात्। एतत्सर्वं भर्तुश्चेतः प्रमोदाय विधेयम्। अन्यथा प्रजनाऽप्रवृत्तिर्दोषः। 'भर्तर्यरोचमाने तु प्रजनं न प्रवर्तते।' इति मनुवचनात्।

१ विहारो यात्राक्रीडाप्रयोगस्तत्प्रयोजने।

२ 'मुक्तपट्टवस्त्राढ्या' 'ग०। 'वस्त्रपटाद्या' आ० पु०।

३ "··· परिमितमाभरणं ··· शुक्लान्यानि कुसुमानीति वैहारिको वेषः।" इति सूत्रात् 'मितभूषासितकुसुमा' इति पाठ उचितः।

४ '-व्या' ग०।

५ नायको यद् व्रतोपवासादि कुर्यात्, नायिकापि तमनुवर्तमाना तत् कुर्यात्। नायकश्चेत्तां तथा कुर्वाणाम्। 'मैवं करणेन कष्टे निधेह्यात्मानम्' इति वारयेत्, तर्हि 'नाहमत्र निर्बन्धनीया' इत्युक्त्वा प्रणामाद्यैर्नायकः प्रतिषेद्धव्यः। भक्त्यतिशयसूचनार्थमिदम्।

६ 'कृत्तिजानि- चर्ममयानि। ७ 'समार्घः' आ० पु०।

८ '-शूरणा-' आ० पु० ग०। 'पालक्यादे' ख। 'वृन्ताक' ख०।

बीजग्रहणं काले काले वापश्च कर्तव्यः ॥ ३२ ॥
स्वव्यवहृतेः परेभ्यो नाख्यानं नापि[1] भर्तृमन्त्रस्य ।
कुर्याद्न्यस्त्र्यवधिक[2]मतिशयमात्मीयमानादेः ॥ ३३ ॥
आयं[3]व्ययप्रगणनाम[4]पि कुर्यात् पक्षमासवर्षादेः[5] ।
भुक्ता[6]वशिष्टगोरसगुडतैलात् सारमादद्यात् ॥ ३४ ॥
कार्पाससूत्रकर्तनमारचयेद्[7]ात्मनो( ना )ऽथवा परतः ।
संग्रहणं शिक्यादे[8]रवेक्षणं कण्डनादीनाम्[9] ॥ ३५ ॥

---

१ 'न चापि' ग०। 'न वापि' आ० पु० अत्र पाठद्वयेऽपि एकाक्षराधिक्यं छन्दोभङ्गावहम्।

२ '-दन्यास्त्वधिक-' अ० पु०। 'स्त्र्यधिक' ख०। ३ 'आयं' ग०।

४ ''प्रगणनमपि' इति पाठः सर्वपुस्तकेषु। स च छन्दोऽननुकूलः। '—भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया' इति ( व्यासस्मृ० २। २९ ) इति वचनात्।

५ 'सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात्' इति सूत्रम्।

६ 'भोजनावशिष्टाद्गोरसाद्घृतकरणं तथा गुडतैलयोः ( करणमिक्षुकाण्डसर्षपपीडनात् ) इति सूत्रम्। 'भोजनावशिष्टाद् गोरसात्सारग्रहणं तथा गुडतैलयोः।' इति तत्रत्यं पाठान्तरम्। इदमेव ग्रन्थकृताऽनुसृतम्।

७ '-येत्स्वा स्वतोऽथ वा' आ० पु०। 'कार्पाससूत्रकर्तनं स्त्रीणामधिकारप्राप्तं कर्तव्यमस्ति। येन पालितेन स्वकुटुम्बोपयोगीनि शुद्धस्वच्छानि वस्त्राणि अल्पव्ययेन साधु निष्पद्यन्ते, शरीरारोग्यस्थैर्योपयुक्तो व्यायामश्च सिध्यति परमज्ञानालस्याद्यभिभूता अद्यतन्यो भारतमहिला निजं कर्तव्यमिदमेकान्तेन त्यक्तवत्य इति महदिदं दुःखस्थानम्।

८ आदिना रज्जुपाशवल्कलानि सूत्रोक्तानि ग्राह्याणि। तत्र शिक्यस्य 'छिक्का' इति भाषायां प्रसिद्धस्य भाण्डारोपणार्थम्, रज्ज्वा कूपात् जलोद्धरणार्थम्, पाशस्य पशुबन्धनार्थम्, वल्कलस्य च रज्ज्वादिनिर्माणार्थं सङ्ग्रहणम्।

९ 'कुट्टनकण्डनावेक्षणम्' इति सूत्रम्। तत्र कुट्टनं धान्यानाम्, कण्डनं तण्डुलानाम्।

उपयोजनं[1] विरचयेत्तुषकणतुच्छान्यवस्तुजातस्य ।
वेतनभरण[2]ज्ञानं भृत्यानां साधु कर्तव्यम् ॥ ३६ ॥
कृषिपाशुपाल्यचिन्ता पोषण[3]चिन्ता तथोचिता कार्या ।
सति संभवेऽप्यवेक्षणमाधेयं मेष[4]मुख्यानाम् ॥ ३७ ॥
पिण्डीकरणं[5] विद्याद्दैवसिकस्य व्ययस्य चार्वङ्गी ।
जीर्णानां वस्त्राणां रक्षा वन्द्यादिदानाय ॥ ३८ ॥
आसव[6]कुम्भीप्रभृतेः स्थापनमुचितं तु शूद्रभार्यायाः ।

---

१ 'आचाममण्डतुषकणकुट्यङ्गाराणामुपयोजनम् ।' इति सूत्रम् । "आचामस्य मण्डस्य च पानार्थं चेटिकादिषूपयोजनम् । तुषाणां रन्धनलेपनादिषु । कणानां क्षुद्रतण्डुलानां कुक्कुटादिषु । कुटीनां तण्डुलपरागाणां गोमेषादिषु । अङ्गाराणां महानसादुत्पन्नानां लोहभाण्डकरणादिषु ।" ( ज० मं० ) अत्र (तुषाद्युपयोगकरणे) दशकुमारचरितस्य षष्ठोच्छ्वासे वर्णितो गोमिनीवृत्तान्त उदाहरणतया द्रष्टव्यः ।

२ 'चेतनमरण' ख० ।

३ 'पेषण–' ग० आ० पु० ख० ।

४ "मेषकुक्कुटलावकशुकसारिकापरभृतमयूरवानरमृगाणामवेक्षणम् ।"इतिसूत्रम् । '–माधेये दोषमुख्यानाम्' ख० ।

५ 'पिण्डीशाकं बिम्बं दैवसिकस्य चार्वङ्गी' ख० ।

६ "सुराकुम्भीनामासवकुम्भीनां च स्थापनं तदुपयोगः क्रयविक्रयाऽऽयव्ययावेक्षणम् ।" इति सूत्रे सामान्यतो निर्देशः । सुरासवकुम्भीस्थापनं शूद्रभार्यायाः कृत्यम् ।

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तया काये विनिर्दग्धे मुच्यते किल्बिषात्ततः ॥
सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्मात् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

( मनुस्मृ० ११ । ९०, ९३ ) इति त्रैवर्णिकानां सुरापाननिषेधात् । क्रयविक्र-

क्रयविक्रयाद्यवेक्षणमुक्तं सर्वासु नारीषु ॥ ३९ ॥
स्रक्चन्दनादिपूजा कर्तव्या कान्तमित्रवर्गस्य ।
परिचर्या[2] च विधेया नायकपित्रोः प्रयत्नेन ॥ ४० ॥
[3]तत्परतन्त्रीभावो नोत्तरदानं तथा समारचयेत् ।
आलापं रचयेदिह[4] परिमितमेवाऽप्रचण्डश्च ॥ ४१ ॥
नोच्चैर्हासः कार्यः[5] स्वसखीवर्गेऽपि भावशालिन्या ।
स्वस्यं[6] हिताहित[7]कल्पं जानीयान्नायकस्यैतत्[8] ॥ ४२ ॥

---

याद्यवेक्षणं च सर्वस्त्रीणां कृत्यम्—इति व्यवस्थापयति । एतद्विषयं विशदं विवेचनं तु मिताक्षरादौ द्रष्टव्यम्—विस्तरभयान्नेह प्रपञ्च्यते ।

---

१ क्रयविक्रयावेक्षणमायव्ययावेक्षणं च । समर्घतायां क्रयः महर्घतायां च विक्रयः, आयापेक्षया व्ययो नाधिको भवेदिति च सावधानतयाऽवेक्षणं स्त्रियाः कर्तव्यम् ।

२ सेवा ।

३ तयोर्नायकपित्रोः ।

४ इह—नायकपित्रोः पुरतः ।

५ 'कार्यश्च सखी-' ग० ।

६ 'स्वस्व' आ० पु० ।

७ 'हितोहित-' ग० ।

८ एतत्—हिताहितं नायकस्य स्वहिताहितसदृशं बुध्येत । 'तत्प्रियाप्रियेषु 'स्वप्रियाप्रियेष्विव वृत्तिः ।' इति सूत्रस्थेन तच्छब्देन ग्रन्थकृत् ( अव्यवहितपूर्वमनुक्तस्यापि ) नायकस्य परामर्शं कृतवान् । वस्तुतस्तु श्वश्रूश्वशुरयोः ( नायकपित्रोः ) एव परामर्शो युक्तः तयोरव्यवहितपूर्वमुक्तत्वात् , तच्छब्दस्य च पूर्वोक्तपरामर्शकत्वात् । अत एव जयमङ्गलाकारोऽपि "तत्प्रियाप्रियेष्विति तयोरिष्टानिष्टेषु स्वप्रियाप्रियेष्विव वृत्तिर्यथात्मनः प्रियाप्रियौ भवतः । इति व्याख्याने तच्छब्देन श्वश्रूश्वशुरयोरेव परामर्शं कृतवान् ।

नोत्सेकः[1] स्याद् भोगे दाक्षिण्यं परिजने सदा कार्यम्[2] ।

---

१ 'नात्यच्च' ख० ।

२ एतदेव कविकुलगुरुणा शाकुन्तले कण्वद्वारा शकुन्तलोपदेशावसरे उक्तम्—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ॥
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ इति ।

एवमन्यत्रापि—

भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः
प्रीतिर्यातृषु गौरवं गुरुजने क्षान्तिः कृतागस्यपि ।
अम्लानः कुलयोषितां व्रतविधिः सोऽयं विधेयः पुन-
र्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ इति ।

उल्लिखितविनीतदक्षिणाचार एव हि कुलवधूनां भूषा तेनैव च ताः—

स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टा यैषां भव ॥ ( स्योना = सुखकरी । ) इति—
( अथर्ववेद १४।२।२७ ) श्रुत्यनुसारं सर्वेषां सुखकरत्वं यान्ति । सोऽयमर्थो विविध-भङ्गीतरङ्गिताभिः सूक्तिभिः समुद्गीतः कविपुङ्गवैः । यथा—

हसितमदृष्टदन्तं भ्रमितमनिष्क्रान्तदेहलीदेशम्
दृष्टमनुपलक्षितमुखमेष मार्गः कुलवधूनाम् ॥
( गाथासप्तशत्याम् ६ श० । २५ श्लो० ) इति ।

संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम्
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि ।
हास्यं चाधरपल्लवावधि पदन्यासावधि प्रेक्षितम्
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥ इति ।

मितभाषा विदग्धा च सलज्जा न च निष्ठुरा ।

दानं पृष्ट्वा कार्यं नायकमपि बन्धुवर्गेषु[1] ॥ ४३ ॥
नैपुण्यं रचनीयं योगे सांयोगिके तथा बहुधा।
कर्तव्यश्च[2] नियोगः कर्मण्युचिते सुहृत्प्रभृतेः ॥ ४४ ॥
उत्सवसमये पूज्याः सुहृदस्तद्वच्च परिजनप्रभृतिः।
इति वृत्तं निर्णीतं प्रभुणा पतिदेवतानां हि ॥ ४५ ॥
भर्तुः प्रवासकाले केवलमङ्गल्यभूषणा[3] भूयात्।
देवोपवासनिरता विद्याद्वार्तां[4] सदैवाऽस्य ॥ ४६ ॥
शय्यां गुरुजनसन्निधे निजभवनावेक्षणं यता[5] रचयेत्।
कार्येषु प्रतिपत्तिः स्यादनुमत्या गुरूणां हि ॥ ४७ ॥
कान्तेनाभिमतानां स्यादर्जनमत्र चार्थजातानाम्।
प्रतिसंस्कारः[6] कार्यः पूर्वचितस्यार्थजातस्य ॥ ४८ ॥
उचितो व्ययो विधेयः कर्मण्युचिते शुभाननया।

---

कुलशीलगुणोपेता गुरूणां शासने रता।
धैर्यगाम्भीर्यसम्पन्ना उत्तमा प्रकृतिर्मता ॥

( २४।१०९-१० ) इति भरतोक्तिरुल्लिखिताचारवती एव नायिका उत्तमप्रकृतिस्तद्विपरीता तु अधमेति बोध्यम्।

---

१ 'भर्तुराज्ञां विना नैव स्वबन्धुभ्यो दिशेद्धनम्।' इति स्मरणात्।
२ 'कर्तव्यं च' ग०। कर्तुं वाविनि' ख०।
३ 'माङ्गल्य' आ० पु०।
४ 'दद्याद्' ग०। 'विन्याद्' ख०।
५ 'वेक्षणोद्यता' ख०।
६ 'इति' ख०।

तेनारब्धगृहादेः पूर्वो यत्नो विधेयश्च ॥ ४९ ॥
विनोत्सवव्यसने ज्ञातिकुले नाचरेदसौ यात्राम् ।
व्यसनादौ नायकजनसहिताया न स्थितिश्च चिरम् ॥ ५० ॥
नो परिहेयो वेषो मा(या) नेऽप्युचितः प्रवासस्य ।
उपवासादेः करणं प्राप्यानुज्ञां गुरूणां हि ॥ ५१ ॥
आप्यायनं च कुर्यात् क्रयविक्रयकर्मणामसौ सारे ।
परिचारकैस्तथाप्तैरनुगतिरस्या विधेया स्यात् ॥ ५२ ॥
शक्त्या व्य(यत)नुतायां तनुतनुरेषा चरेत् पुनर्यत्नम् ।
तादृग्वेषाऽऽत्मानं दर्शयति स्वागते काले ॥ ५३ ॥
अथ रचयेदिह पूजां यासां स्वीकार आगमायाऽस्य ।

---

१ 'पतिना' ख० ।

२ अयं पाठः छन्दोऽननुकूलः । 'व्यसनोत्सवौ विनाऽसौ ज्ञातिकुले नाऽऽचरेद् यात्राम्' इति, 'व्यसनोत्सवौ विहाय ज्ञातिकुले नाऽचरेदसौ यात्राम् ।' इति वा पाठे कृते छन्दोऽनुकूलता सम्पद्यते । 'विनोत्सवं व्यसनं वा जाति' ख० ।

३ 'दौ वा नायकसहिताया' आ० पु० । नायकजनसहिताया गमनमिति शेषः ।

४ 'स्थितिस्वचिरम्' ग० आ० पु० ।

५ पूर्वोक्तरूपेण उत्सवेऽपि ज्ञातिकुले याने गमने प्रवासोचितवेषो न परिवर्तनीयः ।

६ आप्यायनम् = अभिवर्धनम् । क्रयविक्रयकर्मणामायेनेति शेषः । सारो मूलधनम् ।

७ 'रस्यानिशं कार्या' ख० । 'रनुगमिभिरस्या विधेयान्' ग० ।

८ "परिचारकैः शुचिभिरात्माधिष्ठितैरनुमतेन क्रयविक्रयकर्मणा सारस्यापूरणं तनूकरणं च शक्त्या व्ययानाम् ।" इति सूत्रम् । 'शिक्यायणुतायां तु शुभतनु' ख० ।

९ नायके प्रवासात् प्रत्यागते प्रवासवेषस्था एव आत्मानं दर्शयेत् स्वरूपख्यापनार्थम् न पुनरागत इत्यात्मानं प्रसाधयेत् ।

१० 'पूजां' आ० पु० । ११ 'आगतायाऽस्य' ग० ।

परितोषयेत् स्वकान्तं रचितैरुचितोपचारैश्च ॥ ५४ ॥
इत्थं प्रवासचर्या वर्या[1] रचयेदिहैव नारीणाम् ।
विस्तारो न विरचितो धर्मे वात्स्यायनानुसृते[2](तेः) ॥ ५५ ॥
या सद्वृत्तौ कुरुते यत्नं हिततत्परा स्वकान्तस्य ।
कुलयोषाऽप्यपुनर्भूर्वेश्या वाऽप्येकनारी तु[3] ॥ ५६ ॥
पुरुषार्थत्रयलाभस्तस्याः स्यात् स्थानलाभ[4]शालिन्याः ।
भर्ता रमते—(सुभगां) प्रतिपत्नीनां न खेदेन[5] ॥ ५७ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
भार्याधिकारिकेऽस्मिन्नाद्योऽध्यायः कृतः साङ्गः ॥ ५८ ॥



१ 'चयाचर्या' ख० ।

२ वात्स्यायनानुसृते नारीणां धर्मे इति सम्बन्धः । 'वात्स्यायनानुसृतेः ।' इति पाठः साधीयान् । विस्तारो न विरचितः इत्यत्र हेतुरुक्तो भवति वात्स्यायनानुसृतेः इति ।

३ 'तु' आ० पु० ।

४ स्थानं = प्रतिष्ठा ।

५ धर्ममर्थं तथा कामं लभन्ते स्थानमेव च ।
निःसपत्नं च भर्तारं नार्यः सद्वृत्तमाश्रिताः ॥ इति सूत्रम् । 'भर्तरि मानश्चास्याः प्रतिपत्नीनां विशेषेण' ख० ।

# अथ द्वितीयोऽध्यायः ।

भार्याधिकारिकेऽस्मिन्नध्यायस्य[1] द्वितीयताभाजः ।
अद्वयदोर्द्वयशाली रुचिरोद्द्योतं समातनुते ॥ १ ॥
वैदग्ध्यस्य ख्यापनमथ भक्तेः शीलनं सदा[2] रचयेत् ।
आदित एव सपत्नीपरिहारेच्छा यदा प्रबला ॥ २ ॥
[3]अधिवेदने निमित्तं जाड्यं दुःशीलता प्रजानुदयः ।
नैयमिकः स्त्रीप्रसवो दौर्भाग्यं नायकश्चपलः ॥ ३ ॥
[4]पुत्रार्थिनी तु भर्तुः परिणयमेषा स्वयं समारचयेत् ।
अधिकत्वं तद[5]वधिकं स्वस्मिन् कुर्याद् यथाशक्ति ॥ ४ ॥

---

१ 'ये स्य' आ० पु० ।

२ 'समारचयेत्' आ० पु० ।

३ सत्यां भार्यायामन्यो विवाहोऽधिवेदनम् । मनुरप्यत्राह--

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥
वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्री जननी सद्यस्त्वप्रियवादिनी ॥
या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥ (मनुस्मृ० ९।८०-८२) ।

४ सपत्नीपुत्रेणापि तस्याः पुत्रवतीत्वात् । यथोक्तम्-

सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ इति ।

५ सपत्न्या अपेक्षया इत्यर्थः ।

भगिनीमिव तां पश्येद्रचयेत् प्रादोषिकं तथा च[1] विधिम्[2]।
तस्या नायकविहितं सातिशयं यत्नमास्थाय[3] ॥ ५ ॥
सौभाग्योत्थं वैकृतमुत्सेकं वा न चाद्रियेताऽस्याः[4]।
रचयेदपि चोपेक्षां भर्तरि जातप्रमादायाः ॥ ६ ॥
स्वयमस्या इह बोधो भूयादिति मन्यते चार्थे[5]।
तत्रादरतः शिक्षां दद्यान्ननु दुष्प्रमेयेऽपि[6] ॥ ७ ॥
रहसि विशेषानधिकान् पतिसंश्रय(व)णे[7] प्रकाशयेद्यत्नात्।
तदपत्येष्वविशेषः परिजनवर्गे[8]ऽनुकम्पा च ॥ ८ ॥
तस्यामित्रे प्रीतिस्तज्ज्ञातिषु चातिसंभ्रमः कार्यः।

---

१ 'तु' आ० पु०।

२ प्रादोषिकं विधिम्=सायन्तनं प्रसाधनादिसंस्कारम्।

३ 'यन्मयेच्छाया' ख०। अयं श्लोकः ख० पुस्तके' श्लोकानन्तरं पठ्यते।

४ 'न सा' ख०।

५ 'मन्यते तु यत्रार्थे' इति पाठ उचितः।

६ यस्य प्रमादस्य विषये स्वयमेवेयमिमं प्रमादं भोत्स्यते, सावधाना च भविष्यतीति मन्यते तत्रैनां स्नेहख्यापनार्थमादरतोऽनुशिष्यात् पुनर्मैवाकार्षीरिति। 'न तु दुष्प्रमेये' ख०।

७ 'नायकसंश्रवे' इति सूत्रम्। 'पतिसंश्रयणे' इति पाठे पत्युपसेवनमधिकृत्येत्यर्थः। 'पतिसंश्रवणे' इति पाठे च पत्युः श्रुतिगोचरे सति, पतिर्यथा तांस्तान् विशेषान् दर्शयन्तीं शृणुयात्तथेत्यर्थः। एतेनाऽस्यां अकपटभावः स्नेहश्च सूचितो भवति तेन च सपत्नीनायकावुभावप्यस्यां स्निह्यतः।

८ सपत्न्याः परिजनवर्गे।

आत्मज्ञातिषु रचयेन्नात्यादरमावृता नम्रा ॥ ९ ॥
बह्वीभिर्यदि भूयादधिविन्ना या भवेत्स्वतो[3] निकटे ।
प्रीतिं तया विदध्यान्नेतस्यां (स्या) पद्मपत्राक्षी ॥ १० ॥
[5]अधिकं(कां) चिकीर्षति पतिर्यां तां संयोज्य चान्यया कलहे ।
स्वीयानुकम्पयाऽनु[6] च गृह्णीयात् कान्ततोषाय ॥ ११ ॥
ताभिर्ननु बह्वीभिर्या स्यादेका चिकीर्षिताऽभ्यधिका ।
दुर्जनतामिह गमयेत्स्वयमाविरता विवादे तु ॥ १२ ॥
कुर्वाणां पतिकलहं कृत्वाऽसौ पक्षपातमेनां तु ।
आश्वासयेत्सुचतुरा हृदयादुपबृंहितां कृत्वा ॥ १३ ॥

---

१ वचनीयतापरिहारार्थम् ।

२ 'आदृता' आ० पु० । 'आदृताजस्रम्' ख० । आवृता गुप्ता, सापत्नजं स्वचेतोवैकृतमप्रकाशयन्तीत्यर्थः ।

३ या स्वतो निकटवर्तिनी अव्यवहिता कनीयसी भवेत्तया संसृज्येत विदितशालित्वात् ।

४ 'नान्यस्याः' ख० ।

५ "यां तु नायकोऽधिकां चिकीर्षेत्तां भूतपूर्वसुभगया प्रोत्साह्य कलहयेत्, ततश्चानुकम्पेत ।" इति सूत्रम् । त्तरकालमनुकम्पेत 'तत इत्यु कलहितां प्रच्छन्नं समावासयेत् कलहवर्धनाय' ( ज० मं० )।

६ '–ऽनुकम्पयति च' आ० पु० । 'न स्वीयानुकम्पयतु च' क० । 'अनु च गृह्णीयात्' इति उपसर्गस्य धातोः पृथक् प्रयोगः । 'ते प्राग्धातोः' 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इति शासनानादरमूलकः । 'ननु गृह्णीयात्' इति ख० पुस्तकपाठस्तु निर्दोषः ।

७ 'न तु' ग० ।

८ 'कुर्वाणा' ग० ।  ९ दापितप्रत्युत्तरामित्यर्थः ।

सम्वर्धयेच्च कलहं[1] कलहंसगतिः सं दृश्यते मन्दः ।
यदि संधुक्षणनिरता तत्रोपायानसौ रचयेत ॥ १४ ॥
सन्तोषयेत्स्वयमिमामपि च पतिं स्वीयसौभगेच्छा चेत्[2] ।
इत्थं ज्येष्ठावृत्तं ज्येष्ठा वनिता समातनुयात् ॥ १५ ॥
ज्येष्ठायां तु कनिष्ठा वृत्तिं रचयेदसौ सदा मातुः ।
लब्धं स्वज्ञातिभ्यस्तामुक्त्वैवोपयुञ्जीत ॥ १६ ॥
कुर्वीत नात्मवृत्तं काले ज्येष्ठानधिष्ठितं यत्तु[3] ।
पतिमधिशयीत तस्याः प्राप्यानुज्ञां सदैवैतत्[4] ॥ १७ ॥
अस्या वचनं कथयेन्नान्यस्या[5] बालकान् पुनस्तस्याः[6] ।
स्वेभ्योऽधिकान् हि पश्येदिह(द्रह) उपचारः पतेरधिकः[7][8] ॥ १८ ॥

---

१ कलहः । 'सुदृश्यतो भेदः' ख० ।

२ 'मपि दयितं' ख० । 'यदि नायकोऽस्यामद्यापि सानुनय इति मन्येत तदा-स्वयमेव संधौ प्रयतेत' । इति सूत्रम् । 'यद्ययमेकान्तेनास्यां निरनुनयस्तदा तिष्ठत्व-स्मद्विधैव मैनामवमन्यध्वमिति प्रसादयेत्' ( ज० मं० ) ।

३ 'वस्तु' ख० । 'आत्मवृत्तान्तांश्च तदधिष्ठितान् कुर्यात् ।' इति सूत्रम् ।

४ 'सदैव तथा' ख० ।

५ कलहपरिहारार्थम् ।

६ 'पुरस्त' आ० पु० ।

७ छन्दोभङ्गभयान्न संधिः कृतः । इह रहसि पत्युरधिकमुपचारं कुर्यात् येनाय-मस्यामन्याभ्योऽधिकमनुरज्येत । 'पश्येद्रह उपचारः' इति पाठ उचितः ।

८ पतेरिति प्रयोगः 'पतिः समास एव घिसंज्ञः' इत्यनुशासनविरुद्धः प्रमाद-प्रयुक्तः । 'उपचारोऽधिकः पत्युः ' इति पाठ उचितः । अयं श्लोकः ख० पुस्तके त्रुटितः ।

पतिपुरतो नाख्यातं (नं) प्रतिपत्नीजातवेदनाभूम्नः ।
मानं लिप्सेद् गूढं पत्युर्वैशेषिकं सुभगा ॥ १९ ॥
पथ्यं[1]मनेन मदीयं जीवनमपि चेति निर्दिशेद् यत्नात् ।
नाचक्षीत बहिस्तद् बाला श्लाघानुरागाभ्याम् ॥ २० ॥
भिन्नरहस्या भर्तुर्लभतेऽवज्ञां मनोऽनुरूपापि ।
गोनर्दीयो भीत्या[3] गूढां मानार्थितामाह ॥ २१ ॥
अनुकम्पेत ज्येष्ठामनपत्या दुर्भगामसौ बहुधा ।
अनुकम्पयेच्च[4] पत्या[5] वृत्तमिदं स्यात् कनिष्ठायाः ॥ २२ ॥
या त्विन्द्रियदौर्बल्याद्विधवा भोगेच्छया[6] नारी ।
हित्वा[7] वा पर्याप्तं भोगे पतिमन्यमाप्नोति ॥ २३ ॥

---

१ जीवनयात्रानिर्वृत्तये शम्बलभूतम् ।

२ 'रचितं बहुधैव' ख० ।

३ ज्येष्ठाभयेन । 'गोनर्दीयः कथयति भीत्या गूढापमाना स्यात्' ख० । 'ज्येष्ठाभयाच्च निगूढसंमानार्थिनी स्यादिति गोनर्दीयः' इति सूत्रम् ।

४ 'अनुकम्पयेत' ख० । स्वसाधुत्वख्यापनार्थम् ।

५ इतः परम् 'प्रसह्य त्वेनामेकचारिणीवृत्तमनुतिष्ठेत्' एनां ज्येष्ठाम् इति सूत्रांशो नानूदितो ग्रंथकृता ।

६ 'च्छया तु या नारी' क० ग० ख० । 'च्छया तु नारी' आ० पु० । एतत्पाठद्वयमपि छन्दोऽननुकूलम् ।

७ पूर्वपतिमिति शेषः । पूर्वपतिमृतौ सुखदानाक्षमतया मनोऽननुकूलं पूर्वपतिं त्यक्त्वा वा या भोगिनं गुणसंपन्नमन्यं पतिमाप्नोति सा पुनर्भूः कथितेत्यर्थः । यथाह वसिष्ठः—“ या च क्लीबं पतितमुन्मत्तं वा भर्तारमुत्सृज्यान्यं पतिं विन्दते मृते वा सा पुनर्भूर्भवति । ” ( वसिष्ठ स्मृ० १७ अ० ) ।

कथितेयं हि पुनर्भूः सा तु प्रागेव चानु(रु)संविच्या (संचिन्त्य)।
गुणिनं भोगासक्तं चित्तानुगुणं शुभाप्नोति ॥ २४ ॥
अविचार्य ग्रहणे खलु भूयः स्यादन्यकाङ्क्षया तरला।
नाप्नोति तु सुखमपि सा तस्मादुचितो विचारोऽस्याः ॥ २५ ॥
स्वीकुरुते वा कामं निष्क्रमणेच्छामसौ समासाद्य।
स्यादन्यथाऽगुणस्य हि संयोगो[1] दुःखहेतुः[2] सः ॥ २६ ॥
आत्मानुसारतः[3] सा नायकतः साधु कर्म लिप्सेत।
आपानकोत्सवादि हि[4] यच्च सहिष्णुत्वमायाति[5] ॥ २७ ॥
बिभृयाच्चालङ्कारं स्वीयं वा तस्य वाऽनवद्याङ्गी।
वात्स्यायनानुमत्याऽनियमः[6] स्यात् प्रीतिदायेषु[7] ॥ २८ ॥
निर्गच्छन्ती स्वयमियमर्पितममुना समर्प्य चास्मै हि।

---

१ 'संयोगे' आ० पु०।

२ 'हेतुस्सरः' आ० पु०। 'हेतुपरः' क०।

३ "सौख्यार्थिनी सा किलान्यं पुनर्विन्देत। गुणेषु सोपभोगेषु सुखसाकल्यं तस्मात्ततो विशेष" इति गोनर्दीयः। (निर्गुणभोगिनो गुणवान् भोगी सुखसाकल्यदानेन विशिष्यत इति भावः) आत्मनश्चित्तानुकूल्यादिति वात्स्यायनः। (सत्यपि गुणवति भोगिनि चित्तं चेन्नानुकूलं तथापि न सुखसाकल्यमिति चित्तानुकूल्यमेव स्त्रियाः सुखसाकल्यासौ हेतुः। चित्तानुकूले हि गुणहीनेऽपि स्थैर्यमासादयन्ति स्त्रियः।

४ 'ह' ग०।

५ " सा बान्धवैर्नायकादापानकोद्यानश्रद्धादानमित्रपूजनादि व्ययसहिष्णुकर्म लिप्सेत।" इति सूत्रम्।

६ अलङ्कारधारणं प्रतीति शेषः। ७ प्रीत्या दत्तेषु पारितोषिकरूपेष्वित्यर्थः।

८ स्वेच्छया न तु नायकदोषोद्विग्नमानसा नायकेन निष्कास्यमाना वेत्यर्थः।

प्रीत्या लब्धाद् भिन्नं निखिलं यातीति सिद्धान्तः ॥ २९ ॥
याति गृहीत्वा सर्वं भर्त्रा निष्कास्यमानतायां[1] तु
प्रभविष्णुमि(रि)व च सदनं तस्यागमने[2] समागच्छेत् ॥ ३० ॥
प्रेष्येव[3] कुलसपत्नीपुरतो वृत्तं सदा तनुयात् ।
सर्वत्र सपरिहासा परिजनवर्गेषु दाक्षिण्यम्[4] ॥ ३१ ॥
मित्रेषु प्रतिपत्तिः कौशलमधिकं कलासु बोध्यं च[5] ।
कलहेषूपालम्भं[6] रचयेदेषा स्वयं भर्तुः ॥ ३२ ॥
उपकुर्यान्मृदु रहसि[7] प्रतिपत्नीनां प्रयत्नतो ह्येषा ।

---

१ 'निष्कास्यमाना तु' क० ।

२ भर्त्रा निष्कास्यमाना स्त्री सर्वं सारद्रव्यं गृहीत्वा गच्छतीति हेतोः तस्या गमनसमये नायकः प्रभविष्णुरिव गृहगतं सर्वं वस्तुजातं पश्येत् इत्यर्थः । 'तस्याऽगमने' इति पाठे तु अगमने सति=गमनस्यासंभवे=नायकेन निष्कास्यमानाया अन्यत्र गमनं चेन्न संभवति तर्हि प्रभविष्णुरिव=स्वामिनीव नायकस्य गृहं समागच्छेदित्यर्थो बोध्यः ।

३ 'प्रीत्या' इति सूत्रे 'प्रेष्यवत् इति तत्रैव पाठान्तरम्' । पुनर्भूः धर्मोढासु कथं वर्तेतेत्याह—प्रेष्ये वेत्यादिना ।

४–'ण्यात्' ग०

५ 'कलासु कौशलमधिकस्य च ज्ञानम् ।' इति सूत्रम् । 'आधिकस्य नायकाविदितस्य ज्ञानं दर्शयितव्यम् ।' ज० मं०)

६ 'उचितच्छेदः स्वैरिणीसंसर्गो द्विरात्रागमनं वासकान्निष्क्रमणं चेत्यस्याः कलहस्थानानि' ( ज० मं० )

७ 'रहसि च कलया चतुःषष्ठ्याऽनुवर्तते' (नायकम्) सपत्नीनां च स्वयमुपकुर्यात् । इति सूत्रम् ।

८ 'ह्येषां' ग० आ०पु० । 'प्रतिपत्नीं यत्नतो ह्येषा' ख० ।

स्वामिनामिव तदपत्यं सेवेतासौ विना कपटम् ॥ ३३ ॥
मण्डनकादि च तेषां कुर्वीतासौ समादरे निरता।
मित्रे परिजनवर्गे रचयेद्विस्रम्भणादीनि[1] ॥ ३४ ॥
अक्षापानकयात्रोद्यानविहारादिशीलता[2] चाऽस्याः।
इति वर्तेत पुनर्भूर्वृत्तं शास्त्रानुसारेण ॥ ३५ ॥
या[3] स्याद्भर्तुः प्रीता तामुपचरतीह दुर्भगा नारी।
आश्रयमस्या रचयेन्नैपुण्यं व्यञ्जयेत् स्वस्य ॥ ३६ ॥
चारु कलासु[4] तदीयान् धात्रीरूपाऽनुपालयेत्पुत्रान्।
उप[5]गृह्य तस्य मित्रं तद्भक्तिं व्यञ्जयेत्तेन ॥ ३७ ॥

---

१ विस्रम्भणम्=विश्वासः। सूत्रे तु 'विश्राणनम् ( दानम् )' इति पाठोऽपि।

२ आ० पु० क० ग० पुस्तकेषु 'आपानकयात्रोद्यानविहारादिशीलता चास्याः' इति पाठोऽस्ति स च न छन्दोऽनुकूलः। 'समाजापानकोद्यानयात्राविहारशीलता च' ( समाजो गोष्ठी ) इति सूत्रानुसारं छन्दोऽनुकूलतासंपत्तये 'गोष्ठ्यापानक' इत्येवं पाठः कल्पनीयः।

३ बह्वीनां भार्याणां काचिद्दुर्भगाऽपि सम्भवति तया 'दौर्भाग्यं हि जीवन्मरणमेवाङ्गनानाम्' विशेषतश्च कुलवधूनाम् ( दशकुमारचरिते ) इति विभावयन्त्या भर्तुः प्रेमाधिगमाय कथं वर्तितव्यमिति दुर्भगावृत्तमाह 'या स्याद्भर्तुः प्रीता' इत्यादिना। प्रीता=प्रीतिपात्रम्। प्रीतं ( नपुंसके भावे क्तः ) प्रीतिः विद्यते यस्यां सा प्रीता ( अर्शआदेराकृतिगणत्वादच् )

४ कलासु स्वीयं नैपुण्यं चारु व्यञ्जयेत् इति-सम्बन्धः। 'चारु कलासु' इत्यादि पद्यं ग० पुस्तके त्रुटितमस्ति।

५ तस्य नायकस्य मित्रं ( प्रियहिताभ्याम् ) उपगृह्य=आवर्ज्य तद्भक्तिम्=तस्मिन्नायके आत्मनो भक्तिं तेन मित्रेण व्यञ्जयेत्।

कार्येषु धर्मशालिषु भूयादेषा पुनः पुरश्चरणा[1] ।
तद्व्रत[2]निरता भूयादुपवासे तस्य शसक्ता च ॥ ३८ ॥
परिजनवर्गे रचयेद्दाक्षिण्यं दक्षिणा समाचरितम् ।
नैवाधिक्यं[3] मन्येतात्मनि सौन्दर्ययुक्तापि ॥ ३९ ॥
नोपालभेत[4] शयने रागप्रत्यायनार्थं[5] सात्म्येन ।
तस्य त[6]मिह[7] न ख्यापनमुचितं स्याद्वामभावस्य ॥ ४० ॥
कलहं[8] यया रचितवान् साऽस्मै स्यात् प्रापणीयाऽस्याः ।
वाञ्छितया[9] घटयेत्तं प्रच्छन्नं मर्मबोधा स्यात् (बोधोऽस्य)४१॥
तन्न प्रकाशयेदपि यत्नं विदधीत नायकप्रेम्णि ।
इति वृत्तं रचयन्ती[10] सौभाग्यं प्राप्नुयात् कुभगा[11] ॥ ४२ ॥

---

१ अग्रगामिनी, प्रारम्भिका ।

२ 'तद्रत' ग० ।

३ 'दक्षिणं तमाचरितुम्' ख० पुस्तकातिरिक्तपुस्तकेषु । आधिक्यं सपत्नीभ्यः परिजनेभ्यश्च ।

४ 'उपालभते' ग० आ० पु० ।

५ 'प्रत्यानयनाय' इति सूत्रे ।

६ शयने तस्य सात्म्येन ( आनुकूल्येन ) रागप्रत्यायनाय तं नोपालभेतेति लम्बन्धः क्लिष्टः ।

७ इह शयने ( सुरते ) 'तस्य मुहुरख्यापनमुचितं' ख० ।

८ 'कलहं यया रचितया सान्त्वैः संप्रापणीयाऽस्य' ख० ।

९ 'वाञ्चितया' आ० पु० ।

१० 'वृत्तेन चरन्ती' ख० ग० ।

११ 'सुभगा' आ० पु० ।

[1]बह्वीनां पतिरेता विषमतया नावलोकयेज्जातु।
नावज्ञां च विरचये(त्तासु विनाधिं?)[2]न्नाऽशुचितादिं सहेताऽऽसाम्
एकस्यां या क्रीडा या च रतिर्वैकृतं तथा चाऽङ्गात्[3]।
विश्वासोपालम्भो नैतेऽन्यस्यै प्रकाश्या हि[4] ॥ ४४ ॥
प्रसरं न वा प्रदद्यात् स्त्रीणां प्रतिनायिकाहेतोः[5]।
तां[6] चोपालभमानां दोषैस्तामेव योजयेन्निपुणः ॥ ४५ ॥
काश्चिन्मानैर्विपुलैर्विस्रम्भै[7] रहसि वा परां वनिताम्।
प्रत्यक्षपूजनैरपि काश्चित् संरञ्जयेन्निपुणः ॥ ४६ ॥
गमनैरुद्यानादिषु भोगैर्दानैः[8] प्रपूजनैर्ज्ञातेः ॥

---

१ यद्यपि सूत्रे दुर्भगावृत्तानन्तरम् 'आन्तःपुरिकम्' अनन्तरं च 'पुरुषस्य बह्वीषु प्रतिपत्तिः' अवोचि, तथापि सामान्यप्रकरणानुसारं सामान्य( जानपद )नायकविषयिणीं 'पुरुषस्य बह्वीषु प्रतिपत्तिम्' एव पूर्वमाह—बह्वीनां पतिरित्यादिना। इतोऽनन्तरं च विशिष्ट(राजन्यक)नायकविषयम् 'आन्तःपुरिकम्' वक्ष्यति अन्तःपुरस्य वृत्तिः ( ४९ श्लो० ) इत्यादिना। 'पतिरेकां' ख०।

२ अशुचितादिदोषमिति शेषः। 'नापि विवादं' ख०। 'नावज्ञां च चरेदासु व्यलीकान्न सहेत च। ' ( व्यलीकान् अपराधान् ) इति सूत्रम्।

३ अङ्गाद् वैकृतम् शरीरजं विकारं नखक्षतादिकम्।

४ इतरस्त्रीणां वैराग्येर्ष्यादिहेतुत्वात्। 'विश्वासोपालम्भौ' ख०।

५ 'धन' ख०। कलहपरिहारार्थम्।

६ ताम्=प्रतिनायिकाम्। 'तीव्रोपालभमानां दोषैः संयोजयेदसौ निपुणः' ख०।

७ 'किञ्चिन्मा' आ० पु०। 'कञ्चिन्मा' ग०।

८ 'भोगदानैः' आ० पु० ग०।

प्रीत्या चैव रहस्यैः सर्वा अनुरञ्जयेद् युवतीः[1] ॥ ४७ ॥
विजितक्रोधा रमणी तिष्ठन्ती शास्त्रदृष्टमार्गेण ।
अधिष्ठति च सपत्नीर्भर्तारं वश्यतां नयति ॥ ४८ ॥
[2]अन्तःपुरस्य वृत्तिर्लक्ष्यैतेष्वेव तु [3]प्रकारेषु ।
रात्रौ निवेदयेयुर्माल्याद्यं[4] [5]कञ्चुकी(कि)प्रमुखाः ॥ ४९ ॥
आदाय ? तद्धि राजा निर्माल्यं प्रातरासु संदध्या( द्या)त्[6] ।
सालङ्कारः सायं सर्वाः पश्येत् स्वलङ्कृता यत्र[7] ॥ ५० ॥
तासु कथाः परिहासैः[8]सरसाः परिशीलयेदसौ सरसाः(सः) ।

---

१ मनस्विनीं विपुलैर्मानैः, लज्जावतीं रहसि विस्रम्भैः ( विश्वासैः ), सपत्नीषु पंक्तिमिच्छन्तीं प्रत्यक्षपूजनैः, विहारशीलामुद्यानादिगमनैः, परिभोगलालसां भोगैः, ज्ञातिषु कर्तव्यबुद्धिशालिनीं तज्ज्ञातिप्रपूजनैः, रतिप्रियां च रहस्यैः ( रहसि भवैः केलि-विशेषैः ) प्रीत्या चेत्येवं यथार्हं यथाप्रकृति च सर्वाः युवतीः अनुरञ्जयेदिति पुरुषस्य बह्वीषु प्रतिपत्तिः ।

२ अतःपुरस्य=( तात्स्थ्ये लक्षणया ) अन्तःपुरस्थस्त्रीवर्गस्य वृत्तिः । एतेषु पूर्वोक्तेषु 'एकचारिणी' ज्येष्ठाकनिष्ठादिवृत्तेष्वेव लक्षणीया । तत्राप्येकचारिणीज्येष्ठादीनां सत्त्वादिति तद्वृत्तं पृथङ्नोक्तम् । राज्ञा तु अन्तःपुरेः कथं वर्तितव्यमित्युच्यते रात्रौ निवेदयेयुरित्यादिना ।

३ 'वर्गेषु' आ० पु० । 'लक्ष्यैतेष्वेव वर्गेषु' ग० । 'अन्तपुरस्य वृत्तिर्नोल्लङ्घ्यैवं चतुर्षु वर्णेषु' ख० । 'प्रकरणेषु' क० सूत्रे च । 'प्रकारेषु' इति क० सूत्रे पाठान्तरं च ।

४ आद्यशब्देन अनुलेपनवासांसि ।

५ 'कञ्चुकीया महत्तरिका वा' इति सूत्रम् ।

६ 'तदादाय राजा निर्माल्यमासां प्रतिप्राभृतकं दद्यात् । ' इति सूत्रम् ।

७ 'स्वलङ्कृतास्तत्र' इति पाठ उचितः ।

८ 'हासं–संशील' ख० ।

योग्यत्वाद्यनुसारि च मानस्थानादि निर्वर्त्यम्[2] ॥ ५१ ॥
पुनर्भुवस्[3]ततोऽनु च तदनु च पण्याङ्गनास्तथाऽन्तरिकाः[4]।
आसां पश्चाद्भावः कीर्तित इह नाटकीयानाम्[5] ॥ ५२ ॥
स्थानान्[6]यासां पृथगिह विज्ञेयान्युक्तकक्षया तानि ।
योग्यतया च विधेयास्तासां मानानुवृत्तयश्[7]चापि ॥ ५३ ॥
शयनोत्थितस्य[8] दिवसे भर्तुः प्रहितं तु वासकेशायाः ।
अनुलेपनादिमुचितं तत्पाली[9] वेदयेत्[10]तस्याः ॥ ५४ ॥

---

१ 'वास' ख० ।

२ इदं परिणीतासु वृत्तमुक्तम् ।

३ अत्र छन्दोभङ्गः । 'तदनु च पुनर्भुवः स्युस्तदनु च पण्याङ्गनास्तथाऽऽन्तरिकाः।'' इति पाठः छन्दोऽनुकूलः ।

४ 'तथा नटिकाः' आ० पु० ख० । 'नरिकाः' ग० ।

५ नाटकहितानां स्त्रीणाम् ।

६ मध्ये देवीनां स्थानम् । ततो बहिःकक्षायां पुनर्भुवाम् । ततो बहिर्वेश्यानाम् । ततो बहिर्नाटकीयानाम् ।

७ 'वृत्तीश्च' आ० पु० क० ग० ।

८ शयनोत्थितस्य वासे सर्वैः प्रहितं सुवासकैर्यस्याः ।

अनुलेपनादिरुचितं तस्या आली निवेदयेत्तस्मै ॥ ख० । वासकस्वामिन्याः, यस्या वेश्मनि राज्ञा वारक्रमानुसारं रात्रौ वासो विधेयस्तस्याः । 'वासकेशान्या' आ० पु० । वासकाः षड् भवन्ति यदाह भरतः ( २२ । १९५ )—

परिपाट्या फलार्थे वा नवप्रसव एव च ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥ इति ।

९ वासकपाली=राज्ञे वासकनिवेदनाधिकृता ।

१० निवेदयेत् ।

कथयेत्तदनु (च) वासकमेषा प(पु)रतोऽस्य (वैरिजेशान्याऽ:)[1] ।
हित्वा वासकयुक्तां[2] मान्यां युञ्जीत भोगेन ॥ ५५ ॥
युगपत्सर्वाभिश्चेत् प्रहितं कुसुमादि वासकेशाभिः[3] ।
यस्याः परिगृह्णीयाज्जानीयाद् वासकं तस्याः ॥ ५६ ॥
उत्सववेलायामिह सर्वासामानुरूप्यतः पूजा ।
आपानकं च देयं धर्मोऽसौ भूरिभार्यस्य ॥ ५७ ॥
निष्कासो[4] बहिरुचितः कासांचिन्नृत्यदर्शने स्त्रीणाम् ।
नहि कुलयुवतियोग्या संगीतादौ भवेत् क्वापि ॥ ५८ ॥
बाह्या न च प्रवेश्या अन्तःपुरके कदाप्यविज्ञाताः ।
धर्मेष्ववधृतशौचाः संयोज्या योग्यतां ज्ञात्वा ॥ ५९ ॥
बहीषु प्रातिपत्तेरान्तःपुरिकेषु न क्रमो मौलः ।
आदृत इत्युपयोगाद्विस्रम्भाद्योगतः[5] प्रमितः ॥ ६० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
भार्याधिकारिकेऽस्मिंश्चरमोऽध्यायः कृतः साङ्गः ॥ ६१ ॥



---

१ 'वासकेशायाः' इति स्यात् । 'सुरतोत्सवोचितं सोऽस्याः' । ख० ।

२ 'युक्तो' ख० ।

३ 'वासकं ताभिः' ख० ।

४ 'निष्कामो' ख० । अवराणां वेश्याप्रभृतीनाम् ।

५ 'इहोपयोगश्च नमस्याद्ये यतः प्रमितः' आ० पु० क० ग० ।

# अथ पारदारिकं नाम पञ्चममधिकरणम् ।

## प्रथमोऽध्यायः ।



### व्याख्येये पतितत्वादनुचितमपि पारदारिकं लिखाति ।

---

१ पारदारिकाधिकरणं नामत एवानुचितम् , न तु वस्तुतोऽपि । यतो ऽत्र पुरुषैः परस्त्रियः स्त्रीभिश्च परपुरुषान् कामयितुं प्रयुज्यमानास्तास्ताः कपटकलाः सम्यगादर्श्य स्वप्रमदाः औपपत्यप्रमादप्रभवकलङ्ककालिम्नाऽस्पृष्टा रक्षितुमेवोपदेशः कृतः । न ह्यवामहृदयो जनो वामानां वामाचारापिशुनतत्तदिङ्गिताकारव्यवहारादिज्ञानविकलोऽनवगतकुलटाकपटपाटवप्रयोगः कुट्टनीकूटवागुरादितः स्त्रियं त्रातुं प्रभवति । नापि अविदितधूर्तजनप्रयुज्यमानवञ्चनारीतिः अविज्ञातकुट्टनीक्रियमाणमुग्धवधूप्रलोभनप्रतारणप्रयोगपरिपाटी साध्वी स्वं पातिव्रत्यरत्नं गोपायितुमलम् । एतदधिकरणपरिशीलनावगततत्तन्मायाप्रयोगप्रपञ्चास्तु नराः स्वप्रमदाः नार्यश्च स्वचारित्रं रक्षितुं सम्यक् प्रौढा भवन्तीति नितरामुपकारीदं मधिकरणम् । न ह्यनेनाधिकरणेन परदारगमनमुपादिश्यते, किन्तु सर्वाभिलषितस्वदाररक्षोपदेश एवैतदधिकरणारम्भस्योद्देशः । यदाह सूत्रकारः स्वयमेव—

संदृश्य शास्त्रतो योगान् पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित् स्वदारान् प्रति शास्त्रवित् ॥
पाक्षिकत्वात् प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाऽऽचरेत् पारिदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ इति ।

अतः पर्यवसानमुद्रया यथार्थत इदं "स्वदाररक्षाधिकरणम्" इत्येवाभिधातुमुचितम् ।

गोपाङ्गनासु[1] निरतं पावनचरितं[2] हरिं कलयन् ॥ १ ॥

---

१ भगवतो महायोगेश्वरस्य श्रीकृष्णस्य गोपाङ्गनासु निरतिर्न लौकिककाममूलिका किन्तु गोपीहृदयप्रतिष्ठविशुद्धभक्तिप्राबल्यप्रभवाकर्षणमूलिकैव । एवं रासलीला न कामलीला, किन्तु भक्तिलीलैव । भगवत्पतञ्जलिप्रणीतस्य योगदर्शनस्य सर्वाङ्गसम्पन्नं क्रमबद्धमुदाहरणं रासलीलामपहाय नाऽन्यत्रोपलब्धुं शक्यते । यत्तु लोकसुखाववबोधाय समाधिसमधिगम्यं भगवद्भक्तितत्त्वं–

समाधिभाषा प्रथमा लौकिकीति तथा परा ।
तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता ॥ इति—

पुराणसंहितोक्तशास्त्रभाषात्रयान्तर्गतलौकिकभाषया प्रतिपादयतो भागवतपुराणदशमस्कन्धान्तर्गतरासपञ्चाध्यायीप्रकरणस्य आध्यात्मिकं तत्त्वमनवबुध्यमानैः संकुचितदृग्भिः स्थूलदर्शिभिः तत्प्रकरणगतानि कानिचित् 'निशम्य गीतं तदनङ्गवर्धनम्' 'वीक्ष्य रन्तुं मनश्चक्रे' 'अरीरमत्' इत्यादीनि लौकिकभाषया प्रयुक्तानि वाच्यानि पदानि च दृष्ट्वा 'अश्लीलमिदम्, व्यभिचारप्रचारकमिदम्, प्रक्षिप्तमिदम्, भागवतपुराणात् निष्कासनीयमिदम् रासलीलाप्रकरणम्' इत्येवं महान् कोलाहल उद्भाव्यते, स तेषामज्ञताया एवापराधः न तु शास्त्रस्य ( रासपञ्चाध्यायीप्रकरणस्य )। 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति । (निरुक्ते १)। हन्त विज्ञम्मन्यानां यया बुद्ध्या–

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ इत्यादौ–

'अरीरमत्' इत्यादिशब्देषु अविद्यमानोऽपि ( 'रमुक्रीडायाम्' इति धातोर्निष्पन्नस्य 'अरीरमत्' इत्यस्य प्रकृते रासक्रीडामात्रपरत्वात् ) व्यभिचारगन्ध आघ्रायते, सा--श्रीकृष्णस्य निर्लिप्ततां स्वरूपावस्थितिं च प्रतिपादयतां 'योगेश्वरेश्वरः' 'आत्मारामः' इत्यादिविशेषणपदानां—

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याण्यः ! प्रजानाञ्चाऽनुपोषणम् ॥
दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।

पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥
अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्।
जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥
श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात्।
न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥

इत्यादेः लौकिककामसम्बन्धास्पृष्टविशुद्धभक्तिदार्ढ्यजिज्ञासया स्वयं भगवता गोपीः प्रति कीर्तितस्य स्पष्टं सदाचारादर्शस्य उपदेशस्य च दर्शनावसरे अन्धं तमः प्रविशति किम्? न हि गोप्यः श्रीकृष्णं लौकिककामुकभावेन पश्यन्ति स्म, किन्तु परमात्मभावेनैव। एतच्च उल्लिखितभगवदुक्तिप्रत्युत्तररूपया गोपीनाम्—

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम्।
अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्!
नित्यप्रिये पतिसुतादिभिरार्तिदैः किम्।
तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या
आशाभृतां त्वयि चिरादरविन्दनेत्र! ॥

इत्युक्त्या प्रसिद्धगोपीगीतान्तर्गतया—

न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥

इत्युक्त्या च स्पष्टमवसीयते। एतेन (गोपीनां भगवन्तमाभिस्नेहातिशयेन) भक्तिशास्त्रप्रसिद्धः कान्तासक्तिनामा कश्चिद् भक्तिभेद एव आदर्शित इत्याद्यत्र बोध्यम्, अप्रसक्तविस्तरभयात्तु नाधिकं प्रतन्यत इति दिक्। यद्यपि उपक्रमदृष्ट्या कान्तभावेनैव गोपीनां भगवदुपगमनम्, तथापि साक्षाद्भगवदवतारे श्रीकृष्णे सा तासामासक्तिः पराभक्तिरूपेणैव पर्यणंसीदिति उपक्रमोपसंहारादिरीत्या सकलार्थविलोडनेन प्रतीयत इति वाक्यतत्त्वविदां मतम्।

२ 'यावच्चरितम्' ग०।

पञ्चममथाधिकरणं प्रथितं किल पारदारिकं नाम्ना ।
वात्स्यायनस्य वीरो व्याख्यातुं यत्नमाधत्ते ॥ २ ॥
अध्यायाः षडिहोक्ताः शीलावस्थापनं भवेद् यूनोः ।
व्यावर्तनस्य हेतुः सिद्धाः पुरुषाश्च नारीषु ॥ ३ ॥
साध्या योषिदयत्नात् प्रथमाध्यायार्थसंग्रहः[1] कथितः ।
परिचयहेत्वभियोगाचर्यायुक्तौ[2] द्वितीयस्य ॥ ४ ॥
भावपरीक्षा दूतीकर्माण्यासां न कामितं[3] रक्षा ।
एते क्रमिका अर्था शेषाध्यायेषु संप्रोक्ताः ॥ ५ ॥
संगृह्येत्थमिहार्थानधिकरणे पञ्चमे कृती[4] सुकृती ।
तस्य प्रथमाध्याये व्याख्यानं यत्नतस्तनुते ॥ ६ ॥
व्याख्यातकारणां[5] ये विदधति परदारसंगमाकाङ्क्षाम् ।

---

१ 'संग्रहाः कथिताः' ग० ।

२ 'युक्तैर्द्वि—' ग० ।

३ '-सामकामिता' ख० । 'कार्याणां मानकामितं' ग० । सूत्रे तु 'ईश्वरकामितम्' इत्यस्ति ।

'—दूतीकर्माणीशस्य कामितं-' इति पाठे कल्पिते तु सूत्रानुसारित्वं संपद्यते ।

४ इदं ख पुस्तके नास्ति ।

५ 'कारण' ख० ग० । परदाराभिगमे कारणानि पूर्वं (१ । ५) नायिकासमुद्देशे उक्तानि । तत्रापि "यदा तु स्थानात् स्थानान्तरं कामं प्रतिपद्यमानं पश्येत्तदात्मशरीरोपघातत्राणार्थं परपरिग्रहानभ्युपगच्छेत् ।" इति सूत्रोक्तेः सकलकारणशिरोमणिरात्मरक्षैव । यदाह रतिरहस्यकृत्—

नयनप्रीतिः प्रथमं चितासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥

उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः।
तास्वारोहति मदने यायात्परयोषितं स्वरक्षायै॥
पुनर्दाराः पुनर्वित्तं पुनः क्षेत्रं पुन सुतः।
पुनः श्रेयस्करं कर्म न शरीरं पुनः पुनः॥ इति।
एवं रतिकल्लोलिन्यां सामराजदीक्षितोऽपि–
नवानङ्गदशाक्रान्तो दशमीं याति मानवः।
तस्माच्छरीररक्षायै नरो यातु पराङ्गनाम्॥ इति।
गाढं क्षते मनसि च प्रसभं रिरंसोर्जायेत चोत्कटतमो मनसो विकारः।

इति ( २०।१४ ) माधवनिदाने उन्मादनिदानप्रकरणे ) माधवोक्तेर्दृढासक्तमनसो रिरंसोर्जनस्य अभीष्टतमासंगमालाभेन मनसि गाढं क्षते उन्मादः प्रादुर्भवति तेन मूर्छा, मरणं च सम्भवतीति तादृशविकटसमस्योपास्थितौ आपद्धर्ममनुसरता शरीररक्षायै परपरिग्रहोऽवगन्तव्यः। शरीररक्षायै एव महर्षिभिरापद्धर्म्माः स्मृता अनुसृताश्च। 'शरीरमाद्यं खलु धर्मसाधनम्' (कुमारसम्भवे) अत एव भेलसंहितायाम्–

प्राणैषणा स्यात् प्रथमा द्वितीया तु धनैषणा।
धर्मैषणा तृतीया तु पुरुषस्य भवत्यथ॥
तत्र प्राणैषणा पूर्वं समारभ्येत मानवैः।
धर्मार्थकामप्राप्तिर्हि सद्भिः प्राणैर्निगद्यते॥

इत्यनेन प्राणैषणाया एव प्राधान्यं व्यवस्थापितमिति बोध्यम्। अपि चैतदपि रागादिप्रवाहपतितकामाक्रान्तजनस्वभाविकस्थितिमनुरुध्यैव शास्त्रेणानुज्ञामात्रं प्रकाश्यते न त्वपूर्वतयोपक्रान्तमिति न विस्मरणीयम्।

इत्थं च परदाराभिगमपरिहार एव शास्त्रस्य मुख्यं तात्पर्यम्। एतच्च—

पाक्षिकत्वात् प्रयोगाणामपायानाञ्च दर्शनात्।
धर्मार्थयोश्च वैलोम्यान्नाऽऽचरेत् पारदारिकम्॥

इति सूत्रकारवचनेन स्पष्टम्। रतिकल्लोलिन्यामप्युक्तम्––

लङ्केशवालिकीचकचरितान्याकर्ण्य धीरधीर्मनुजः।
चेतः पराङ्गनानां गमने तस्मान्न विदधीत॥ इति।

तैरादितः परीक्षा कार्यान्तेऽसम्भव[1]स्तस्याः ॥ ७ ॥
साध्यत्वासाध्य[2]तयोरायतिगम्यत्वयोर्वि[3]भागेन ।
वृत्तेनाप्यपरीक्ष्य[4]ं(क्ष्य च)भूयाद्राचितो न सौख्याय ॥ ८ ॥
त्यक्त्वा[5] मया मदीयैरेषा[6] सङ्गत्य वैरिभिः[7] कामात् ।
रचयेन्ममोपघातं[8] त्रात्याऽ(वैरा)दिति तत्समातनुयात् ॥ ९ ॥
इत्याद्याः परदारान् कामयितुः कारणे स्फुटं बोध्याः ।
दशधा कामावस्था निर्दिष्टाः कामशास्त्रेषु ॥ १० ॥
[9]चक्षुःप्रीतिः सङ्गो मनसः सङ्कल्प( सुप्ति )विच्छेदौ ।

---

मनुरप्याह--

न हीदृशमनायुष्यं त्रिषु लोकेषु किञ्चन ।
यादृशं पुरुषस्येह परदारोपसर्पणम् ॥ इति ।

---

१ 'संभवात्तस्याः । ख० ग०

२ 'साध्यत्वानत्यययो' आ० पु० क० । 'नन्वययो' ग० ।

३ 'विमार्गे च' आ०पु० क० ।

४ 'परीक्षन्' आ० पु० क० ग० ।

५ 'त्यक्तं' ग० ।

६ 'मदीये चरेषा' ग० ।

७ 'निःकामात् ' ग० ।

८ 'ममोपधानं' ग० । 'ममोपघातानिति हेतोस्तं' ख० ।

९ मनोऽभिरामां स्त्रियं दृष्टवतः पुरुषस्य संयोगेच्छालक्षणे कामे समुत्पन्ने तस्यां चक्षुःप्रीतिः ( स्निग्धदृक्त्वलक्षणा ) भवति । ततस्तदप्राप्तौ मनस्तत्र सक्तं भवति । तथासति 'कथमहमेनामधिगमिष्यामि, एतत्प्राप्तये कस्य साहाय्यं कश्च प्रयोग उचितः, प्राप्य चैनामेवं प्रवर्तिष्ये, एवं रञ्जयिष्यामि, स्वयं चैवमानन्दोत्सवाननुभविष्यामि-

तनुताविषयत्यागौ लज्जानाशस्तथोन्मादः ॥ ११ ॥
मूर्छामरणे तासां लिङ्गान्युक्तानि कामशास्त्रेषु।
तत्र[1] युवत्याः शीलं सत्यं साध्यत्वशौचानि ॥ १२ ॥
विरहं च साध्यताया वेगे मृदुतां तथा च चण्डत्वम्[2]।
आकृतिवैधर्म्याभ्यां[3] लक्ष्याण्याचक्षते केचित् ॥ १३ ॥
आकृतिलक्षणयोगौ व्यभिचरतः सत्यशीलशौचादि( दौ )।
आकारेङ्गितयोरिह लिङ्गत्वं स्यात् प्रवृत्तेश्च[4] ॥ १४ ॥
वात्स्यायनस्य मत्या दोषोऽयं पूर्वसम्मतेऽभिहितः।
श्रीवीरभद्रयूना दृष्टाखिलकामशास्त्रेण ॥ १५ ॥

---

इत्येवंविधा अनन्ताः सङ्कल्पास्तन्मनसि उदयन्ते। इत्थं सङ्कल्पयतश्च सुप्ति( निद्रा )-च्छेदो जायते। ततो निद्रामलभमानस्य शरीरं कृशतामेति। ततः सर्वथा तद्गतचित्तस्य विषयेभ्यो व्यावृत्तिः। ततस्तल्लाभैकलक्ष्यस्य लज्जा नश्यति ( निर्लज्जश्च गुरुभ्योऽपि न बिभेति )। एवं विप्रणष्टलज्जाभयस्य तद्गतचिन्तया घूर्णितमस्तिष्कस्य उन्मादः प्रवर्तते। ततोऽस्वास्थ्यसंज्ञिका मूर्छा प्रभवति। एवं क्षणे मूर्छां प्राप्नुवतो नितान्तनिःसहस्याऽल्पप्राणस्य मरणं भवतीति क्रमिकाणि तासां कामावस्थानां लिङ्गानि तत्कार्यत्वात्।

---

१ रागवशादभिगमनेऽवश्यकर्तव्यतयाऽऽपतिते।

२ 'दण्डत्वम्' आ० पु०।

३ आकृतिराकारः देहभवस्वेदरोमाञ्चादिः। वैधर्म्यम् शीलसत्यसाध्यत्वासाध्यत्वादिषु परीक्षितायाः कस्या अपि स्त्रिया अपेक्षया प्रयोज्याया विरुद्धधर्मवत्त्वम्। 'आकृतिलक्षणयोगैर्लक्ष्याण्या' इति पाठकल्पने तु स्पष्टं सूत्रानुसारित्वम् संपद्यते। 'तत्राकृतितो लक्षणतश्च युवत्योः शीलं' इति सूत्रम्।

४ तत्रेङ्गिताकारौ कन्यासंप्रयुक्तके तृतीयाध्याये वर्णितौ। प्रवृत्तिश्च अस्यैवाधिकरणस्य तृतीयाध्याये वक्ष्यति।

परदाराणां ग्रहणे व्याख्यायन्ते न हेतवस्त्वत्र ।
मूलानु[1]सारतस्ते व्याख्याताः पूर्व[2]मेवेह ॥ १६ ॥
पुत्रस्तु गोणिकायाः प्राह निदानं प्रवृत्तिसम्बन्धि ।
उज्ज्वलपुरुषनिरीक्षणमम्बुजमुख्यास्तथा पुंसः ॥ १७ ॥
तादृशरमणीदृष्टौ[3] कामः संजायते स्फुटस्तस्याम् ।
तस्मात् प्रवृत्तिहेतुर्नापेक्षे[4]त्येतदायातम् ॥ १८ ॥
नापेक्षन्ते[5] धर्मं नार्यो नाधर्ममुल्लसत्कामाः ।
नापेक्षया पर[6]स्य च रचयन्त्यभियोगमेणाक्ष्यः ॥ १९ ॥
[7]व्यावर्तते चिकीर्षाशालिन्यपि पुंसि साभियोगे तु ।

---

१ 'नुरोधतस्ते' ग० ।

२ प्रथमाधिकरणस्य पञ्चमाध्याये नायिकाविमर्शे ।

३ 'दृष्टा' आ० पु० । 'दर्शात्' ख० ।

४ 'नापर इत्येतदासिद्धम्' ख० । उज्ज्वलपुरुषकामित्वमेव हेतुः स्त्रीपुंसयोः प्रवृत्तौ न तु कार्यापेक्षित्वमित्यर्थः । 'अपेक्षया तु न प्रवर्तते' इति सूत्रम् । जयमङ्गलाकारसम्मतस्तु 'अवेक्षया तु प्रवर्तते' इत्येव सूत्रपाठः प्रतिभाति 'अपेक्षया तु कस्यचित्कार्यस्य प्रवर्तते द्वावपि संप्रयुज्येते । तदुभयोरपि उज्ज्वलकामित्वं कार्यापेक्षित्वं च शीलम् । " ( ज० मं० ) इति तद्व्याख्यानात् ।

५ उज्ज्वलकामित्वरूपेणोभयोस्तुल्यशीलत्वेऽपि प्रत्येकं विशेषमाह नापेक्षन्त इत्यादिना ।

६ कार्यस्य । 'कार्यापेक्षया तु नाभियुङ्क्ते ( आत्मनि दोषदर्शनात् ) ' इति सूत्रम् ।

७ 'आकृतिचिकीर्षशालिन्यपि पुंसि साभियोगे तु । ' आ० पु० । 'स्वभावाच्च पुरुषेणाभियुज्यमाना चिकीर्षन्त्यपि व्यावर्तते पुनः पुनरभियुक्ता सिध्यति । ' इति सूत्रम् ।

एष स्वभावभेदः प्रायो वामो[1]ऽभिरामाणाम् ॥ २० ॥

[2]अभियुक्ता(क्तो)पि न सिध्यति ता[3]दृग्बुद्धिः कदाचनेहै[4]षा(षः) ।

निष्कारणमभियुङ्क्ते हरिणदृशं वल्लभः क्वापि ॥ २१ ॥

अभियुज्याप्यभियोगं क्वचन पुनर्वर्जयत्यसौ चतुरः ।

गच्छति मध्यस्थ[5]त्वं सिद्धायां क्वापि बालायाम् ॥ २२ ॥

अवमन्यते च सुलभां दुर्वित्तऽ(ध)ला[6]भां समीहते बहुधा ।

इति शीलावस्थापनमुक्तं यूनोर्विविच्येह ॥ २३ ॥

[7]उत्कटरागः पत्याऽपेक्षा[8]ऽपत्यस्य निर्ग[9]मो वयसः ।

दुःखे[10]नं चाभिभवनं विरहाभा[11]वैः प्रियेणाथ ॥ २४ ॥

---

१ 'वामो हि' ख० ।

२ स्त्रीणां विशेषमुक्त्वाऽधुना पुरुषाणामाह–'अभियुक्त' इत्यादिना । इतः पूर्ववर्ती 'पुरुषस्तु धर्मस्थितिमार्यसमयं चापेक्ष्य कामयमानोऽपि व्यावर्तते' इति सूत्रांशो नानूदितो ग्रन्थकृता । 'तथाबुद्धिश्चाभियुज्यमानोऽपि न सिध्यति' इति सूत्रात् 'आभियुक्तोऽपि–कदाचनेहैषः ।' इति पुँल्लिङ्गघटितः पाठ एवोचितः ।

३ 'यादृग्' ग० ।

४ '–हैसा' आ० पु० ग० ।

५ औदासीन्यम्–अभियुङ्क्ते न च सम्प्रयुज्यत इत्येवं रूपम् ।

६ दुर्लभाम् ।

७ इदानीं स्त्रीणां व्यभिचारं प्रति निवृत्तेः कारणान्याह–उत्कटराग–इत्यादिना ।

८ स्तनन्धयं ममापत्यमिति मया त्यज्यमानं कथं जीवेदित्यपत्यापेक्षा ।

९ 'निर्गामः' ग० । वयसो निर्गमः परिणतवयस्त्वम् । परिणतवया हि बलात्परपुरुषाणामङ्गार्पणेन लज्जत इति ।

१० इष्टजनमरणदुःखेन दुःखिता हि जातपरपुरुषसंप्रयोगेच्छापि व्यावर्तते ।

११ '—भावात्' ग० ।

उपमन्त्रितास्म्यवज्ञापूर्वमिति[1] क्रुद्धता प( ऽऽय )तेर्विरहः।
गन्तेति[2] कामाविरतिर्विरहादुक्ता प्रतर्क्यन्ते( त्वे[3] )॥ २५॥
ईर्ष्याऽन्यस्यां श( स )क्तया स्यादुद्वेगो ह्यसंवृताकारात्[4]।
मित्रे निसृष्टभावस्तस्मिन्नित्युद्गतो( ता )पेक्षा[5]॥ २६॥
तेजस्वीति[6] च साध्वसमुक्ता शङ्काभियोगतः शुष्कात्[7]।
मृग्या[8] भयं च मत्वा[9] वेगं चण्डं तथा चैव॥ २७॥

---

१ 'उपयन्तृता शमवता' ख०। उपमन्त्रिता=अभियुक्ता।

२ अन्यत्र गन्तेति ( न चिरमनेन संप्रयोग इति ) आयतेरुत्तरकालसुखस्य अभावं तर्कयित्वा।

३ –'दन्ये प्रतर्क्यन्ते' ख०। प्रतर्क्यत्वे विरहात्=अप्रतर्क्यत्वात् ( दुर्ग्राह्यचित्तत्वात् ) कामविरतिः=तद्विषयसंकल्पवर्जनम्।

४ आकारसंवरणमकुर्वताऽनेनाहं लोके वचनीया ज्ञातिभिरुज्झिता च भविष्यामीत्युद्वेगः।

५ 'मित्रेषु निसृष्टभाव इति तेष्वपेक्षा' इति सूत्रम्। अयं मित्राणां वश्यः इति तैर्यदुच्यते तत्करोतीति तेष्वस्यापेक्षा मयि चावज्ञेति। 'उपेक्षा' इति पाठे तु–अयं मित्रवशवर्ती न मां गणयतीति हेतोस्तस्मिन्नायके तस्या उपेक्षाबुद्धिरुद्गता भवति ( तया च व्यावर्तते ) इत्यर्थः। यद्वा 'सुहृदर्पितभावोऽयं स्वसुहृत्पत्नीं मां नेच्छतीत्युपेक्षा।

६ अयं तेजस्वी प्रमादाज्जातं मदपराधं लेशमात्रमपि न सहिष्यत इति भयम्।

७ शुष्काभियोग्ययं निष्कारणमनादरेण मामभियुङ्क्ते इति शङ्का।

८ मृग्याः मन्दवेगायाः चण्डवेगादश्वाद् भयम्।

९ 'महा' आ० पु०।

[1]कुशलः कलासु वृत्त्या नगरे व्रीडे[2]निपाततः सखिपु[3](तौ)
यदि वा कथिताऽसूया काले देशेऽनभिज्ञत्वात्[4] ॥ २८ ॥
ख्यातः परिभवहेतुर्मत्या[5,6] एवं क्षतिः प्रचुरमानस्य[6]।
नाकारितेऽपि बोधोऽवज्ञानं स्यादतस्तस्मिन् ॥ २९ ॥
एष शशो वेगेऽस्य च मन्दीभावोऽस्ति हस्तिनी चाहम्[8] ॥
मत्तो[9] मा भूदपकृतिरित्यनुकम्पा न (च) जायते तस्मिन् ॥३०॥
आत्मनि दोषनिरीक्षणजन्मा निर्वेद उच्यते सद्भिः।

---

१ नगरे वृत्त्या ( नागरत्वेन ) कलाविदग्धेनानेन संप्रयोगे इयं रतौ अकुशला–'इति वदिष्यतीति व्रीडे ( लज्जायां ) निपातात्। पुँल्लिङ्गोऽपि व्रीडशब्दो घञन्तः। 'व्रीडमावहति मे' इति रघौ, 'व्रीडादिवाभ्याशगतैः' इति माघे, 'व्रीडमेष्यति परं मयि दृष्टे' इति नैषधे च प्रयोगदर्शनात्।

२ '—तिपा–' आ० पु०।

३ सखिता मित्रत्वम्। मित्रत्वेन मयाऽयमुपचरितस्तत्कथं पुनरनेनैवं कुर्यामिति लज्जया, अयमेव वा मित्रत्वेन मया न सम्प्रयोक्ष्यत इति विचारेण वा।

४ अदेशकालज्ञेनानेन देशकालोचितं किं प्रयोक्ष्यत इत्यसूया।

५ 'हेतुर्मत्वा' आ० पु० ग०।

६ अयं पाठः छन्दोभङ्गावहः। 'परिभवस्थानामित्यबहुमानः' इति सूत्रम्। नीचत्वात् परिभवस्थानम्। अनेन सङ्गतां मां नीचसङ्गतेयमिति सखीजनोऽन्यो वा मां परिभविष्यतीति।

७ आकारितोऽपि ( आकारेणेङ्गितेन च आभिप्रायं बोधितोऽपि ) नायं बुध्यत इति अविदग्धोऽयमित्यवज्ञा।

८ इदं चण्डवेगाया मन्दवेगे नायके व्यावृत्तिकारणम्।

९ अस्य मदर्थं यतमानस्य माऽभूत् शरीरतोऽर्थतो वा हानिरिति नायकेऽनुकम्पा।

भयमसतीत्वख्यात्या स्वजनबहिष्कारतो भवति ॥ ३१ ॥
[1]पलितत्वादादरतो हानिः पत्या प्रयुक्ततामेत्य ।
कुर्यादेष परीक्षां भवति विमर्शो ममेत्यस्याः[2] ॥ ३२ ॥
धर्मापेक्षा चैषा (काचित्) निवर्तते[3] निभृतात् पुनर्मार्गात् ।
आदित एव विधेयो वेधः (बोधः) सम्भाविते हेतौ[4] ॥ ३३ ॥

---

१ 'पलित इत्यनादरः' इति सूत्रम् । 'पत्नीष्वित्यादरतो हानिः पत्न्या' ख० ।

२ किं पतिव्रता न वेति ज्ञातुं मम पत्या प्रयुक्त एष मम परीक्षां कुर्यादित्यस्या विमर्शो भवति ।

३ अत्र छन्दोभङ्गः । 'निवर्तते निभृततो मार्गात् ।' इति । 'मार्गतो निभृतात् ।' इति वा पाठः छन्दोऽनुकूलः । निभृतात् गुप्तात् मार्गात् व्यभिचाररूपात् । 'धर्मापेता चैषा निवर्तते निर्भितात् पुनर्मार्गात्' ख० ।

४ 'तेषु यदात्मनि लक्षयेत्तदादित एव परिच्छिन्द्यात् ।' इति सूत्रम् । आत्मनि सम्भावितस्य प्रयोज्याया व्यावर्तनकारणस्य आदित एव वारणं कुर्यात् (येन सा न व्यावर्तेत प्रत्युत उपावर्तेत)। नायके विद्यमानानां व्यावर्तनकारणानां निवर्तनोपायानाह रागस्य वर्धनादित्यादिना । 'रागां प्रवर्धनादि च दूरीकुर्यादिहार्थितायुक्तान् ।'ख०। तत्र पत्यावनुरागः, अपत्यापेक्षा, अतिक्रान्तवयस्त्वम् , दुःखाभिभवः धर्मापेक्षा चेत्येते स्त्रीगता आर्थतायुक्ता व्यावर्तनहेतवः रागवर्धनेन वार्याः । पत्या विरहानुपलम्भः, आत्मनि दोषज्ञानान्निर्वेदः, अप्रतर्क्य इति कामविरतिः, नागरिकः कलासु कुशल इति सखित्वेनोपचरित इति च व्रीडा, पत्या प्रयुक्तः परीक्षित इति विमर्शः—इत्येतानि आत्मगतानि बहुमानकृतानि विरक्तिकारणानि अतिपरिचयेन निवर्तयेत् । अतिपरिचये कृते तस्या मानो विगलिष्यतीति । शुष्काभियोगी, अदेशकालज्ञः, परिभवस्थानम् , आकारितोऽपि नावबुध्यते, पलितः इत्यात्मगतानि नायिकापरिभवकृतानि अतिशौण्डीयप्रदर्शनेन शास्त्रकलावैचक्षण्यप्रकाशनेन च दूरीकुर्यात् । अवज्ञयोपमन्त्र्यते, असंवृताकारः, मित्रेषु निसृष्टभावः—इत्यात्मगतानि नायिकापरिभवजानि

रागस्य वर्धनादिह दूरीकुर्यादिहार्यतायुक्तान्।
संदर्शनादुपायें[1]ऽशक्तिभवान् वारयेदेतान्॥ ३४॥
आश्वासनाद् भययुतांस्तत्परिभवे[2]संभवान् पुनः प्रणतेः।
अन्यानपि परिपन्थिभिरुत्सार्यानाहुराचार्याः॥ ३५॥
वैचक्षण्यप्रभृतिः परिपन्थी वैकृतस्य निर्दिष्टः।
बहुमानादिर्हेतुर्व्यावर्तनकारणे प्रोक्तः॥ ३६॥
[3]शीलावस्थापनतः पश्चादुक्तं हि कारणं विरतौ।
श्रीवीरभद्रयूना नूनं वात्स्यायनादत्र॥ ३७॥
[4]स्मरशास्त्रस्याभिज्ञः ख्यापनकुशलस्तथा कथायाश्च[5]।
कर्ता प्रेषणकस्य[6] च परिमितसम्भाषणश्चैव[7]॥ ३८॥
संसृष्टो बाल्यावधि यौवनवृद्ध्या तथा रुचिरः।

---

एकान्तप्रसृतया प्रणत्या आकारसंवरणादिना च प्रतिविदध्यात्। तेजस्वी, चण्डवेगः समर्थः, शशो मन्दवेगः, विदिता सती स्वजनबहिष्कृता भविष्यामीत्यात्मगतानि भययुतानि आश्वासनेन ( यथा भयं न भवति तथा प्रतिविधानेन ) छिन्द्यात् इति।

१ '—दुपायैः शक्ति–' ख०।

२ '–भवतः' ख०।

३ 'शाला–' आ० पु०।

४ एवं शीलमवधार्य आत्मनः प्रयोज्यायां सिद्धतां निश्चिनुयादन्यथाऽभियोगस्यासम्भवादिति स्त्रीषु सिद्धान् पुरुषानाह—स्मरशास्त्रस्याभिज्ञः—इत्यादिना।

५ 'कथाख्यानकुशलः' इति सूत्रम्।

६ 'प्रेक्षणः–' क० ख०। 'प्रेक्षणकारी' (र० र०) 'प्रेषणस्य कर्ता यस्या वचनकरस्तस्याः सिद्धः।' ( ज० मं० )

७ 'उचितसम्भाषणः' इति सूत्रम्। ज० मं०।

आगतविश्वासः किल लीलाकर्मादिभिश्चैव ॥ ३९ ॥
कर्ता प्रियस्य तद्वद्दूतः पूर्वं तथैव चान्यस्य[1] ।
तस्माद(स्या अ)पि मर्मज्ञः प्रोक्तमथ[?](श्रोत्तमया)प्रार्थितश्चैव॥४०॥
सख्या छन्नं सृष्टः[2] सुभगख्यातः[3] सहैव संवृद्धः ।
प्रतिवेश्यः(शी)[4] स्यात्कामी[5] तादृक्परिचारकश्चैव ॥ ४१ ॥
धात्रेयिकापरिवृढो[6] नववरकः[7] प्रेक्षणे तथा त्यागे ।
उद्यानेषु च[8] निरतो वृषः[9] इति विदितश्च लोकेषु ॥ ४२ ॥
विद्यायां प्र(याम-)तिशयितस्तथा गुणेषु रूपेषु (च) ।
[10]भर्तुर्वेषाचरणे यस्य महार्हे विनिर्दिष्टे ॥ ४३ ॥
इति सिद्धाः पुरुषाः स्युः स्त्रीषु स्मर[11]शास्त्रसंसिद्धाः ।

---

१ 'अन्यस्य भूतपूर्वो दूतः पूर्वमंस्तुतत्वादस्याः सिद्धः' ज० मं० ।

२ सखीपरिचयान्नायिकायाः सिद्धः ।

३ 'सुभगाख्यातः' ग० । सुभग इति ख्यातिं प्राप्तः ।

४ 'प्रातिवेश्यः' इति सूत्रे ।

५ कामी ।

६ 'परिमृधो-'आ० पु० । 'परिभृढो-' ग० । 'धात्रेयिकापरिग्रहः' इति सूत्रम् । 'धात्रेयिकया पतित्वेन यो गृहीतः ( स ) तत्परिचयादस्याः सिद्धः ।' ( ज० मं० ) ।

७ 'नववरक इति यस्मिन् गृहे नवो जामाता तत्रत्यासु स्त्रीषु सिद्धः ।' (ज०मं०)

८ 'च' त्रुटितः—पा० पु० । प्रेक्षणरसिकस्त्यागशील उद्यानक्रीडाशीलश्च ।

९ वृषः=व्यवायी ।

१० विद्यारूपगुणेषु भर्तुरतिशयितो ( अधिकः ) । 'वृष इति सिद्धप्रतापः साहसिकः शूरो विद्यारूपगुणोपभोगैः पत्युरतिशयितो महार्हवेषोपचारश्चेति ।' इति सूत्रम् ।

११ 'स्मार-' ग० ।

अथ कथ्यन्ते नार्यो यत्नमृते[1] यास्तु सिद्धाः स्युः ॥ ४४ ॥

अभियोगमात्रसाध्या[2] द्वारस्थितिशालिनी च या नित्यम्।

प्रासादादवलोकनशीला या राजमार्गस्य ॥ ४५ ॥

गोष्ठीं या च वितनुते तरुणप्रतिवेशिमन्दिरे नियतम्।

[3]संततप्रेक्षणनिरता दृष्टा पार्श्वेक्षणा( क्षिणी ) चैवं[4] ॥ ४६ ॥

[5]निष्कारणमधिविन्ना भर्तृद्वेषिण्यनेन[6] विद्विष्टा।

प[7]रिहारप्रविहीना निरत्यावस्थिता नित्यम् ॥ ४७ ॥

ज्ञातिषु कुलेषु पत्या या च विपन्ना(ऽ) च विश्रुता गोष्ठ्याम्(ऽ)

---

१ 'यत्र' आ० पु०।

२ या अभियोगमात्रमपेक्षन्ते नाधिकं ता–अयत्नसाध्या इत्युच्यन्ते। ताः 'द्वारस्थितिशालिनी–' इत्यादिना ऽऽह। क्षेमेन्द्रेणापि कलाविलासे ३सर्गे २० श्लोकादारभ्य ३. श्लोकपर्यन्तमिमाः परिगणिताः।

३ 'प्रणत–'आ० पु० ग०। 'प्रणता' ख०।

४ 'दृष्टापाङ्गेक्षणाचैव' ख०। एतानि द्वारस्थितिशीलत्वमारभ्य पार्श्वेक्षणपर्यन्तानि चापल्यस्य चिह्नानि चपलाश्चाभियोगमत्रसाध्या इति।

५ दौःशील्यादीनि यान्यधिवेदनकारणान्युक्तानि तैर्विनैव सपत्न्याधिविन्ना युक्तामर्षक्षुब्धमानसा परपुरुषमिच्छति साभियोगमात्रासाध्या।

६ अनेन=भर्त्रा।

७ या परिहार्यमपि न परिहरति ( अभियोगानर्हेऽप्यभियोगमिच्छति ) सा स्वभावत एव व्यभिचारिणी वचनमात्रसाध्या।

८ अपत्यहीना भर्तुरपत्यमपश्यन्ती तदभिलाषेण परानुपैति।

ज्ञातिकुलेषु विपन्नाऽपत्या या विश्रुता गोष्ठ्याम् ।
प्रीत्या युक्ता भार्या कुशीलवानां (-वादेः) तथा विधवा॥४८॥
बाल्ये या च दरिद्रा बहुभोगा भूरिदेवरानुगता ।
बहुमाना न्यूनपतिः कौशलसारातिदर्पा च ॥ ४९ ॥
अविशेषज्ञतया खलु लोभमनाश्चै(श्चै)व मोक्षणोद्विग्ना ।
भर्तुः कन्याकाले या च वृता नैव लब्धा च ॥ ५० ॥

---

१ नित्यं ज्ञातिकुलेष्ववस्थिता स्वातन्त्र्यान्मर्यादामुल्लङ्घयति ।

२ विपन्नाऽपत्येति भर्तुर्यद्यदपत्यं तत्तन्म्रियत इति परपुरुषानुपगच्छति अपत्यस्थैर्यकामा ।

३ स्वगृहे सखीगृहे गोष्ठीयोजिनी चपला ।

४ 'प्रीतियोजिनी' इति सूत्रम् । 'प्रीतियोजिनी येन सह प्रीतिं योजयति तस्य साध्या ।' ( ज० मं० ) ।

५ नटनर्तकचारणादिभार्या वेश्याप्रायत्वादयत्नसाध्याः ।

६ बाल्ये विधवा यौवने विषण्णा सती शीलं खण्डयति ।

७ धनलोभेन बहुभोगान्वितं दातारमिच्छति तस्याऽयत्नसाध्या ।

८ 'ज्येष्ठभार्या बहुदेवरका प्रायशो देवरैरेव व्युत्पादिता' । ज० मं० ) ।

९ आत्मनि बहुमानवती न्यूनपतौ न रमत इत्यस्य तदुपयुक्तस्याऽयत्नसाध्या । 'बहुपाना' (अधिकमद्यपानशीला) ख० ।

१० कलापरिज्ञानेनातिदर्पवती भर्तुर्मौर्ख्येणोद्विग्ना नियतं कलाकुशलमिच्छतीति तादृशस्याऽयत्नसाध्या ।

११ 'कौशलाभिमानिनी मौर्ख्येणोद्विग्ना अविशेष(ज्ञ)तया लोभेन ।' इति सूत्रम् । स्वयं विशेषज्ञा भर्तुरविशेषज्ञतया, स्वयमलब्धा च भर्तुर्लोभेन उद्विग्ना न तत्र रमते, अन्यमिच्छति ।

लोभमनाः लोभे मनो यस्याः सा । मोक्षणोद्विग्ना=भर्त्रा मुक्तेति समुद्विग्नमानसा ।

अभियुक्ता च तदा¹नीमविषमशीला च बोधमेधातः ।
प्रतिपत्तेः सात्म्याद²पि सततं पर्वातिपाता वा ॥ ५१ ॥
हृतमानाऽनपराधा(धे³) तुल्याभिश्चाप्यधःकृता स्त्रीभि⁴ः ।
प्रोषितपतिका तद्वद्भ्रे⁵(ज्ञे)या सेर्ष्यस्य भार्या च ॥ ५२ ॥
भार्या व्य⁶ङ्गक्लीबककापुरुषकदीर्घसूत्रकादीना⁷म् ।
इत्थमिमा निर्णीताः सुलभा नार्यो नरेशेन ॥ ५३ ॥

---

'लोभमयत्वाच्च मोक्षणाद्विग्ना' इति पाठे तु स्पष्टोऽन्वयः–भर्तुरविशेषज्ञताया लोभमयत्वात् मोक्षणाच्चोद्विग्नेति ।

---

१ कन्याकाले नायकेन यत्नाद्वृता कथमपि दैवयोगान्न लब्धा अन्येनोढा तदानीं ( यदा नायकेनाभियुक्ता तदा ) तस्य पूर्वानुरागवशात् साध्या । 'तदानीमविषमशीलावबोधने भर्तुः' ख० ।

२ शीलबुद्धिमेधाप्रतिपत्तिसात्म्यैः नायकेन समाना तस्य साध्या । सततं पर्वातिपाता ( पर्वणः अतिपातोऽतिक्रमो यस्याः सा ) सदा ऋतुस्नानानन्तरं पुरुषसंयोगमलभमानेत्यर्थः । ऋतुदिवसेषु हि विशेषेणोद्दीप्ताभिलाषा भवति स्त्री । सा च सदा तत्काले पत्या संयोगेनाभिलाषशान्तिमनधिगच्छन्ती तत्प्रशमाय प्रचण्डकामानलज्वालाव्याकुलिता नियतशीलादिकमवमत्य पुरुषान्तरगामिनी भवतीति सा तत्कालमभियुञ्जानस्य साध्या । 'पर्वातिपातीव' आ० पु० क० ग० ।

३ विना दोषं भर्त्राऽपमानिता रोषवशान्न तत्र सज्जते, अन्यमिच्छति ।

४ विरागादन्यमिच्छति ।

५ 'यो निष्कारणमीर्ष्यति तस्य भार्या विटैश्चिरमपहृतैव । ' ( ज० मं० )

६ केनाप्यङ्गवैकल्येन वैरूप्यसम्पन्न इत्यर्थः । तस्य भार्या न तत्र रमते । 'व्यक्ष' ख० पु० । व्यक्षोऽक्षिविकलः । सूत्रे 'चोक्ष–' इति पाठः । 'चोक्षो जातिविशेषस्तद्भार्या वेश्याप्राया ।' ( ज० मं० )

७ आदिना सूत्रोक्ताः पूतिकुब्जवामनमणिकारग्राम्यदुर्गन्धिरोगिवृद्धा ग्राह्याः ।

इत्थं(च्छा) स्वभावजाता क्रियया[1] चैवोपबृंहिता सम्यक् ।
बुद्धया निहतोद्वेगा[2] भजति स्थिरतां गतायाता:(-ऽपाया) ॥५४॥
मत्वा[3] स्वस्मिन् सिद्धिं लिङ्गान्युन्नीय योषिताञ्चैव ।
व्यावृत्तिहेतुहन्ता[5] सिद्धिं प्राप्नोति नारीषु ॥ ५५ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनाऽनुसृते ।
परवल्लभाऽधिकरणे प्रथमोऽध्यायः कृतः साङ्गः ॥ ५६ ॥



---

'पूतिः शरीरसंस्काररहितः । मणिकारो मणीनां संस्कर्ता तद्भार्या सदैव हट्टचारिणी खण्डितशीला ग्रामयभार्या नागरिकस्याऽयत्नसाध्या ।' ( ज० मं० ) । वृद्धो व्यवायाक्षमः तद्भार्या व्यवायक्षमस्याऽयत्नसाध्या । व्यवायक्षमस्यैव स्त्रीणां मनस्तोषहेतुत्वेन प्राणाधिकप्रियत्वात् । यथोक्तम्—

प्राणाधिकं प्रियतमं सम्भोगकुशलं नरम् ।
पश्यन्ती रिपुतुल्यं च वृद्धं वा मैथुनाक्षमम् ॥
( ब्रह्मवैवर्ते १६ अ० ) इति ।

---

१ परिचयाभियोगलक्षणया ।

२ संप्रयोगोपायमपश्यन्ती उद्वेगयुक्ता स्यादिति तदपायदर्शनेनापनीतोद्वेगा ।

३ किमहमस्याः सिद्ध इति ।

४ लिङ्गानीच्छासूचकानि इङ्गिताकाराभिधेयानि ।

५ रागवर्धनादिभिः पूर्वोक्तोपायैर्व्यावृत्तिकारणोच्छेदी ।

# अथ द्वितीयोऽध्यायः ।



अथ सद्व्यतामस्मिन् कुरुतेऽध्यायस्य तत्परस्यैषः ।
व्याख्यानाद् व्या(वि)ख्यातो दाने माने च शौर्ये च ॥ १ ॥
[1]स्वयमभियोगात् साध्या कन्या दूत्या तु सा नेष्टा ।
[2]तनुभावा परयोषिद् दूती साध्येति चाचार्याः ॥ २ ॥
[3]शक्तौ स्वयमभियोगो युक्तः कन्यासु चान्यनारीषु ।
तद्विरहे त्वभियोगो दूतीं कृत्वैव निर्वाह्यः ॥ ३ ॥
अभि(नि)यन्त्रितसम्भाषा या याश्चैवातिसाहसाः प्रथमम्[4] ।

---

१ 'क्रियया चैवोपबृंहिता' इत्युक्तम् । सम्प्रति तां क्रियां दर्शयितुमुपक्रमते—स्वयमभियोगादित्यादिना । कन्या परयोषिच्चेति नायिकाद्वयम् । आत्मना दूत्या चेत्यभियोगद्वैविध्यम् । तत्र कुत्रात्मना कुत्र च दूत्याऽभियोगः साधीयानित्यत्र पूर्वमाचार्यमतमाह—कन्यायां स्वयमभियोगः परयोषिति च दूत्येति ।

२ सूक्ष्मभावा प्रवृत्तपुरुषसंयोगत्वात् । तस्मादसौ दूत्यैव साध्या । कन्या तु असंप्रयुक्तत्वात् प्रायेण युक्त्याऽभियोज्याः । तच्च नायक एव प्रयोक्तुं शक्नोति, न दूती । अतस्तासु एकपुरुषाभियोगा उक्ताः ( कन्यासंप्रयुक्तके ) ।

३ स्वयमभियोक्तुं सामर्थ्ये सति । इदं वात्स्यायनमतम् ।

४ 'प्रथमसाहसा अनियन्त्रणसंभाषाश्च स्वयं प्रतार्याः । तद्विपरीताश्च दूत्येति प्रायोवादः' इति सूत्रम् । पूर्वमखण्डितचारित्राणां यासां प्रथमं चारित्रखण्डनरूपमस्ति साहसम् । तासु नायक एव समर्थो न दूती । यासां च नायकेन सह अनियन्त्रणं सम्भाषणं तास्वपि किं दूत्या । यास्तु बहुशः खण्डितचारित्रा नियन्त्रितसम्भाषणाश्च तासु दूती प्रयोज्येत्यर्थः ।

ता स्युः स्वतो हि साध्या दूतीसाध्यास्ततो भिन्नाः ॥ ४ ॥
कुर्यात् परिचयमादौ स्वयमभियोगं तु तासु कुर्वाणः[1] ।
दर्शनमस्या द्विविधं स्वाभाविकमन्यथा[2] चैव ॥ ५ ॥
तत्राद्यं[3] निजमन्दिरसान्निधिमासाद्य जायतेऽन्यत्तु[4] ।
मित्रज्ञातिभिषग्वरमुखमन्दिरसन्निधाने स्यात् ॥ ६ ॥
यज्ञोत्सवयोर्व्यसने गमनाचारे तथा शुभारामे ।
साकारं च विदध्यात् प्रेक्षणमस्याः सदोद्युक्तः ॥ ७ ॥
संयमनं केशानामाच्छुरणं[6] पाणिकमलनखराणाम् ।
अधरोष्ठयोर्विमर्दं प्रह्लादं भूषणानां च ॥ ८ ॥
तास्ताश्च सह वयस्यैरादेशिन्यस्तदीयचेष्टानाम् ।
कार्या अतिप्रियाः किल चारु कथाः सन्निधौ तस्याः ॥ ९ ॥

---

१ 'साधु कुर्वाणः' ख० ।

२ प्रायत्निकम् ।

३ 'तत्रायं—' ग० । गृहसमीपे क्वचिदागताया दर्शनं स्वाभाविकम् ।

४ '–ऽन्यत्र' ग० ।

५ 'साह्लानं' ख० ।

तत्र द्विविधे दर्शने परिचयकारणं द्विविधं बाह्यमाभ्यन्तरं च । तत्राद्यमधिकृत्याह—साकारं चेत्यादिना । साकारमिति भावसूचकेन मुखनयनगतेनाकारेण सहेत्यर्थः ।

६ 'माह्वरणं' ख० । कुटिलीकरणमित्यर्थः । ह्वरकौटिल्ये धातुः । नखैः स्वाङ्गेष्वाच्छुरितप्रयोगो नखाधिकारोक्तः ।

७ शब्दनम् । 'ल्हादी अव्यक्ते शब्दे' इति धातुः ।

८ 'नानाश्च' आ० पु० ग० ख० । 'तास्ताश्च लीला वयस्यैः सह प्रेक्षमाणायास्तत्सम्बद्धाः पुण्यदेशिन्यश्च कथाः' इति सूत्रम् ।

९ 'काया–' आ० पु० ग० ।

भूरिप्रकाशनं स्याच्छ्रवणायाऽस्याः स्वकीयदानादेः[1] ।
उत्सङ्गे[2] सुहृदोऽपि च जृम्भणमिह[3] साङ्गभङ्गं स्यात् ॥ १० ॥
एकभ्रूप्र(त्रि)क्षेपं[4] वाक्यश्रवणं तथा चरेत्तस्याः ।
बालेनान्यजनेन च तामुद्दिश्य द्विधार्थाश्च[5] ॥ ११ ॥
[6]अन्यापदेशयुक्ताः कथयेत्सुकथाः कथापथाभिज्ञः[7] ।
तस्याः स्वयमावेदनमुचितं चित्ताभिलाषाणाम् ॥ १२ ॥
अन्यापदेशतोऽपि च तामेवोद्दिश्य भूतलोल्लिखनम्[8] ।
परिचुम्बनमालिङ्गनमुक्तं चैवेह बालानाम्[9] ॥ १३ ॥
ताम्बूलस्य च दानं जिह्वाग्रेणाऽस्य[10] साधु निर्दिष्टम् ।
हनुघट्टनञ्च[11] कथितं तस्यैवात्र[12] प्रदेशिन्याम् (न्या) ॥ १४ ॥
एवं यथावकाशं कुर्यादन्या अपीह[13] सच्चेष्टाः ।

---

१ 'स्वकोप–' ग० । २ 'उत्सन्ने' आ० पु० ।
३ 'वर्तनमिह' ख० ।
४ इतोऽनन्तरम् 'मन्दवाक्यता' इति सूत्रम् ।
५ एकोऽर्थोऽन्यसम्बद्धो, द्वितीयश्च नायिकासम्बद्धः । 'प्रलापश्च' ख० ।
६ इदं पद्यमादर्शपुस्तके त्रुटितम् ।
७ 'प्रथा' ग० ।
८ 'भूतले लिखनम्' ग० ।
९ इदं चुम्बनमालिङ्गनं च संक्रान्तकसंज्ञया पूर्वमुक्तम् ।
१० अस्य=बालस्य ।
११ '–नश्च' आ० पु० ।
१२ तस्य बालस्य । 'तस्यैवातम' ख० ।
१३ 'पीहशाश्चे' ख० ।

आलापं रचयेदिह तस्याः स्वजनेन सोद्योगः ॥ १५ ॥
अस्मै[1] क्रीडनकानां दानं ग्रहणं तथैव तत्करतः ।
योजनमपि च कथायां[2] युक्तं सम्बन्धिना[3] तेन ॥ १६ ॥
सम्भाषणक्षमेण च लोकेनाऽस्या भवेत् सदा प्रीतिः ।
कार्यानुबन्धनिष्ठो[4] गमनागमने विदध्याच्च ॥ १७ ॥
अस्याः संश्रवदेशे[5] स्थितिमानथ दृष्टियोग्यताराहिते[6] ।
कामागमसूत्राणां कथयाऽपहरेन्मनस्तस्याः ॥ १८ ॥
प्रसृते परिचय इत्थं हस्ते तस्या निधाय निक्षेपम् ।
प्रतिदिनमनुक्षणं[7] वा गृह्णीयादेकतो देशात् ॥ १९ ॥
सौगन्धिकमथ[8] पूगं निजदारैः सह विविक्तदेशेषु ।

---

१ अस्मै=बालाय । तस्याश्चाङ्कगतस्य बालस्य लालनं बालक्रीडनकानां चास्य दानं ग्रहणं तेन संनिकृष्टत्वात् कथायोजनम् ।' इति सूत्रम् । 'अस्यै' ख० ।

२ '–यां' ग० ।

३ 'सम्बन्धिता' ग० ।

४ 'ऽनुबन्धानेष्ठो–' ग० । तत्संभाषणक्षमेण जनेन प्रीतिमासाद्य कार्यं च प्रयोज्य कार्यद्वारेण गमनागमने योजयेत् येन लोकोऽनेन कार्येणाऽस्य गमनागमनं नान्येनेति मन्यते ।

५ यत्र सा शृणोति तत्र ।

६ अन्यथा तां पश्यतः कथायोजनेन दुर्विदग्धता सूच्येत ।

७ 'प्रतिक्षणमनुदिवसं–' आ० पु० । –'प्रतिदिशमनुदिवसं–' ग० ।

८ "प्रसृते तु परिचये तस्या हस्ते न्यासं निक्षेपं च निदध्यात् । तत्प्रतिदिनं प्रतिक्षणं चैकदेशतो गृह्णीयात् । सौगन्धिकं पूगफलानि च ।" इति सूत्रम् । सौगन्धि-

दद्याद[1]स्यै र[2]क्तस्तद्वद्विस्रम्भगोष्ठी[3] च ॥ २० ॥
येषु च सुवर्णकारप्रभृतिषु कर्मार्थिनी भवेदेषा ।
तत्र स्वयमपि[4] भूयादेवं स्याद्दर्शनं नित्यम् ॥ २१ ॥
एवमुपायान्तरतो भूयान्नित्ये स दर्शने निरतः ।
स्यादित्थं लोकेषु हि विदितालापादिरेतस्याम्[5] ॥ २२ ॥
अनुसन्धानं त[6]स्मिन् कुर्यादन्यस्य कर्मणोऽप्येषः ।
न ह्यनुरागं लभते निरुपायोऽप्यन्यदाराणाम् ॥ २३ ॥
कर्मणि वस्तुनि यस्मिन् स्यादेषा कौशले तथा सेच्छा[7] ।

---

कं ( सुगन्धिद्रव्यसमूहं ) पूगफलानि च (न्यासं) निक्षेपं (च)निधाय प्रतिदिनमनुक्षणं च तदेकदेशतः स्तोकस्तोकेन गृह्णीयात् इति जयमङ्गलाकाराभिप्रायः । यथौचित्यं किमपि द्रव्यं निधाय तत् स्तोकस्तोकेन प्रतिदिनं प्रतिक्षणं वा गृह्णीयात् । सौगन्धिकं पूगं चाऽस्यै प्रणयख्यापनाथ दद्यादिति च ग्रंथकाराभिप्रायः ।

---

१ 'दद्यादस्य' इत्यस्य 'सौन्धिकमथ पूगम्' इत्यनेन सम्बन्धः ।

२ 'नक्त-' आ० पु० ।

३ 'ष्ठीषु' ख० । ता विविक्तदेशे निजदारैः सह विस्रम्भगोष्ठ्यां योजयेद्विश्वासार्थं नित्यदर्शनार्थं च ।

४ '-मभि-' आ० पु० । तत्र (कर्मणि) स्वयमपि-संपादकः (इति शेषः) स्यात् ।

५ 'विहितालापादिरेतस्याः' ख० । सुवर्णकारादिषु विद्यमानं तस्याः कार्यं स्वयमधिष्ठाय स्ववश्यैः सुवर्णकारादिभिस्तत्संपादनं कारयेत् । इत्थं तत्कार्यसंपादननिरतस्याऽस्य तया सह संदर्शनालापादिकं दीर्घकालं लोके विदितं स्यात्-येन लोकस्तस्मिन्न विकल्पयेत् ।

६ तस्मिन् कर्मणि संपाद्यमानेऽसमाप्त एवान्यस्य कर्मणोऽनुसंधानं कुर्यात्-मा भूद्दर्शनविच्छेद इति । एवं तदनुरागलब्धये उपायनिरतः स्यात् ।

७ 'सेवा' ग० ।

आत्मायत्तं[1] कथयेत्तस्योत्पत्त्यागमाक्षेपः ॥ २४ ॥
पूर्वाचरिते[2] लोकैर्द्रव्यगुणादेस्तथा परीक्षायाम् ।
रचयेदेष विवादं तत्परिजनैस्[3]तया चैव ॥ २५ ॥
तत्परिजनैर्विवादे सपणस्तस्यां चरेदसौ प्रश्नम् ।
तत्संमत्या त्वन्यं पृच्छेदनया विवादेन (च) ॥ २६ ॥
इत्थं परिचयहेतव इह निर्दिष्टाः परस्य दारेषु ।
श्रीवीरभद्रकृतिना परिचितकामार्थतत्त्वेन ॥ २७ ॥
कन्यामिव सदुपायः कृतपरिचयदर्शितेङ्गिताकाराम् ।
अभियुञ्जीत स्फुटतरमासां[4] भूरिप्रवृत्तत्वात् ॥ २८ ॥
निर्दयकामशराहतिदलितहृदामप्यधीरवृत्तानाम् ।
प्रायेण चाभियोगाः सूक्ष्माः कन्यास्व[5]संयोगात् ॥ २९ ॥
द्रव्याण्यस्या गोष्ठीगत्युपभोगव्य[6]तिकरेषु चानीय ।
उपयुञ्जीत[7] निदर्शितसुभगाकारादिरेषा चेत्[8] ॥ ३० ॥

---

१ 'आत्मापज्ञं–' ग० ।

२ 'पूर्वप्रवृत्तेषु लोकचरितेषु' इति सूत्रम् ।

३ तत्परिजनेन (सार्वभाक्तिकस्तसिः) ।

४ परस्त्रीणाम् ।

५ '–स्वयंयोगात् ' आ० पु० । कन्यानामसंप्रयुक्तत्वात्तासु प्रायेण सूक्ष्मा अभियोगाः ।

६ अत्र छन्दोभङ्गः । 'गत्युपभोगेषु चानीय' इति पाठः छन्दोऽनुकूलः ।

७ स्वानि च द्रव्याणि तासुपभोजयेत् ।

८ 'संदर्शिताकारायां निर्भिन्नसद्भावायां समुपभोगव्यतिकरे तदीयान्युपयुञ्जीत ।' इति सूत्रम् । '–कारादिरेखा चेत् ' ख० ।

परिवर्तनं विदध्यात् कुसुमोत्तरवस्त्रकाङ्गुलीयादेः ।
स्वस्य सुगन्धं रचयेन्महार्हकं च प्रयत्नेन ॥ ३१ ॥
ताम्बूलस्य च कुर्याद् यत्नात्तत्पाणिपङ्कजाद् ग्रहणम् ।
गोष्ठीगमनोद्यमवान् कुसुमान्येतत्करादीनाम् ॥ ३२ ॥
गृह्णीयादभिवा(या)चनपुरःसरं [1] रागकाङ्क्षया तस्याः ।
दशनादिपदसचिह्नं साकारं भूरि गन्धादि ॥ ३३ ॥
दद्यात्स्वयमेतस्यै स्पृहणीयं चेत्स्वयं भवेद्दाता [2] ।
कुर्यात्साध्वसभङ्गं भूर्यभियोगेन कालेषु ॥ ३४ ॥
क्रमशो विविक्तदेशे नयनं परिचुम्बनं परीरम्भः ।
ताम्बूलदानलाभे[3] परिवर्तनमत्र पुष्पाणाम्[4] ॥ ३५ ॥
स्पर्शश्च गुह्यदेशे–इत्यभियोगाः परस्य दारेषु ।
मूलग्रन्थानुगमादपि च विगीता विनिर्दिष्टाः ३६ ॥

---

१ 'गोष्ठीगमनोद्यतस्य केशहस्तपुष्पयाचनम् ।' इति सूत्रम् । 'गोष्ठीगमनोद्यतस्येति कर्तरि षष्ठी । केशहस्तः केशकलापः । तत्रत्यपुष्पयाचनम् । सिद्ध( द्धि )करमेतदिति ।' इति जयमङ्गलाकृत् । ग्रन्थकारस्तु 'केशा हस्तौ च तत्रत्यानां पुष्पाणां याचनमित्येवं विगृह्य केशकलापार्थकं केशहस्त इत्येकं पदं द्विधा विभक्तवान् अत एवाह– 'कुसुमान्येतत्करादीनाम् ' इति । आदिना केशाः माला च ।

२ 'चेत्पुनर्भवेद्दाता' ख० । लोकस्य स्पृहणीयं गन्धादि अन्यहस्तेनास्यै ददन्नायकः स्वनखदशनपदचिह्नितं कृत्वा दद्यात् । स्वहस्तेन ददच्च साकारं (स्वाभिप्रायसूचकमुखनयनादिगताकारप्रकाशनसहितं दद्यादिति ।

३ 'लाने' ग० । 'काले' ख० ।

४ 'दानान्ते द्रव्याणां परिवर्तनम्' इति सूत्रम् । 'दाने पुष्पाणां परिवर्तनम्' इति च तत्रैव पाठान्तरम् ।

अभियुक्ता यत्रैका तत्र निषिद्धः पराभियोगः स्यात्[1] ।
या त्वनुभूतविशेषा[2] प्रियकरणैः स्यादसौ वश्या ॥ ३७ ॥
भर्ताऽन्यत्र च दृष्टः संचारो यत्र नायकस्य स्यात्[3] (?) ।
तत्र न कामपि रमणीमभियुञ्जीतैव सा साध्या ॥ ३८ ॥
शङ्कितरक्षितभीताः सश्वश्रूकाश्च[4] पद्मपत्राक्षीः ।
प्रत्ययमात्मनि रक्षन्नभियुञ्जीतेह नैवासौ[5] ॥ ३९ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे पूर्णोऽध्यायो द्वितीयोऽसौ ॥ ४० ॥

---

१ अन्यथा व्यापारस्य प्रकाशनं स्यात् ।

२ 'धूत' आ० पु० । अनुभूतविषया वृद्धा खल्वतिप्रौढा परेषामिङ्गिताकारचेष्टासंचारादिभिर्दुर्लक्ष्यमप्यर्थं ज्ञातुं प्रभवति । सा तज्ज्ञात्वाऽन्तरायं न कुर्यादिति प्रियकरणैस्तां स्ववशे कुर्यात् । यद्वा तां वशीकृत्य तद्द्वारैव स्वकार्यं साधयेदिति भावः ।

३ अन्यत्र दृष्टसंचारस्तद्भर्ता यत्र नायकः ।
न तत्र योषितं काञ्चित् सुप्रापामपि लंघयेत् ॥

इति सूत्रम् । 'यत्रेति यस्मिन् गृहे नायिकाया भर्ता अन्यस्यां योषिति दृष्टसंचारो दृष्टाभिगमो न तत्र गृहे सुप्रापामपि सुलभामपि लंघयेदधि( भि )गच्छेदित्यर्थः । ( ज० मं० ) । 'भर्त्रान्यत्र च दृष्टः संचारो नायिकायाश्च । तत्र न तां रमणीमभियुञ्ज्यान्नैवास्ति सा साध्या'' ख० । यत्र देशे नायिकाया गमनागमनं तद्भर्त्रा दृष्टं तत्र तां नाभियुञ्जीतेत्यर्थः ।

४ 'सकृत्प्रकाशाश्च' ख० ।

५ 'नैवान्यैः' ख० ।

# अथ तृतीयोऽध्यायः ।

अधिकरणे पञ्चम इह कुरुते व्याख्यां तृतीयकेऽध्याये ।
भूचक्रचक्रवर्ती वीरः[1] श्रीवीरभद्रोऽसौ ॥ १ ॥
[2]अभियुञ्जानः सुदृशो भावपरीक्षां प्रयत्नतः कुर्यात् ।
यद्यभियोगग्रहणं तत्र च दूतीप्रयोगः स्यात् ॥ २ ॥
अगृहीत्वा त्वभियोगं पुनरपि संसृज्यमानतायां हि ।
[3]हरिणीचपलदृगन्तां चपलहृदन्तां विजानीयात् ॥ ३ ॥
सा क्रमसाध्या[4] या पुनरभियोगं नैव चानुगृह्णाति ।
सालङ्कारविशेषा दृश्या[5] दृश्यत्वमायाति ॥ ४ ॥

---

१ 'वीरश्री' आ० पु० ।

२ धीरासु प्रगल्भपरीक्षिणासु अनिर्भिन्नसद्भावासु स्त्रीषु अभियोगो न संभवतीति तत्प्रवृत्तये स्त्रीणां प्रवृत्तिभिः ( चेष्टाभिः ) भावपरीक्षामाह अभियुञ्जान इत्यादिना । यद्यभियोज्याऽभियोगं गृह्णाति तर्हि नाऽवश्यकता दूतीप्रयोगस्य तस्याः स्वयं सिद्धत्वात् । 'तत्र च दूतीप्रयोगः' ख० ।

३ अयं सार्धः श्लोकः आदर्शपुस्तके त्रुटितः ।

४ 'अप्रतिगृह्याभियोगं पुनरपि संसृज्यमानां द्विधाभूतमानसां विद्यात् । तां क्रमेण साधयेत् ।' इति सूत्रम् । 'अभियोगेनैव चानुगृह्णाति' ख० ।

५ सालङ्कारविशेषा ( यथा पूर्वं दृष्टा ततः सविशेषमलंकृता ) अत एव दृश्या दर्शनीया दृश्यत्वमायाति दृश्यते ( पूर्ववदाभिगच्छति च नायकम् ) तामन्यजनरतिहे देशे बलाद् ग्रहणीयां जानीयात् ।

तां बललभ्यां विद्यादेशे रहिते पुनस्तथैवान्यैः ।
या पुनरभियोगानां ग्रहणे निपुणा न भोगेऽपि ॥ ५ ॥
शुष्कप्रतिग्रहे तां निरतामतिकृच्छ्रसाध्यतां विद्यात्[1] ।
नहि चेतांसि मृगाक्ष्याः स्थिरतां नेतुं समर्थाः स्युः ॥ ६ ॥
परिहरति नाभियोगं[2] न च संसर्गं तथा समातनुते ।
प्रत्यादेशे विरता हसति तथा गौरवस्यैषा ॥ ७ ॥
अभिमानादात्मनि वा तस्मिन्[3] वा सातिपरिचयात् कृच्छ्रात् ।
साध्या मर्मविदे(दै)नां दूसा परिसाधयेन्निपुणः ॥ ८ ॥
परुषप्रत्यादेशं (शे) निरतोपेक्षासु पात्रतां भजते[4] ॥
पारुष्योत्तरमृद्वीं मृद्वङ्गीं साधयेदेवं[5] ॥ ९ ॥
सहते करादिसङ्गं ताच्चित्ता नावबुध्यते चान्यत् ।
सातत्येन क्षान्त्याऽऽदेशाद्वा सा भवेत्साध्या[6] ॥ १० ॥

---

१ "बहूनपि सहतेऽभियोगान्न च चिरेणापि प्रयच्छत्यात्मानं सा शुष्कप्रतिग्राहिणी परिचयविघटनसाध्या" इति सूत्रम् । शुष्कप्रतिग्रहे निरताम् अर्थशून्याभियोगग्रहणशीलाम् । अतिकृच्छ्रसाध्यताम् (अतिकृच्छ्रा साध्यता यस्यास्ताम् इति विग्रहः) अतिकष्टसाध्याम् । 'साध्यकं' ख० । 'परिचयविघटनसाध्या इति सूत्रानुसारं तु 'शुष्कप्रतिग्रहे सा निरता परिचयाविघटनसाध्या स्यात् । ' इति पाठ उचितः ।

२ 'अभियुक्तापि परिहरति' इति सूत्रम् ।

३ 'तास्मिन् वा नातिपरि' ख० । आत्मनि गौरवस्याभिमानात् संसर्गं न समातनुते । तस्मिन् नायके च गौरवाभिमानात् प्रत्यादेशे विरता हसति न प्रत्याचष्टे ।

४ 'सा चेदभियुज्यमाना पारुष्येण प्रत्यादिशत्युपेक्ष्या । ' इति सूत्रम् । 'पेक्षासु या त्रपाम्' ख० ।

५ प्रत्यादिश्य प्रीतियाजिनी सुसाध्यैव ।

६ 'कारणात्संस्पर्शनं सहते नावबुध्यते नाम द्विधाभूतमानसा सातत्येन क्षान्त्या

सुप्तः करसरसीरुहमुपरि[1] समीपे तथा प्रसुप्तायाः।
कुर्यात्सापि विरचयेदत्रोपेक्षां प्रसुप्तेव ॥ ११ ॥
भूयोऽभियोगकामा प्रयतेदे(तै)षा निवारणेऽसुप्तां[2]।
एतेन व्याख्यातश्चरणे चरणस्य विन्यासः ॥ १२ ॥
प्रसृतेऽस्मिन्निह[3] भूयः सुप्तपरीरम्भसोद्यमो भूयात्।
तत्राऽसहनामुत्थितिभाजं दिवसेऽग्रिमे[4] प्रकृतौ[5] ॥ १३ ॥
स्थितिशालिनीं च विद्यादभियोगार्थां[6] कृशोदरीं पुरुषः।
दूतीसाध्यां विद्यादेनां संदर्शने हीनाम्[7] ॥ १४ ॥
चिरसंदर्शनहीना प्रकृतौ पुनरप्यवस्थिता सृष्टा।

---

वा साध्या। ' इति सूत्रम्। नावबुध्यते नामेति नायकाभिप्रायमजानतीव संस्पर्शनं सहते (ज० मं०)। सातत्येन क्षान्त्यादेशात् अविच्छेदेन करचरणसंस्पर्शसहनं कारयता नायकेन साध्या। 'सातत्येन प्रत्यादेशात्' ख०।

---

१ समीपे शयानाया आन्तराभियोगेन प्रवृत्तिं परीक्षेत। सुप्तः परीक्षार्थं कृतकसुप्तः।

२ जाग्रती तु किमनेन करः सुप्तेनैव न्यस्तः किं वाऽभियोगार्थं कृतकसुप्तेनेति सन्देहनिरासार्थं भूयोऽभियोगाकाङ्क्षिणी तत्करमपनुदेत्। प्रयतेत्–इति प्रयोगः अनुदात्तेत्त्वलक्षणात्मनेपदस्यानित्यत्वेन समाधेयः।

३ हस्तन्यासे पादन्यासे च प्रसृते निबन्धनत्वेन प्रवृत्ते नायिकया सोढे।

४ 'दिने' ख० ग० आ० पु०। अयं पाठः छन्दोऽननुकूलः।

५ 'प्रकृतैः' आ० पु०। 'प्रकृता' ग०। 'प्रकृतां' ख०।

६ अभियोगार्थिनीम्। 'गार्थे' ख०।

७ 'हीमाम्' ख०। सुप्तालिङ्गनमसहमानां शयनादुत्थिताऽपि द्वितीयेऽहनि प्रकृतिवर्तिनी ( अकुपिता ) चेदभियोगार्थिनी ज्ञेया अप्रगल्भत्वात्। द्वितीयेऽहनि प्रकृतिवर्तिन्यप्यदृश्यमाना ( नायकदर्शनं परिहरन्ती ) तु दूतीसाध्या ज्ञेया।

भवतीत्याह(द)तचिह्नां दृष्टाकारां[1] वशे[2] कुर्यात् ॥ १५ ॥

याऽनभियोगा (युक्ता) रचयत्याकारणमात्मदर्शने(नं)[3] दात्री[4] ।

सालङ्कारैर्कान्ते[5] वेपथुयुक्ता सगद्गदं वदति ॥ १६ ॥

स्विन्नकराग्रङ्गुलिका स्विन्नमुखी जायतेऽत्यर्थम् ।

आत्मानं योजयति च शिरसः संपीडनायाऽस्य ॥ १७ ॥

आतुरसंवाहनिका हस्तेनैकेन तत्[6]प्रकुर्वाणा ।

अपरेण संगँक्[7]कृत्यं कुर्यादाश्लेषणं चैव ॥ १८ ॥

विस्मितभावा यदि वा निद्रान्धाकरसरोरुहद्विर्कतः ।

तिष्ठति संस्पृश्यैनं हरिणकिशोरस्फुरन्नयना ॥ १९ ॥

अलिकैकदेशमूर्वोरुपरि निपात्यावतिष्ठते चेह ।

---

१ 'दृष्टा' ख० । सृष्टा भवति=संसृज्यते । आदतचिह्नाम्=कृतलक्षणाम् । 'आहतचित्तां' ख० ।

२ तस्या अतिशयेनाप्रगल्भत्वात् ।

३ आकारणं रचयति=भावसूचकमाकारं दर्शयति ।

४ आत्मदर्शनं दात्रीत्यत्र 'न लोकाव्ययनिष्ठा खलर्थतृणाम्' इति षष्ठीनिषेधः दात्रीशब्दस्य तृन्नन्तत्वात् ।

५ 'लङ्कारैः कान्ते' ख० ।

६ तत्=संवाहनम् ।

७ स्पर्शम् । 'द्वितीयेन बाहुना स्पर्शमावेदयति श्लेषयति च विस्मितभावा' इति सूत्रम् । 'विस्मितभावेति । विस्मिताख्यो भावो यस्याः । स्पर्शं वेदयमाना तावत्स्पर्शं विना जातविस्मया सती तेनैव द्वितीयबाहुना श्लेषयति श्लेषं करोति ( ज० मं० ) ।

८ 'निद्रान्धा वा परिस्पृश्योरुभ्यां बाहुभ्यामपि तिष्ठति' इति सूत्रम् । 'निद्राढ्या' ख० ।

संवाहनं नियुक्ता नोर्वोर्यातीह वैमत्यम् ॥ २० ॥
अविचलितं करमेकं तत्रैव न्यस्य सुस्थिरा भवति ।
संदंशे[1]नाङ्गेन (ङ्गस्य) च पीडितमतिकालतो हरति ॥ २१ ॥
यदि वाऽहनि द्वितीये संवाहनकर्म कर्तुमायाति ।
नायककृताभियोगं पूर्वेऽहनि वारयित्वैवं[2] ॥ २२ ॥
संसर्गं नात्यन्तं कुरुते परिहरति वा न वाऽत्यन्तम् ।
संदर्शयति विविक्ते भावं चाङ्गं तथा गूढम्[3] ॥ २३ ॥
परिचारकोपभोग्या सा चेदाकारिता तथैव स्यात् ।
मर्मज्ञया प्रसाध्या व्यावृत्तौ[4] तर्कणीया च ॥ २४ ॥
इत्थं भावपरीक्षा भाविन्या भूमिवल्लभेनेह ।
श्रीवीरभद्रकृतिना व्याख्याता ख्यातवीर्येण ॥ २५ ॥
परिचयमादौ कुर्यात् पश्चात् सम्भाषणं समारचयेत् ।
परिभाषणसंमिश्रो मिथ आकारस्य बोधश्च ॥ २६ ॥
प्रत्युत्तरेण दृष्ट्वा तस्या आकारसंग्रहं पुरुषः ।

---

१ 'अङ्गसंदंशेन चेत्यूरुद्वयसंदंशेन नायकेन पीडितं (करं) चिरादपनयति । मा भूदिच्छाव्याघातोऽस्येति ।' ) ज० मं० ) 'संदंशिकाग्निमिव या पीडा–' ख० ।

२ वारयित्वा=अप्रतिगृह्य । 'प्रतिगृह्यैवं नायकाभियोगान् पुनर्द्वितीयेऽहनि संवाहनायोपगच्छति ।' इति सूत्रम् । 'अप्रतिगृह्य' वा नायकाभियोगान् ' ' ' ' ।' इति तत्रैव पाठान्तरम् ।

३ 'विविक्ते भावं दर्शयति निष्कारणं चागूढमन्यत्र प्रच्छन्नदेशात् ।' इति तु सूत्रम् । ( विविक्ते अगूढं ( स्पष्टं यथा स्यात्तथा ) भावं दशर्यति । प्रच्छन्नदेशादन्यत्र ( जनसम्बाधे ) तु गूढं भावं दर्शयतीति ) ।

४ व्यावर्तमाना तु तर्कणीया कोऽस्या व्यावृत्तिहेतुरिति ।

गतसाध्वसो विरचयेदभियोगं पद्मपत्राक्ष्याः ॥ २७ ॥
आकारेण मृगाक्षी सा भावं स्वस्य दर्शयेत् पूर्वम् ।
क्षिप्रं स्यादभियोज्या सा प्रथमे दर्शने पुंसा ॥ २८ ॥
आकारिता स्फुटोत्तरमतिमञ्जुलमाशु दर्शयेदबला ।
तत्क्षणसिद्धा ज्ञेया रतिलालसमानसा सापि ॥ २९ ॥
एष विधिस्त्वतिसूक्ष्मो धीरास्वपि चाऽप्रगल्भयोषासु ।
अन्यासु[1] स स्फुटः स्यात् पूर्वन्यायैः[2] परीक्षिण्याम्[3] ॥ ३० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाऽधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ ३१ ॥



१ अन्यासु=अधीरासु प्रगल्भासु विश्वसनशीलासु च स्फुटभावासु स्त्रीषु सः=अभियोगः स्फुटः=स्पष्टविगतसाध्वसेन प्रयोज्यः तासु अस्य भावपरीक्षणरूपस्य सूक्ष्मस्य विधेरावश्यकता नास्ति । एष सूक्ष्मो विधिस्तु धीरासु अप्रगल्भासु परीक्षिणीषु ( परीक्षणशीलासु अभियोक्तुर्हृदयमविज्ञाय संशयानासु ) च प्रयोज्यः । ता हि गूढभावा भावमपरीक्ष्य नाभियोक्तुं शक्यन्त इति ।

२ भावपरीक्षारूपः ।

३ 'परीक्षायाम्' ख० ।

# अथ चतुर्थोऽध्यायः ।



परवल्लभाधिकरणेऽध्यायतुरीये स रूपणं कुरुते ।
चतुरुदधितीरलीना यदरिमहीपालमीनाक्ष्यः ॥ १ ॥

दर्शितचेष्टाकारा या भूयाद्विरल[1]दर्शना वनिता ।
तां साधयन्ति दूत्या तद्वदपूर्वां च शास्त्रज्ञाः ॥ २ ॥

[2]शीलादनुप्रविश्य तस्यामाख्यानकपटपाठेन ।
सुभग[3]ङ्करणैर्योगैर्लोकानां चैव वृत्तान्तैः ॥ ३ ॥

[4]कविकथया वर[5]वनितासक्तकथाभिश्च तत्स्वरूपज्ञा ।
स्तुत्वा लीला[6]द्यस्या दाक्षिण्यं बोधयेदेवम् ॥ ४ ॥

सुभगे त्वं गुणयुक्ता कथमीदृशि निर्गुणे प्रिये निरता ।
दास्येऽप्येष न निपुणः कमलदलाक्ष्यास्तवे[7]दानीम् ॥ ५ ॥

---

१ 'दक्षिणा' ख० । अपूर्वाम्=अपरिचिताम्, अदर्शितेङ्गिताकाराम् ।

२ यत्राऽभियोगासंभवस्तत्र दूतीप्रयोग इति दूतीकर्माण्याह—शीलादनुप्रविश्येत्यादिना । आदौ विश्वासार्थमात्मानं शीलवन्तं दर्शयित्वा तद्द्वारा च तामनुप्रविश्येत्यर्थः ।

३ औपनिषदिकाधिकरणे वक्ष्यमाणैः ।

४ कविभिर्निबद्धया पारदारिकविषयिण्या कथया ।

५ गोतमबृहस्पत्यादिदारेषु आसक्तानामिन्द्रचन्द्रादीनां ( तत्सामयिकानां परदारासक्तानामन्यलोकानाञ्च ) कथाभिः ।

६ लीलादिदाक्षिण्यं च स्तुत्वेति सम्बन्धः । आदिना रूपविज्ञानशीलानि ग्राह्याणि ।

७ 'स्तथे' आ० पु० ।

वेगो मन्दः शठता मूढत्वं वाऽकृतज्ञतेर्ष्यायां[1] ।
कार्पण्यं विमुखत्वं[2] भोगे या(न्या)नीह वाच्यानि ॥ ६ ॥
गुणानि[3] सन्ति तस्मिन् विरतौ[4] तस्याश्च हेतुभूतानि[5] ।
कथयेदस्याः सविधे सातिशयानीह सा दूती ॥ ७ ॥
भवति च यस्माद्दोषात्सोद्वेगा सा च नायके स्वीये ।
कुर्यात्तस्य पुरस्कृतिमेषा दूती कृतिप्रवरा[6] ॥ ८ ॥
शशता[7] नैव च दोषो भवति मृगी चेन्मृगेक्षणा श्लक्ष्णा[8] ।
वडवाहस्तिन्योरपि चौचित्यानौचितीं ब्रूयात् ॥ ९ ॥
[9]विश्वास्यामिह तस्या मत्वा दूतीं तु निर्दिशेदस्याम् ।
प्रथमं साहसयुक्ता तनुभावा चेति गोणिकापुत्रः ॥ १० ॥

---

१ 'र्ष्यायां' आ० पु० क० ग० ।

२ 'विमुखत्वे' आ० पु० ।

३ 'गुह्यानि' आ० पु० ।

४ 'तीरेतौ' आ० पु० । 'निरतौ' ग० ।

५ पारुष्यनैर्घृण्यदाम्भिकत्वादीनि ।

६ 'परिच्छिन्नम्' ख० । येनाप्रत्यक्षीकृतेन नायकदोषेण नायिका उद्विग्ना भवेत्तमेव पुरस्कृत्य—कथितमेवमया यथाऽयं दोषबहुल—इति वदन्ती नायिकाया विरागं संधुक्षयेदिति भावः ।

७ 'शठता' ख० ।

८ 'कृष्ट्या' आ० पु० । 'कृष्टौ' ख० । यदि नायिका मृगी भवति तदा नायके शशतादोषो न वाच्यः किन्त्वश्वत्वदोषः । एवं नायिका यदि वडवा हस्तिनी वा तर्हि न दोषो वृषत्वमश्वत्वं च किन्तु शशत्वं दोष इति यथौचित्यं दोषान् ब्रूयात् ।

९ नायिकायां दूतीं प्रयोजयेदिति सामान्येनोक्तम् । तत्र गोणिकापुत्रमतेन विशेषमाह विश्वास्यामित्यादिना । 'नायिकाया एव तु विश्वास्यतामुपलभ्य दूतीत्वेनोपसर्प-

कथयेन्नायकचरितं[1] कामित्वं चानुलोमतां चैव।

युक्त्यार्जितसद्भावो[2] कार्यशरीरं वदेदित्थम्[3] ॥ ११ ॥

आकर्णाक्षि निशामय किमपि विचित्रं मनोभुवश्चरितम्।

दृष्ट्वा त्वामतिधीरश्चित्तोन्मादं सदा[4] तनुते ॥ १२ ॥

एतावतोऽपराधान्निहतः[5] कामेन दुःसहव्यथया।

त्वत्तोऽप्राप्य त्राणं जह्यात् प्राणानपि प्रायः ॥ १३ ॥

तत्राऽरौक्ष्ये[6] मत्वा सिद्धां दिवसेऽग्रिमे पुनर्दूती।

वक्त्रादिषु प्रसादं दृष्ट्वा भूयः कथां रचयेत् ॥ १४ ॥

कथयेदस्याः पुरतश्चरितानि परपुरुषनारीणाम्[7]।

आदौ कृत्वाऽहल्यां मुनिवनितां विश्रुतां लोके ॥ १५ ॥

चातुःषष्ठिकयोगे नैपुण्यं तस्य दर्शयेदस्यै।

एवं वृषतामस्य च वश्यत्वं साधयत्य( येद )स्याः १६ ॥

सौभाग्यं कथयेदपि संभोगं छन्नमन्यया तस्य।

---

येत् प्रथमसाहसायां सूक्ष्मभावायां चेति गोणिकापुत्रः।' इति सूत्रम्। 'विश्वास्यातिरहस्यं स्वीयं दूती विनिर्दिशेदस्याम्' ख०।

---

१ 'कीर्ति' ख०।

२ नायिकायाः सद्भावमप्राप्योक्ते दोषकारणमपि स्यादिति।

३ 'वदेदल्पम्' क०। यथा मालतीमाधवे३येऽङ्के कामन्दकी मालतीं प्रति "श्रृणु चित्रमिदं सुभगेः . . . " इत्यादिनाऽऽह।

४ 'समातनुते' ख० ग०।

५ असौ रूपेण काममधरीकरोतीत्येतावत एवापराधादसौ कामेन निर्दयं पीड्यत इति।

६ तत्रेति तस्मिन्नभिधीयमाने न चेद्रूक्षतां दर्शयति।

७ अत्र छन्दोभङ्गः। 'चरितं परपुरुषनारीणाम्।' इति पाठः छन्दोऽनुकूलः।

सत्यमसत्यं[1] यत्नादाकारं[2] लक्षयेच्चैव ॥ १७ ॥
सापि सहासं कथयेद्[3]द्याच्चैवासनं तथा चानु ।
स्थानं शयनं भुक्तं चेष्टितरचितानि पृच्छेच्चर्वे[4] ॥ १८ ॥
स्वं दर्शयति विविक्ते[5] रचयत्याख्यानके नियोगं च ।
चिन्तां जृम्भां श्वासान् कुरुते[6] प्रीत्या ददात्यर्थान्[7] ॥ १९ ॥
इष्टोत्सवयोर्नित्यं स्मरति च[8] तां दर्शनं तथा तस्य[9] ।

---

१ सत्यमसत्यमिति भूतपूर्वमभूतपूर्वं वा अन्यया तस्य छन्नं संभोगं कथयेत्—अन्याभिरपि काम्यतेऽयं सुभग इति ख्यापनार्थम् ।

२ तथा कथयन्ती चास्याः मुखनेत्रादिगतं भावसूचकमाकारम्, अथ च आक्रियते गृह्यते भावोऽनेनेति व्युत्पत्त्या भावसूचको वाक्कायव्यापारोऽप्यत्राकारशब्देन गृह्यते, तमेव प्रपञ्चयति सापि सहासमित्यादिना ।

३ सम्भाषेत ।

४ नायकस्येति शेषः ।

५ रहस्यं किञ्चिद् वक्ष्यतीति विचारेण । 'संदर्शयति विविक्ते पत्याख्यानं नियोगं च ।' ख० ।

६ मदनविकारसूचनार्थम् । यथा मालतीमाधवे ३येऽङ्के कामन्दकी मालत्या आकारं सूचयन्त्याह—

शाकुन्तलादीनितिहासवादान् प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी चिराय चिन्तास्तिमितत्वमेति ॥ इति ।

७ कटकोत्तरीयप्रभृति प्रीतिदायं दूत्यै ददाति ।

८ इतः परवर्तीनि 'पुनर्दर्शनानुबन्धं विसृजति । साधुवादिनी सती किमिदमशोभनमभिधत्से इति कथामनुबध्नाति । नायकस्य शाठ्यचापल्यसम्बद्धान् दोषान् ददाति ।' इति सूत्राणि नानूदितानि ग्रन्थकृता ।

९ तस्य=नायकस्य । 'तस्याः' ग० ।

जातं कथां च काङ्क्षति तत्कथितां स्वस्य चाकथने[1]॥ २० ॥
दूत्या मनोरथेषु च कथितेष्वेतस्य नायकस्यैषा ।
हसति न[2] किञ्चित् कथयति संदर्शितशोभनाकारा ॥ २१ ॥
उपबृंहयेदनुगतैरेनामिह नायकस्य चैवैषा ।
गुणकथनैरुपबृंहणमुचितं चासंस्तुता भवति[3] ॥ २२ ॥
[4]आकारासंसर्गेऽसंस्तुततायां तथाऽनयोरुभयोः ।

---

तस्याः = दूत्याः पुनर्दर्शनं काङ्क्षतीत्यर्थः 'पुनर्दर्शनानुबन्धं च विसृजति' इति सूत्रात्। एतत्सर्वं मालतीमाधवे३येऽङ्के मालत्या आकारमनुवदन्त्या कामन्दक्या इत्थमुक्तम्–

व्रजति विरहे वैचित्र्यं नः प्रसीदति सन्निधौ
रहसि रमते प्रीत्या वाचं ददात्यनुवर्तते ।
गमनसमये कण्ठे लग्ना निरुध्य२ मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥ इति ।

'स्मरति च नादर्शनं तथा तस्य ।' ख० ।

---

१ 'पूर्वप्रवृत्तं च तत्संदर्शनं कथाभियोगं च स्वयमकथयन्ती तयोच्यमानमाकाङ्क्षति ।' इति सूत्रम् । ( पूर्वं जातं नायकसंदर्शनं कथायोगं च पूर्ववृत्तं लज्जया स्वयमकथयन्ती दूत्या कथ्यमानमिच्छति तेनापि सुखोपलम्भादित्यर्थः ।

'नान्यत्कथां प्रवक्तुं तत्कथितं स्वस्य वा कथने' ख० ।

२ 'च' ख० । 'पौरुषाकारा' ख० । 'दूत्येनां दर्शिताकारा नायकाभिज्ञानैरुपबृंहयेत् ( अत्यन्तमनुरक्तां कुर्यात् ) असंस्तुतां तु गुणकथनैरनुरागकथाभिश्चावर्जयेत् ।' इति सूत्रम् ।

३ 'सा संस्तुता भवति' ख० ।

४ को दूतीकर्मप्रयोगस्य विषय इत्यत्र आचार्याणां मतभेदमाह–आकारासंसर्गे इत्यादिना । 'आकारात्संसर्गान्' ख० । ययोर्नपरिचयो न चाकारदर्शनं न तत्र दूतीकर्मप्रयोग

दूतीकर्मनिषेधं कथयत्यौद्दालकिः शास्त्रे ॥ २३ ॥
सत्याकारा ऽऽसङ्गेऽसंस्तुततायां[1] तथोभयोरनयोः ।
दूतीकर्मविधानं संमतमिह बाभ्रवीयानाम् ॥ २४ ॥
संस्तुततायां सत्यामसति[2] तथाऽऽकारभूरिसंसर्गे ।
दूतीकर्मविधानं संकथयति गोणिकापुत्रः[3] ॥ २५ ॥
वात्स्यायनस्तु कथयति युगलाभावेऽपि दूतिकाकर्म[4] ।
प्रत्ययतो[5] मतमेतत्सम्यगसम्यक् परेषां हि ॥ २६ ॥
तासामुपायनानि[6] हि मनसोऽभिमतानि दर्शयेदेव ।
अनुलेपनताम्बूले वासोऽञ्जनमङ्गुलीयं[7][8] च ॥ २७ ॥

---

इत्यौद्दालकिः । परिचयाभावेऽपि आकारसंसर्गे सति दूतीकर्मप्रयोग इति बाभ्रवीयाः । परिचये सत्यप्याकारसंसर्गाभावे दूतीकर्मप्रयोग इति गोणिकापुत्रः । परिचयाकारसंसर्गयो-रुभयोरभावेऽपि दूतीकर्मप्रयोगो दूत्याः सामर्थ्यात् (दूती हि कदाचित् अनुरूपौ युक्ताविमौ परस्परस्येति कौतुकात् अप्रेरितापि घटयितुमीष्टे । वक्ष्यति 'चैतद्दूतीभेदप्रदर्शनावसरे-ऽत्रैवाऽध्याये ) इति वात्स्यायनः ।

---

१ 'कारेऽसंगे' ख० ।

२ 'सत्यां मनसि' आ० पु० ।

३ 'कथयति श्रीगोणिकापुत्रः' आ० पु० ।

४ 'दूतिका कार्या' आ० पु० ।

५ दूत्याः प्रत्ययात् (समर्था दूती असंस्तुताहष्टाकारयोरपि योगं कर्तुमिति विश्वासात् )।

६ 'तस्या' ख० । तासाम्=असंस्तुतानाम् । उपायनानि ताम्बूलादीनि नायकेन प्रहितानि दूती दर्शयेत् ।

७ 'ताम्बूलमनुलेपनं स्रजमङ्गुलीयकं वासो वा'--इति सूत्रानुसारं तु 'वासः स्रजम्'-इति पाठ उचितः ।

८ 'अङ्गुलीयकम्'-आ० पु० ।

प्रहितेष्वेषु च कुत्रचिदर्थानुगतो[1] भवेल्लेखः ।
चिन्हे[2] नखरदशनयोश्चिह्नान्यन्यानि चैतस्य[3] ॥ २८ ॥
कुङ्कुमविरचितमञ्जलिमपि वासासि नायकः शुभं रचयेत् ।
साभिप्रायाकृति किल पत्रच्छेद्यं चरेदस्यै[4] ॥ २९ ॥
आपीडं च विरचयेत्पत्रं श्रवसश्च[5] लेखसंयुक्तम् ।
तेषु[6] मनोरथकथनं तत्पुरतो[7] नायकः कुरुते ॥ ३० ॥
संगमयेदथ दूती सिद्धां तां कालदेशयोः शुभयोः ।
देवानामभिगमने[8] यात्रोद्यानीयलीलायाम् ॥ ३१ ॥
संतरणे[9] सरितामथ परिणययज्ञोत्सवे तथा व्यसने ।
अग्न्युत्पाते जनपदचक्रारोहे[10] तथा चैव ॥ ३२ ॥
व्यापारे प्रेक्ष्या(क्षा)या व्यापारान्तरमपीत्थमादिष्टम् ।

---

१ 'अर्थान्वितो' आ० । अत्र छन्दोभङ्गः । अर्थानुगतः = नायकाभिप्रायगर्भः ।

२ 'चिह्नं'—ग० । चिह्नैः ख० ।

३ नायकस्य ।

४ अस्यै एनां गृहीतभावां कर्तुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति चतुर्थी । चरेत् = रचयेत्, दर्शयेदिति वा धातूनामनेकार्थत्वात् ।

५ पत्रंश्रवसः = कर्णपत्रम् ।

६ 'तेन' ख० । तेषु = आपीडादेरन्तर्निधाय प्रेषितेषु लेखेषु ।

७ 'दूतीषु रतोऽपि' ख० ।

८ 'वेदाना'-आ० पु० । देवतापूजार्थं गमने । 'पाशे पानीयलीलायाम्' ख० । यथा मालतीमाधवे शङ्करपुरयात्रायां कामन्दक्या मालतीमाधवयोः संगमः करितः ।

९ जलक्रीडायाम् ।

१० 'आग्रयणोपवनादौ वप्रारोहे तथा चैव' ख० ।

इति बाभ्रवीयरीत्या सुगमः[1] कालस्य निर्णयो दूत्याः ॥ ३३ ॥
भवनेषु सखीप्रभृतेः सङ्गं सुखमाह गोणिकापुत्रः ।
विदितनिष्क्रमप्रवेशे देशे वात्स्यायनः प्राह ॥ ३४ ॥
अष्टविधेष्टा दूती प्रथमा कथितेह सा निसृष्टार्था।
उपलभ्यार्थमभीष्टं नायकयोः स्वेह(न) या कर्त्री[2] ॥ ३५ ॥
संस्तुतयोः सा प्रायो दारनियोगेऽतथाविधयोः ।
अनुरूपयोः कुतुकतो घटनं स्यादप्रयोगेऽपि[3] ॥ ३६ ॥
उपलभ्य चैकदेशं शेषं कुरुते मितार्था सा ।
दृष्टान्योन्याकृत्योर्विरलेक्षणयोरियं[4][5] भवति ॥ ३७ ॥
विदिता[6] तु पत्रहारी संदेशं (या) समर्पयेदुभयोः ।
दृष्टस्वभावयोः सा भवति च संसृष्टयोर्यूनोः ॥ ३८ ॥

---

१ 'सुभगः' आ० पु० ।

२ स्त्रीपुंसयोराशयमादधाना स्वयं च कार्यं प्रतिपादयन्ती ।

सृष्टार्थिका सा परदारयोगे दूती प्रयोज्या बहुधा सुधीभिः ॥ इति भरतः ।

सा निसृष्टा दूती प्रायेण संस्तुतयोर्विषये कार्यं साधयति । दारनियोगे=दारैः स्त्रिया नायिकया नियोगे नायिकया प्रयुक्ता तु सा अतथाविधयोः=असंस्तुतयोरपि संयोजयित्री भवति । नायिकया इष्टो हि नायकोऽसंस्तुतोऽपि सुसाधन इति प्रायेण दृश्यते, न तु नायिका तथेति भावः ।

३ 'संघटनं स्यात् प्रयोगाय' ख० । एतदपि निसृष्टार्थाया एव कृत्यम् ।

४ 'इष्टोन्योन्या'–आ० पु० । 'दृष्टोन्योन्या'--ग० ।

५ इयं–मितार्था । विरलेक्षणयोः-विरलदर्शनयोः (कदाचिन्मिथो दृश्यमानयोः न तु सातत्येन)

६ 'विदितार्थानुपहारा' ख० ।

देशस्य बोधनार्थं यदि वा कालस्य वाऽथ दूत्येन[1]।
[2]प्रहिता स्वयमभिगच्छेद्रमणं सा चा[3]ऽस्तबोधेव ॥ ३९ ॥
[4]स्वप्नोपभोगकथनं कुर्याद्गोत्रस्य भूरि च स्खलितम्।
निन्देदस्य च भार्यां[5,6] तद्व्यपदेशाद् वदेदीर्ष्याम् ॥ ४० ॥
[7]नखदशनचिन्हदात्री[8] भवते संकल्पिता पुरा चाहम्।
इत्यभिधात्री[9] पृच्छेत्तद्भार्यातः स्वसौन्दर्यम्[10] ॥ ४१ ॥

---

१ 'सा' ( पत्रहारी ) 'प्रगाढसद्भावयोः संसृष्टयोश्च देशकालबोधनार्थम्।' इति सूत्रम्।

२ दूती द्विविधा परार्था आत्मार्था च। तत्र निसृष्टार्थादयः परार्थाः। आत्मार्था च स्वयंदूती। इयमपि द्विविधा अन्यया प्रयुक्ताऽऽत्मार्थसाधिनी अनितरप्रयुक्ता स्वयमितरस्या दूतीभूय तत्संदेशश्रावणद्वारेण स्वार्थसाधिनी च। तत्राद्याया लक्षणमाह प्रहितेत्यादिना। द्वितीयाया लक्षणमितोऽनन्तरं 'दूत्यदम्भात्तामभिसंधाय' इत्यादिना ( ४२ श्लो० ) वक्ष्यति।

३ 'सा त्वाप्तबोधा स्यात्' ख०। ४ अद्य स्वप्ने त्वयाहं किलोपभुक्तेति।

५ 'गोत्रस्खलितं भार्यां चास्य निन्देत्।' इति सूत्रम्। 'गोत्रस्खलितं निन्देत्—ईदृशं तदस्मदीयं नाम येन त्वया भर्ता ह्वयत इति। भार्यां चास्य निन्देत्—युक्तमाह्वयितुं यदेयं रूपवती स्यात्।' ( ज० मं० )।

६ 'तदनुपदेशाद्वा' ख०।

७ नखदशनचिन्हितं वा किञ्चिद्दद्यात् भावसूचनार्थम्।

८ 'दात्रा भवता' ख०।

९ 'भवतिह' आ० पु०। 'भवाने' ग०। 'भवतेऽहमादौ दातुं सङ्कल्पितेति चाभिदधीत' इति सूत्रम्।

१० तद्भार्यातः नायकभार्यापेक्षया स्वस्य सौन्दर्यमाधिकं न्यूनं वेति ( अहं रूपवती भवद्भार्या वेति ) नायकं पृच्छेत्।

निजदूती[1] कथिता सा द्रष्टव्येयं विविक्तदेशेषु ।
ग्राह्या च दूत्यदम्भात्तामभिसंधाय संदेशम् ॥ ४२ ॥
कथयन्ती या रमणं सिद्धं कुर्याद्भवेत्तथा[2] सापि ।
एषा हि तां[3] तदीयाद्धृदयाद्दूरीकरोत्येव ॥ ४३ ॥
अनया कथितो ज्ञेयो नायकताभागिहान्यदूतश्च[4] ।
निजदूतीवल्लोके दृश्यन्ते यत्स्वयंदूताः ॥ ४४ ॥
नायकभार्यां मुग्धां विश्वास्यानुप्रविश्य यन्त्रणया[5] ।
पृच्छति नायकचेष्टां शिक्षादात्री च योगेषु ॥ ४५ ॥
साकारं भूषयति च कोपमथ ग्राहयेत्तथैवैनाम् ।

---

१ स्वयंदूती—

दौत्यमिषेणान्यस्या नायकमेत्यात्मगुणभावान् ।
व्याजेन वेदयन्ती स्वार्थं घटयेत् स्वयंदूती ॥ इति रतिरहस्ये तल्लक्षणम् ।

२ 'प्रतिग्रह( दूत्य )च्छलेनान्यामभिसंधायाऽस्याः सन्देशश्रावणद्वारेण नायकं साधयेत्तां चोपहन्यात् सापि स्वयं दूती ।' इति सूत्रम् ।

३ ताम्=यस्याः सन्देशश्रावणद्वारेणात्मार्थं साधयति ।

४ '–पि दूतश्च' आ० पु० । '–नु दूतश्च' क० । '–दिहात्मदूत्या च' ख० ।

यथा अन्यया प्रहिता दूती स्वयमेव नायकमभिगच्छति, आत्मगुणभावान् वेदयन्ती इतरस्याः संदेशकथनद्वारेण वा स्वार्थं साधयति । तथैव अन्येन प्रहितो दूतोऽपि स्वयमेव स्वगुणभावैरावर्ज्य नायिकामभिगच्छति, इतरनायकसंदेशश्रावणद्वारेण वा नायिकां स्ववश्यां कृत्वा तद्धृदयान्नायकमपास्यति । सोऽयमपि स्वयंदूत इति बोध्यम् ।

५ यन्त्रणया कथञ्चिद्यत्नमास्थाय । 'अयन्त्रणया' इति सूत्रे ( अयन्त्रणया=प्रयासं विना ) ।

निर्वर्तयति[1] नखव्रणमित्याचर शिक्षयित्वैवं[2] ॥ ४६ ॥
आकारयति च रमणं द्वारेणैतेन[3] गू( मू )ढ[4]दूती सा।
भार्यादूती[5][6] मूढा भार्या चेद्दूततो याति ॥ ४७ ॥
यत्र[6] च्छलतः कश्चन बालादिः प्रेषितो[7] भवेत्तत्र।

---

१ संप्रयोगाभिलाषख्यापनार्थम्। 'निर्वपति' आ० पु०।

२ चपलोऽयमन्यस्यां सक्तः किमस्ति येन कुप्यसीत्युक्त्वा कोपं ग्राहयेत्। इत्याचर=एवं प्रतिपद्यस्व यथाहमाचक्ष इति तत्तद्बोधयित्वा तां नायकप्रतिकूलां विदध्यात्-अस्यां प्रतिकूलायां नायको मयि अनुकूलो भविष्यतीति।

३ '-तैनेव' ग०। ४ 'मूढदूती' इति सूत्रे।

५ यथा नायिका लज्जया स्वयं दौत्यमप्रतिपद्यमाना मुग्धां नायकभार्यां यत्नाद् विश्वास्य अनुप्रविश्य च नायकस्य चेष्टितानि पृच्छन्ती, योगान् शिक्षयन्ती साकारं मण्डयन्ती तस्याः शरीरे नखदशनपदार्पणेन संप्रयोगाभिलाषं व्यञ्जयन्ती तया एव द्वारेण स्वाभिप्रायावेदकमाकारं ग्राहयन्ती नायकं साधयतीति मुग्धा नायकभार्या मूढदूती उक्ता तदर्थस्यापरिज्ञानात्, तथा नायकोऽपि लज्जया यदा स्वयं स्वयंदौत्यं न प्रतिपद्येत तदा सोऽपि मूढो ( विज्ञा हि विकल्पयति मामनया योजयतीति ) स्वभार्यां नायिकया विश्वासेन योजयित्वा तया ( स्वभार्यया ) एव द्वारेण आत्मन आकारं ग्राहयन्, कलाकौशलं च प्रकाशयन् नायिकां साधयेदिति भार्यादूतीमाह—भार्यादूतीत्यादिना।

६ यत्र स्वभार्याद्वारा कार्यं साधयितुं न शक्यते तत्र अदोषज्ञाया बालाया हस्ते अदुष्टेन बालक्रीडनकाद्युपायेन गूढलेखगर्भां नखदशनपदाङ्कितां वा स्रजं कर्णपत्रं वा प्रेष्य तद्द्वारा स्वाभिप्रायं गमयित्वा नायिकां साधयेत्। मुग्धया नायकभार्यया ( मूढदूत्या ) कार्यसंपत्त्यसंभवे ( नायिकाऽप्येवं नायकं साधयेत् ) इति बालारूपां तदर्थस्याकथनात् मूकदूतीमाह–यत्र च्छलत इत्यादिना।

७ 'प्रेक्ष्यते' आ० पु०। 'प्रेष्यते' ग०।

सा स्यान्मूका दूती लेखादिः कर्णपत्रादौ ॥ ४८ ॥
[1]प्राक्प्रस्तुतार्पणार्थं स्वजनाग्राह्यार्थकं[2] तु या वाक्यम् ।
आ(औ)दास्ये श्रावयति स्याद्दूती साऽनुवाचे(तै)व[3] ॥४९॥
प्रत्युत्तरस्य याचनमनयोर्युक्तं[4] तथै(यै)व स्यात् ।
एष न्यायः कथितः शास्त्रज्ञैर्गू(मू)ढदूत्यां च ॥ ५० ॥
भेदः[5] प्रयोक्तृभेदाद्भार्यादूत्यास्तु गू(मू)ढदूत्याः स्यात् ।
इत्थं दूतीभेदा निर्णीता वीरभद्रेण ॥ ५१ ॥

---

१ यत्र पुनर्बालायाः (मूकदूत्या) अप्यगोचरस्तत्र पूर्वस्तुतार्थलिङ्गसंबद्धमन्यजनाग्राह्यं लौकिकार्थं द्व्यर्थं वा (यथा शाकुन्तले गौतम्या सह गच्छन्त्या शकुन्तलया 'लतागृह संतापहर आमन्त्रये त्वां पुनर्दर्शनाय' इति लतागृहामन्त्रणव्याजेन लताप्रच्छन्नो दुष्मन्त आमन्त्रितः,यथा वा मालतीमाधवे लवङ्गिकया माधवो मालत्यनुरागं बोधितस्तथाविधम् )वचनं कयाचिदुदासीनया नाम श्रावयित्वा तेन स्वाभिप्रायं बोधयित्वा नायिकां साधयेत् (नायिकाप्येवं नायकं साधयेत् ) इति वातदूतीमाह प्राक् प्रस्तुतार्पणार्थमित्यादिना ।

२ 'अन्यजनाग्रहणीयम्' इति सूत्रम् ।

३ अनुवाता दूती = वातदूती । अनुगतो वातशब्दो यस्य तथाभूतो दूतीशब्दः संज्ञात्वेन यस्याः प्रयुज्यते सा वातदूतीत्यर्थः । 'हिरण्यपूर्वं कशिपुं प्रचक्षते' ( माघे ) 'धनुरुपपदमस्मै वेदमभ्यादिदेश' ( किराते ) इत्यादिवत् । विशेषार्थमत्रत्या सर्वंकषा घण्टापथश्च विलोक्यः । 'आदावादायास्मै प्रापयति सा तु वाचैव' । ख० ।

४ 'पालनमनयोर्युक्तं तथैव भूयः स्यात्' ख० । अनयोः प्रकारयोः तथा (भार्यादूत्या मूकदूत्या च) एव द्वारेण प्रत्युत्तरं प्रार्थयेत् (नायिकापि च तथैव प्रत्युत्तरं दद्यात् नायकप्रयुक्तेनैव विधिना) अनयैव रीत्या मूढदूत्यामपि तयैव द्वारेण उत्तरप्रत्युत्तरदानादाने बोध्ये ।

५ ननु उभयत्र नायकभार्याया एव सत्त्वे भार्यादूतीमूढदूत्योः को भेदः ? तत्राह प्रयोक्तृभेदाद्भेदः—भार्यादूत्या नायकः प्रयोक्ता, मूढदूत्याश्च नायिकेति ।

६ निसृष्टार्थादयस्तिस्रो दूत्यो मुख्याः, स्वयंदूत्यादयश्च तासामेव विशेषाः ।

विधवेक्षणिका दास्यो भिक्षुक्यः शिल्पकारिकाश्चैव।
विश्वासं[1] त्वरया सा (ता) विदधति कार्यं तु दूतीनाम् ॥५२॥
पतिविद्वेषं[2] तस्यां जनयति निर्वर्णयेच्च रम्याणि।
चित्रान् रतिसंयोगानतियत्नाद्दर्शयेच्चैव ॥ ५३ ॥
नायकमतमनुरागे[3] पुनरपि रतिकौशलं तथा तस्य।
अधिकस्त्रीभिः प्रार्थनमथवाऽवष्टम्भमाख्याति[4] ॥५४॥
अर्थमसंकल्पितमपि[5] कारणतश्चापि भूरि वोत्सृष्टम्[6]।
आवर्तयन्ति दूत्यो वचसामिह[7] कौशलेनैव ॥ ५५ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
परवल्लभाधिकरणे रचितोऽध्यायश्चतुर्थोऽसौ ॥ ५६ ॥



---

"एवमन्येऽपि ( भेदाः ) यथासंभवमत्रैव द्रष्टव्याः यथाहुर्बाभ्रवीयाः—
पुत्रिका चित्ररूपाणि पशवः शुकसारिकाः।
सर्वेषां गूढभावानां दूतकर्माणि कुर्वते ॥ इति।" (ज० मं०)
'शुकसारिकादयोऽपि प्रतिमाप्राया विदग्धानाम् दूतकर्म कुर्वते' (१३।१०४ र० र०)।

---

१ 'विश्वासात्त्वरमाणा' ख०। गृहेषु गमनागमनयोरप्रतिषिद्धत्वात्।

२ संक्षेपेण दूतीकर्माण्याह–पतिविद्वेषमित्यादिना। 'निर्वर्तयेच्च' ख०।

३ 'नीणायकमतमनुरागं पुनरपि नातिकौशलं तथा तस्य।' ग०।

४ अवष्टम्भम् = नायिकाविषयं निश्चयम्–तदङ्कशयनं श्मशानशयनं वेति।

५ प्रथमेऽधिकरणे पटुतादयो दूतगुणा उक्ताः। तेषां पटुता प्रधानमिति दर्शनार्थमाह--अर्थमसङ्कल्पितमित्यादिना।

६ 'असङ्कल्पितमप्यर्थमुत्सृष्टं दोषकारणात्।' इति सूत्रम्।

७ 'आवर्तयति रत्योत्संवसामिह—' ग०।

# अथ पञ्चमोऽध्यायः ।



अथ पञ्चमे प्रपञ्चं कुरुते पञ्चेषुचरितकृतिचतुरः ।
चतुरुदधितीरसंचरदरितरुणीगीतशौर्यश्रीः ॥ १ ॥
परवल्लवल्लभानुरागो नोचितं इति भूमिवल्लभप्रभृतेः ।
आचारादिह तेषामाचरणं सर्वलोकानाम् ॥ २ ॥
सूर्योदयादिवत् किल नैषां गुप्ता भवेदसौ चेष्टा ।
अनुकरणे च निरर्गलमेतस्याः सर्वलोके स्यात् ॥ ३ ॥
तस्माद्गर्हितमेतैस्त्यक्तव्यं भूमिवल्लभप्रमुखैः ।
राष्ट्रोपप्लवतः स्यादेषां दोषोऽधिकस्तस्मात् ॥ ४ ॥
यदि परदाररुचिः स्याद् भूपालोऽन्योऽथवा समस्तेन ।

---

१ 'गोपित–' आ० पु० । 'रोचिति–' ग० ।

२ 'प्रसृतेः' आ० पु० ।

३ 'सवितारमुद्यन्तं त्रयो लोकाः पश्यन्ति अनूद्यन्ते । गच्छन्तमपि पश्यन्त्यनुप्रतिष्ठन्ते च ।' इति सूत्रम् । पश्यन्तीति सूर्यचरितदर्शनम् कुर्वन्ति । अनूद्यन्त इति तस्मिन्नुद्गते सुप्ताः प्रबुध्यन्त इति तच्चरितानुकरणं कुर्वन्ति सवितुर्लोकेषु श्रेष्ठत्वात् । एवं देशान्तरे गच्छन्तं तं पश्यन्तीति चरितदर्शनम्, अनुप्रतिष्ठन्त इति यथास्वं क्रियासु प्रवर्तन्ते इति चरितानुकरणम् । यथैतदेवमेव लोकश्रेष्ठानां राज्ञामपि चरितं लोके दृश्यतेऽनुक्रियते च—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ( गीता ) इति ।

४ तेन ( राज्ञा ) समः ।

नाचरति तत्प्रकाशं परभवनस्य प्रवेशं[1] च ॥ ५ ॥
तत्र[2] ग्रामाधिपतेर्यूनोऽथ हलोत्थ[3]वृत्तिपुत्रस्य।
ग्रामीणानां पत्न्यो वचनेनैवेह साध्याः स्युः ॥ ६ ॥
धर्षण्य[4]स्ताः कथितास्ताभिः सह योगमाचरेच्चैव।
( गोष्ठान्तरे च ) विष्टौ[5] कोष्ठागारप्रवेशे च[6] ॥ ७ ॥
द्रव्यस्य[7] च निष्क्रमणे प्रतिसंस्कारे च मन्दिरस्याऽथ।
क्षेत्रस्य कर्माणि[8] तथा कर्पासादे[9]स्तथाऽऽदाने ॥ ८ ॥
सूत्र[10]प्रतिग्रहेऽपि च वस्तूनां विक्रयक्रययोः।
विनिमयवलारवेषा(ऽ)मन्येष्वेवंविधेष्वपि च ॥९॥
[11]गोऽध्यक्षस्य च योगो व्रजयोषाभिः सहाऽथ निर्दिष्टः।

---

१ 'प्रवेशेन'।

२ राजप्रभृतिभिर्दुर्लोकदुराचारप्रवृत्तिरोधाय शिष्टगर्हापरिहाराय च पारदारिकं नाचरणीयम्। अप्रतिरोद्धव्यकारणवशादवश्यमाचारितव्ये तु वक्ष्यमाणाः (प्रच्छन्नप्रकाशभेदाभ्यां द्विविधाः) योगाः प्रयोज्याः। तत्र लोकानुकरणीयचारिता ईश्वरा द्विविधाः—क्षुद्राः मुख्याश्च।

३ 'शिलोञ्छ—' आ० पु० ख० ग०।

४ 'चर्षण्यः' इति सूत्रे। धर्षणीसंज्ञा एव वचनमात्रसाध्या न तु सर्वा एवेत्यर्थः।

५ पेषणकुट्टनकण्डनादीनि विष्टिकर्माणि तेषु। 'गोष्ठान्तरप्रविष्टः'।

६ 'वा' आ० पु० ख०।

७ धान्यादेः।

८ शालिगोपनादौ।

९ आदिना ऊर्णाऽतसीशणवल्कलानि सूत्रोक्तानि।

१० सूत्रस्य कर्तनिकाभिः कर्तितस्य प्रतिग्रह आदाने।

११ गोऽध्यक्षस्य। 'सर्वत्र विभाषा गोः' इति पाक्षिकं पूर्वरूपम्।

प्रव्रजितादिभिरुक्तः सूत्राध्यक्षस्य संयोगः ॥ १० ॥
रात्रावटतः(ने) सुकरः कुलटायोषाभिरेष सम्बन्धः ।
वनजाक्षीभिर्वणिजां नागरि(र)काध्यक्षयोः प्रोक्तः ॥११॥
नगरस्थानां सुदृशां सुवसन्तादिविदेशऽ(-दिषुवेश-)भवनेषु ।
क्रीडान्तःपुरिकाभिः सह निर्दिष्टा प्रमोदाय ॥ १२ ॥
योषा नगरविभूषा आपानकप्रादरादिमाः कृत्वा ।
गत्वान्तःपुरिकाणां पृथगावासं यथासङ्गम् ॥ १३ ॥
आसित्वा च कथाभिः पूजां लब्ध्वा प्रयाताश्च ।
निष्क्रममुपप्रदोषं कुर्युः कुशलाः सरोजाक्ष्यः ॥ १४ ॥
संभाषेत प्रणिहितदासी राज्ञस्तु पूर्वसंसृष्टां ।

---

१ प्रव्रजितादिभिः कर्तनिकाभिः । आदिना विधवा अनाथाश्च ग्राह्याः ( ता हि सूत्रकर्तनलब्धेन वेतनेन जीवनयात्रां निवर्तयन्ति ।

२ 'सूनाध्यक्षस्य' ख० ।

३ रात्रावटतो नागरस्य दण्डपाशिकस्य कुलटाभिः स्वगम्यमभिसरन्तीभिर्मर्मज्ञत्वात्सुकरः संप्रयोगः । क्रेत्रीभिर्विक्रेत्रीभिश्च वनजाक्षीभिः ( सुन्दरीभिः ) वणिजामध्यक्षस्य ( पण्याध्यक्षस्य ) इत्यर्थः । 'वणिजाम्' इत्यस्य 'नागरिकाध्यक्षयोः' इत्यत्र समस्तेन अध्यक्षशब्देन अभीष्टः सम्बन्धो नोपपद्यत इति महती खल्वेतेन ( अन्यैश्चानेकैरेवंविधैः स्थलैः ) अशक्तिर्द्योत्यते ग्रंथकर्तुः ।

४ 'प्रदेश' ख० ।

५ 'आपावक' आ० पु० ग० । 'आयावक' ख० ।

६ 'सपीतीश्च' ख० ।   ७ 'विभ्रम' ख ।

८ 'संभाविते प्रणिहिता' ख० ।

९ 'संसृष्टान्' आ० पु० ग० । राज्ञा प्रयुक्ता प्रयोज्यया पूर्वसंसृष्टा दासी तामु-

तत्र प्रयु(यो)ज्य नारीं रमणीयं दर्शयेदेनाम् ॥ १५ ॥
प्रागेव स्वे भवने स्थितिभाजं तां प्रतीयमाब्रूयात् ।
क्रीडायामस्यां तव राजगृहस्थानि रम्याणि ॥ १६ ॥
कार्याणि दृष्टिविषये तानि च काले नियोजयेदेनम् ।
मणिभूमिकां प्रवालैः कुट्टिमकं बाह्यदेशस्थम् ॥ १७ ॥
वा[1]टीं मृद्वीकामपि समु[2]द्रगेहं च भित्तिसंचा[3]रान् ।
प्रतिभवनचित्रकर्म व्याघ्रादेः पञ्जराणीह ॥ १८ ॥
या[4]नि पुरस्थितलोकैरुक्तान्युत्कृष्टवस्तुजातानि ।
तान्यप्यस्याः कुर्याद्विषये दृष्टेः सरोजाक्ष्याः ॥१९॥
ईशानुरागमस्यामेकान्ते भूरि वर्णयेन्निपुणा ।
आयतिमस्यै कथयेत्सह राज्ञा संप्रयोगेण ॥ २० ॥
प्रतिपन्नां योजयति च राज्ञेमामप्यमन्त्रानिश्रावम् ।
स्वयमीशोऽप्रतिपन्नामा[6]र्ग्येने(-मागत्ये-)होपचारेण ॥ २१ ॥

---

यानप्रासादादितत्तद्रमणीयदर्शनव्याजेन संकेतितस्थानं नयन्ती वार्ताप्रसङ्गेन तस्यां राज्ञोऽनुरागं तेन भाविनमुत्तमं परिणामं च वर्णयन्ती प्रतिपन्नां तां राज्ञा संप्रयोजयेत्। अप्रतिपद्यमानां तु राजा स्वयमुपचारैः सान्त्वयित्वाऽनुकूलयेदिति ।

---

१ 'साटीं' ख० ।

२ 'समुद्गगेहं' आ० पु० ग० ।

३ भित्तिवर्तिनो गूढमार्गान् ।

४ अयं श्लोक आदर्शपुस्तके त्रुटितः ।

५ 'भक्षे पाने सविश्रम्भम्' ख० ।

६ 'माढ्ये' ख० ।

सान्त्वनया र[1]ञ्जयति हि सं[2]भूया[3]ऽनुरक्तमुत्सृजेदुचितम् ।
[4]अन्तर्नित्यं प्रेष्याः पत्युर्दाराः प्रयोज्यायाः ॥ २२ ॥
तत्र प्रणिहितदासी राज्ञः [5]सदृशं परं तु पूर्वेण ।
अन्तःपुरिका कुर्यात्सह वा प्रीतिं प्रयोज्याभिः ॥ २३ ॥
प्रसृतप्रीतिच्छ[6]लतो नियोजयेद्दर्शने पुनर्यत्नात् ।
पूजितनिवि[7]ष्टभुक्तापान(पीत)व[8]तीं राजदासीति[9] ॥२४॥
विख्याता विज्ञाने यस्मिंस्तद्दर्शना[10]र्थमाहूता ।
अन्तःपुरस्थया किल दासी तु[11]ल्या तु पूर्वेण ॥ २५ ॥

---

१ 'परिजयति' ख० ।

२ संभूय–तया सह संप्रयोगं कृत्वा ।

३ अत्र छन्दोभङ्गः । 'संभूय च सानुरागं विसृजेत्' इति सूत्रम् । 'संभूय सरागमुत्सृजेदुचितम् ।' इति पाठः छन्दोऽनुकूलः स्पष्टार्थश्च ।

४ 'प्रयोज्यायाश्च पत्युरनुग्रहोचितस्य दारान्नित्यमन्तःपुरमौचित्यात् प्रवेशयेत् ।' इति सूत्रम् । 'अनुरक्तं नैवमुत्सृजेद्यस्मात्' ख० ।

५ तत्र राजप्रयुक्ता दासी पूर्वोक्तेन विधिना तां राज्ञा संप्रयोजयेदित्यादि पूर्ववज्ज्ञेयम् । एवमग्रेऽपि ।

६ 'प्रीतिं बलतो' ग० ।

७ प्रविष्टां पूजितां भुक्तामापीतवतीमिति क्रमः । स च छन्दोभङ्गभयान्नापेक्षितो ग्रंथकृता ।

८ 'वतीं' ग० आ०पु० । 'निविष्टकुशला पानवतीं' ख० ।

९ राजदासीत्यादि पूर्ववद्योज्यम् ।

१० 'दर्शनात्समाभूता' आ० पु० ।

११ 'कार्या' ख० ।

प्राप्तानर्थकृशाङ्गीं[1] ब्रूयादित्थं हि भिक्षुकीवाक्यम्।
अन्तःपुरिका राजनि सिद्धैषा मद्वचःस्था च ॥ २६ ॥
करुणारसार्द्रहृदया त्वामनया योजयाम्यहं सदया।
वारयति सा त्वदीशानर्थं[2] मद्वाक्यतः स्नेहात् ॥ २७ ॥
प्रतिपन्नां द्विस्त्रिस्तां[3] प्रवेशयेत्साऽभयं चाँऽस्यै[4]।
दद्यादभयश्रवणात् सोत्साहां प्रणिहितेत्यादि ॥ २८ ॥
वृत्तौ कृताभिलाषा अभितप्ता[5] ये तथा महामात्रैः।
बलतोऽन्यैर्निगृहीता व्यवहारे दुर्बलाश्चैव ॥ २९ ॥
भोगेन स्वीयेन च निस्संतोषाः क्षितीश्वरे प्रेम।
काङ्क्षन्ति ये बहिर्गतमनुजे[6] व्यक्तिं तथेच्छन्ति ॥ ३० ॥
बाध्या ये च सजातिभिरेतानभिवाधितुं[7] तथेच्छन्ति।
ये सूचकास्तथाऽन्ये कार्यपरा व्यसनयुक्ताश्च ॥ ३१ ॥
अनयैव व्याख्याता भार्या एषां विशिष्य गणितानाम्।
श्रीवात्स्यायनमुनिना तदनु श्रीवीरभद्रेण ॥ ३२ ॥

---

१ उद्भूतानर्थस्य भीतस्य वा भार्याम्। 'कृशाङ्गी–भिक्षुकीं' ख०।

२ तव पत्युरापदम्।

३ पश्चाज्जातपरिचया स्वयमेव प्रवेक्ष्यतीति परिचयार्थं द्विस्त्रिः प्रवेशयेत्।

४ 'सपंचास्यै' आ० पु० ग०। 'स्वयञ्चाऽस्यै' इति भवेत्।

५ 'अभितस्ता' ग०।

६ ये बाह्यजनेषु व्यक्तिं ( प्रसिद्धिं ) वाञ्छन्ति। 'राजयजनेषु पंक्तिमिच्छताम्' इति सूत्रम्।

७ 'वञ्चितुं' आ० पु०।

अन्येन वा प्रसक्तां सह निगृहीतां प्रयोज्यवनितां[1] तु।
तेन[2] वियोज्य[3] निविष्टां कुर्यादन्तःपुरे राजा ॥ ३३ ॥
प्रणिधिबलेन तदीयं यदि वा परिदूष्य नायकं[4] राजा।
अपराधिनां (नः) कलत्रं निग्रहदम्भान्नयेदन्तः ॥३४॥
इति योगाः प्रच्छन्ना राजकुमारेषु कामतन्त्रेषु।
परमन्दिरे प्रवेशो युक्तो नैषामनिष्टत्वात् ॥ ३५ ॥
कोट्टाधिप[5]माभीरं परभवनगतं निदेशतो भर्तुः (भ्रातुः[6])।
रजको जघान तस्मात् परभवनं[7] नोचितं राज्ञाम् ॥ ३६ ॥
अश्वाध्यक्षो हतवान् काशीशानं[8] तथा जयत्सेनम्[9]।
तस्मात् परगृहयानं दारार्थे नोचितं राज्ञाम् ॥ ३७ ॥
देशप्रवृत्ति[10]योगात्परदारेषु प्रकाशतो भूयः।
दृश्यन्ते क्वचिदेते न त्वेवं सर्वदेशेषु ॥ ३८ ॥

---

१ 'वनिताभिः' ख।

२ पञ्चमीविभक्तिरत्रोचिता, छन्दोभङ्गभीत्या तु ग्रंथकृता तृतीयैव प्रयुक्ता।

३ 'नियोज्य' आ० पु०।

४ 'प्रणिधिना चाऽऽयतिमस्याः संदूष्य राजनि विद्विष्ट इति' इति सूत्रम्।

५ 'कोट्याधिप' आ० पु०।

६ 'भ्रातृप्रयुक्तो रजको जघान' इति सूत्रम्।

७ प्रवेष्टुमिति शेषः।

८ काशीपतिम्।

९ 'जुषत्सेनं' आ० पु० ख०। 'जयसेनम्' इति सूत्रे।

१० प्रच्छन्नयोगानभिधाय संप्रति प्रकाशयोगान् कथयति देशप्रवृत्तीत्यादिना।

प्रत्ता जनपदकन्या दशमेऽहनि सा ह्युपायनं नीत्वा ।
अन्तःपुरं पविष्टा भुक्तोत्सृष्टाऽऽन्ध्रभूपेण ॥ ३९ ॥
रात्रौ च वत्सगुल्मे या च महामात्रकामिनी सुभगा ।
सा याति क्षितिवल्लभसेवायै तेषु देशेषु ॥ ४० ॥
सरसा जनपदयोषाः प्रीत्यपदेशेन चार्धमासादौ ।
वैदर्भान्तःपुरिका अन्तःपुरगाः प्रकुर्वन्ति ॥ ४१ ॥
दृश्याः स्वकीयभार्या ददति परे प्रीतिदायमेवेह ।
अरान्तकप्रभूता भूरि महामात्रराजभ्यः ॥ ४२ ॥
नृपनारीभिः क्रीडां सह कर्तु देशकामिन्यः ।
सौराष्ट्रे नृपगेहं यान्त्येकैकं तथा मिलिताः ॥ ४३ ॥
एवं परदारविधौ देशे देशे प्रवर्तितो भूपैः ।
विलसतितरां प्रयोगो नहि राज्ञां वारकः कोऽपि ॥४४॥
श्रौते पथि प्रयातैर्भूपैर्यैरेष निन्दितः पन्थाः ।
जितषड्वर्गा भूमिं ते विजयन्ते वघेलाद्याः ॥ ४५ ॥

---

१ 'सख्युश्वमितं' आ० पु० । 'साधुवायनं' ख० । 'साग्युवामनं' ग० ।

२ उपभुक्ता एव विसृज्यत इत्यान्ध्राणां देशप्रवृत्तिरियम् ।

३ 'दक्षिणापथे सोदर्यौ राजपुत्रौ वत्सगुल्मौ ताभ्यामध्यासितो देशो वात्सगुल्मक इति प्रतीतः' ( ज० मं० )।

४ 'मेवायत्तेषु देशेषु' ख० ।

५ 'वार्थ' आ० पु० । अर्धमासादौ मासं मासार्धं वेति । 'चार्धरात्रादौ' ख० ।

६ 'देशप्रवृत्तितो' आ० पु० ।

७ 'विलसति च संप्रयोगो' ख० ।

८ भूमिविजयस्य कारणं षड्वर्गजय इति ।

राज्ये वघेलभोग्ये[1] परदारेभ्यः परे जना विमुखाः ।
बीजं तत्र नरपतेः परनारीभोगवैमुख्यम् ॥ ४६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
परवल्लभाधिकरणे पञ्चम इह संचितोऽध्यायः ॥ ४७ ॥



१ 'भोज्ये' ख०

# अथ षष्ठोऽध्यायः ।

अथ पञ्चमस्य षष्ठं स्पष्टयितुं जायते स सोद्योगः ।
अष्टदिगन्तनिविष्टा यदरिवधूः(धू) कष्टमाधत्ते ॥ १ ॥
[1]अन्तःपुररक्षणतोऽनीक्षणमेवाऽन्यपुंसि तत्स्थानाम् ।
एकोऽनेकसमानो भर्ता तृप्तिस्ततो[2] नासाम् ॥ २ ॥
तस्मात् परस्परं ताः कुर्युस्तृप्त्यै प्रयोगसंयोगान् ।
धात्रेयिकां सखीं वा दासीं वा पुरुषवेषेण ॥ ३ ॥
कृत्वाऽऽकृति[3]संयुक्तैः कन्दैर्मूलैरपैर्द्र[4]व्यैः ।
निर्वर्तयेयु[5]रुचितं स्वाभिप्रायं विशालाक्ष्यः ॥ ४ ॥
प्रतिमा वा पुरुषार्याः[6] [7]प्रस्फुटलिङ्गास्तया पुरस्कार्याः ।
राजानो वा कृपया विनापि भावं ध्वजं कृत्वा[8] ॥ ५ ॥

---

१ 'नान्तः पुराणां रक्षणयोगात् परपुरुषदर्शनं विद्यते पत्युश्चैकत्वादनेकसाधारणत्वाच्चातृप्तिः । तस्मात्तानि प्रयोगत एव परस्परं रञ्जयेयुः ।' इति सूत्रम् । तान् प्रयोगानाहाऽग्रिमेण धात्रेयिकां सखीं वेत्यादिना ।

२ 'तृप्तिस्ततस्तासाम्' ख० ।

३ 'शिश्नाकृति' ख० ।

४ 'रथद्रव्यैः' क० ग० । आकृतियुक्तैरिति पुरुषेन्द्रियसंस्थानवद्भिः ।

५ 'स्यताः' ख० ।

६ 'पुरुषीयतः' ग० ।

७ 'अव्यक्तलिङ्गाः' इति सूत्रम् ।

८ कृत्रिमं ध्वजं कट्यां बद्ध्वा ।

अभिगच्छन्ति च बह्वीरेकरजन्यां हि यावदर्थं ताः ।
[1]स्नातायां प्रीत्या वा साभिप्रायोऽथ वासेन ॥ ६ ॥
[2]अवलम्ब(ऽ)वृत्तिपुरुषाः स्त्रीप्रतिमायां वियोनिमुख्येषु ।
अथ के[3]वलोपमर्दात्स्वाभिप्रायं नियच्छन्ति ॥ ७ ॥
योषावेषान् पुरुषानन्तःपुरमध्यभूषणीभूताः ।
सह परिचारिकयान्तः प्रवेशयन्तीह कामेन ॥ ८ ॥
प्रयतेरन्नथ तेषामानयने साधुदर्शितायतिकाः ।
अभ्यन्तरसंसृष्टा धात्रीपरिचारिकामुख्याः ॥ ९ ॥
सुकरप्रवेशतामिह निःसा[4]रत्वं तथैव तद्भूमेः ।
विस्तारं मन्दि[5]रंगं रक्ष[6]कवर्गप्रमादं च ॥ १० ॥

---

१ 'यस्यां तु विनाप्यभिप्रायं प्रीतिर्वासक ऋतुर्वा तत्राभिप्रायतः प्रवर्तन्ते(अन्यासां भावनिर्वृत्तिं तु कृत्रिमध्वजेनैव कुर्वन्ति) इति प्राच्योपचारः । इति सूत्रम् । 'स्नान्या वा प्रीत्या वा तदभिप्रायोऽथवा प्रयासेन' ख० ।

२ यथा अलब्धपुरुषाः स्त्रियो पुरुषप्रतिमाऽपद्रव्यादिभिरुक्तोपायैरात्माभिप्रायं निवर्तयन्ति एवमलब्धस्त्रीकाः पुरुषा अपि स्त्रीप्रतिमादिभिरिति । 'स्त्रीयोगेणैव पुरुषाणामप्यलब्धवृत्तीनां वियोनिषु विजातिषु स्त्रीप्रतिमासु केवलोपमर्दाच्चाभिप्रायनिवृत्तिर्व्याख्यात।' इति सूत्रम् ।

३ केवलोपमर्दः सिंहाक्रान्तकरेण ध्वजस्य मन्थनम् । यथोक्तम्—

भुवि विन्यस्तहस्ताभ्यामवष्टभ्योत्कटासनः ।
बाहुमध्ये विमृद्नीयात् सिंहाक्रान्तेष्वयं विधिः ॥ इति ।

४ निःसारो निःसरणं विद्यते यत्र सा निःसारा ( अर्शआदेराकृतिगणत्वान्मत्वर्थीयोऽच् ) तस्या भावस्तत्त्वम् । गुप्तनिर्गममार्गसहितत्वमित्यर्थः । 'निःसारणतां' ख० ।

५ 'बहिरङ्गं' ख० ।

६ 'रक्षण' आ० पु० ।

निर्वर्णयेयुरेता परिजनवर्गेष्वनित्यतां[1] चैव।
असतार्थेन[2] न कुर्युः प्रवेशमेषामिमाः कथिताः ॥ ११ ॥
न प्रविशेदन्तःपुरमुत्कटदोषं सपातकं पुरुषः।
लोभादथ वा कामाद्दृष्टाऽदृष्टौ[3] यतो दोषौ ॥ १२ ॥
अन्याहूतौ[4] हेतून् विचार्य यत्नादिहाऽभिवक्तव्यान्।
विहितोपायस्ताभिः प्रविशेदपि पातकाभीतः ॥ १३ ॥
कक्षा दृष्टा बहुशोऽसंकीर्णा सापसारणा बहुधा।
रक्षककृतप्रमादाल्लभमानोऽल्पांस्तथा तान्[5] वा ॥ १४ ॥
प्रविशेदन्तःपद(पुर)मिह युक्त्या नैवाऽत्र दर्शयेद्भीतिम्।
प्रमदावनावगूढं[6] प्रोषितभूपालकं चैव ॥ १५ ॥
निष्क्रममारचयेदिह शक्त्या प्रतिवासरं ततो ह्येषः।

---

१ राजपरिजनो नित्यं न संनिहित इति।

२ विना भावमदुष्टदूषणे स्वस्य सुप्रवेशिताद्यभावे च उपावर्तनीयस्य जनस्यापकारसम्भवात्।

३ दृष्टो दोषो रक्षिप्रभृतिभिर्ग्रहणे प्राणहानिः अदृष्टदोषस्तु धर्मशास्त्रनिषिद्धराजकलत्रगमनेऽधर्मः।

४ अन्तःपुरिकाभिर्बहुश आहूयमानस्तु कारणानि विचार्य ताभिरेव विहितप्रवेश-निर्गमोपायोऽर्थबुद्ध्या प्रविशेदिति।

५ तान् = रक्षकान् अल्पान् लभमान इति सम्बन्धः। 'रक्षककृतप्रमादालभमानाः सावकाशं वा।' ख०।

६ प्रमदवनस्थाने प्रमदावनशब्दप्रयोगः छन्दोभङ्गभयात्।

उक्त्वा[1] हेत्वन्तरमथ संसृष्टं स्याद्बहीरक्षैः[2] ॥ १६ ॥
आत्मानं[3] कथयेदपि सक्तं परिचारिका बहिर्गमना ।
भवति यदा विदितार्था तदलाभोत्थं तथा दुःखम् ॥ १७ ॥
अन्तःप्रवेशिनीभिर्दूतीकल्पं समाचरेत्सर्वम् ।
राजप्रणिधिनिबोधे[4] भूयादतिसावधानोऽसौ ॥ १८ ॥
यत्र गृहीताकारा द्रष्टुं योग्या प्रयोज्या स्यात् ।
दूत्यास्तत्रावस्थितिरुचिता स्वीये[5] तु संचारे ॥ १९ ॥
तस्मिन्नपि रक्षिषु तु[6] प्रभवेत् परिचारिकापदेशो हि ।
कुर्यात्तस्यां नियतानुबन्धांश्चक्षुषश्चैव[7] ॥ २० ॥
कुर्वीतापि निवेदनमाकारस्यैषवेङ्गितस्याऽथ ।

---

१ अन्तःपुरिकाः स्वयं नागरकान् परिचारिकादिद्वारेण उपावर्त्य अन्तःप्रवेशयन्तीति तद्वृत्तमुक्तम् । साम्प्रतं यो नागरकोऽन्तःपुरिकासंप्रयोगे जातभावः स्वयमुपावर्तते तस्य वृत्तमाह--उक्त्वा हेत्वन्तरमथेत्यादिना ।

२ बाह्यै रक्षिभिरित्यर्थः । अमुकेन सम्बन्धेन त्वं मे भ्राता भगिनीपतिर्वेत्यादिहेत्वन्तरमपदिश्य संसृष्टः स्यात् ( प्रीतिं कुर्यात् ) ।

३ 'अन्तश्चारिण्यां च परिचारिकायां विदितार्थायां सक्तमात्मानं रूपयेत् ।' तदलाभाच्च शोकमन्तःप्रवेशिनीभिश्च दूतीकल्पं सकलमाचरेत् ।' इति सूत्रम् । विदितार्था = मय्यनुरक्त इति ज्ञातवती ।

४ 'राज्ञीप्रतिनिधिबोधे' ख० ।

५ 'दूत्यास्त्वसंचारे–' इति सूत्रम् । ग्रंथकृत्संमतःतु 'दूत्याः स्वसंचारे–'इति सूत्रपाठः प्रतिभाति 'स्वीये तु संचारे' इत्यनुवादात् ।

६ तस्मिन्नपि प्रदेशे स्थितेन रक्षिषु परिचारिकासक्तिव्यपदेशः कार्यः ।

७ चक्षुषोऽनुबन्धाः पुनः पुनः प्रेक्षणम् ।

देशविशेषेऽवसरे संप्रेष्यं चित्रकर्मादि[1] ॥ २१ ॥
दत्तं तथा ( या ) च पश्येत्प्रत्युत्तरमाविशेदसौ पश्चात् ।
अस्या नियते[2] (ताऽऽ) गमने देशे छन्नं स्थितिं कुर्यात् ॥ २२ ॥
रक्षिपुरुषरूपो वा प्रविशेत्तत्प्रोक्तवेलयाप्येषः ।
वेष्टित आस्तरणादौ[3] पुटभेदे[4] वा गमे[5] योग्यः ॥ २३ ॥
नष्टच्छायो यदि वा संरचयेन्निर्गमं तथा वेशम्[6] ।
सर्पाक्ष्यादिभिरेष च्छायाहर्ता भवेद्योगः ॥ २४ ॥
नाकुलहृदयं[7] तुम्बीफलरोचकमुरगाक्षिसंयुतं कृत्वा ।
पचति[8] कृतान्तधूपं ( मं ) पिष्टं समभागतोयेन ॥ २५ ॥
अभ्यक्ताक्षिर(क्षोऽ)नेन तु नष्टच्छायो[9] हि तत्र संचरति ।
एतत् ( तं ) परीक्ष्य योगं कुर्यात्स्यादन्यथाऽनिष्टम् ॥ २६ ॥
निर्हारे द्रव्याणां पानरसस्य प्रवेशकाले च ।
आपानकोत्सवार्थं चेटीनां संभ्रमे चैव ॥ २७ ॥

---

१ चित्रकर्म प्रयोज्यायाः स्वयमालिखितं चित्रम् । आदिना द्व्यर्थानि गीतकानि, क्रीडनकानि—नखदशनचिह्निततताम्बूलस्रगापीडप्रभृति, अङ्गुलीयं च ।

२ 'नियतोपगमे—छन्नः' ख० ।

३ 'आसरणादे' ख० ।

४ सपिधानमञ्जूषादौ ।

५ गमने ।  ६ प्रवेशम् ।

७ 'नकुलं हृदया' आ० पु० ग० । 'नकुलीप्रियया' ख० । 'नकुलहृदयं चोरकतुम्बीफलानि सर्पाक्षीणि चान्तर्धूमेन पचेत्' । इति सूत्रम् । 'तुम्बीफलबकमुरगाक्षि' ख० ।

८ 'पर्वणि कृतान्तचक्षुः' ख० ।

९ 'नष्टच्छायेग तत्र' आ० पु० ग० । 'गतत्रपश्चरति' ख० ।

[1]व्यत्यासे भवनानां व्यत्यासे चैव रक्षकस्यापि ।
यात्रायामुद्याने यात्रां कृत्वा प्रवेशे च ॥ २८ ॥
दीर्घे प्रोषितभूपे निष्क्रमणं वा प्रवेशनं सूनोः (नः) ।
एतच्चैव विधेयं कौमुद्यादौ[2] प्रयत्नेन ॥ २९ ॥
[3]मर्म ज्ञात्वाऽन्योन्यं राजगृहस्था इहैककार्याश्चेत् ।
अन्यासामपि कुर्युर्भेदं स्वेष्टस्य संसिद्ध्यै ॥ ३० ॥
वह्वीः स[4] दूषयित्वा कार्यस्यैवाऽस्य (कस्य[5]) चार्पणे निरतः ।
सद्योऽभेद्यतया किल कामानुगुणं फलं याति ॥ ३१ ॥
[6]देशे क्वापि च पुरुषाः संमत्या हन्त रक्षकाणां हि ।
प्रविशन्त्यन्तःपुरमिह रक्षा नैवापरान्तेषु ॥ ३२ ॥
आभीरकवनितानां क्षत्रियसंज्ञैरिहान्तरै[7]र्योगः ।

---

१ भवनपरिवर्तनसमये वस्तुसम्भारेषु एकतो भवनादपरत्र नीयमानेषु तत्संबद्धे जनसंभ्रमे रक्षकव्यत्यास इति स्वनियतवेलामतिवाह्य एकेषु यामिकेषु विश्रामार्थं गच्छत्सु अपरेषु च तत्स्थानमधितिष्ठत्सु संभ्रमवशादसावधानेषु ।

२ आदिना दीपिकासम्बाधे सुरङ्गामार्गेण च ।

३ समानकार्या अन्तःपुरिकाः अन्योऽन्यस्य मर्म ( व्यभिचाररूपं ) ज्ञात्वा शेषाणां मर्मभेदं कुर्युर्यथा ता अपि समानधर्मिण्यः सत्यः तासां मर्म नोद्घाटयेयुः स्वमर्मोद्घाटनभीतेरिति भावः ।

४ अन्तःपुरिकासंघः ।

५ अस्य ( एकस्य वा ) चारित्रखण्डनाख्यस्य कार्यस्य परस्परस्याऽर्पणे तत्परः समानमर्मत्वादन्योन्यमर्मगोपनतत्पर इत्यर्थः ।

६ एवं प्रच्छन्नमन्तःपुरिकावृत्तमुक्त्वाऽधुना देशप्रवृत्त्या प्रकाशं तदाह— देश इत्यादिना ।

७ आन्तरैः=अन्तःपुररक्षाधिकृतैः ।

नागरकान् प्रेष्याभिः[1][2] प्रवेशयन्तीह (वत्स) गुल्मानाम् ॥३३॥
वैदर्भिके सपत्नीपुत्रानुपभुञ्जते नार्यः।
स्त्रैराजके यथेच्छं संबन्धाद्यै रहो निरताः ॥ ३४ ॥
गौडीयानथ दारान् भृत्याद्या[3] भुञ्जते गतोद्वेगाः।
सैन्धवभूपतिनारीः कर्मकरास्तत्समानाश्च[4] ॥ ३५ ॥
हैमवतान्तःपुरभुवि रणितमु(णउ) गृह्य चार्थतः सहसा।
साहसिकाः प्रविशन्ति हि कामाशुगलक्ष्यतां प्राप्ताः ॥ ३६ ॥
प्रच्छाद्य तरुणमेकं मिलिता वङ्गादिसंभवाः सुदृशः।
पुष्पप्रदाननिरता[5] नव दश वा भुञ्जते स्वैरम् ॥ ३७ ॥
रक्षेद्दारान् स्वीयानेभ्यः परपुरुषयोगहेतुभ्यः।
कामोपधाविशुद्धानन्तःपुररक्षिणः कुर्यात् ॥ ३८ ॥
इत्येके[6] तेऽप्यन्ये[7] भयलोभाभ्यां हि योजयन्त्याभिः।

---

१ 'प्रेष्याभिः सह तद्वेषान्नागरकपुत्रान् प्रवेशयन्ति वात्सगुल्मकानाम्।' इति सूत्रम्।

२ 'प्रेक्षाभिर्निवे' आ० पु० ग०।

३ आद्यशब्देन ब्राह्मणा मित्राणि दासाश्चेटाश्च।

४ येऽनिषिद्धसंचाराः।

५ 'पुष्पदाननियोगान्नगरब्राह्मणा राजविदितमन्तःपुराणि गच्छन्ति पटान्तरितश्चैषामालापः। तेन प्रसङ्गेन व्यतिकरो भवति वङ्गाङ्गकलिङ्गानाम्। संहत्य नवदशेत्येकैकं युवानं प्रच्छादयन्ति प्राच्यानामिति।' इति सूत्रम्। 'पुष्पेषुदान' ख०।

६ आचार्याः।

७ ते अन्तःपुररक्षिणः।

तस्मादुपधात्रयशुचिरधिकारीत्याह गोणिकापुत्रः ॥ ३९ ॥
वात्स्यायनश्चतुर्थीं कथयति धर्मोपधासु संशुद्धिम् ।
धार्मिकतयैव लब्धा शुद्धिः सर्वेति तत्त्वार्थः ॥ ४० ॥
दूत्या केऽपि परीक्षणमाहुर्निजचारुपङ्कजाक्षीणाम् ।
दूतीयोगाद्दुष्टा भवन्त्यदुष्टास्ततो नैतत् ॥ ४१ ॥
अतिगोष्ठ्यङ्कुशविगमौ व्यभिचाररतिस्तथा स्वकान्तस्य ।
निर्यन्त्रणं च पुरुषैस्तद्वद्वासो विदेशेषु ॥ ४२ ॥
वृत्तेरथोपघातः स्वीयायाः स्वैरिणीषु संसर्गः ।
ता हि स्वभावयोजनमन्यत्राऽप्याचरन्त्येव ॥ ४३ ॥
ईर्ष्यालुता च पत्युर्गमनोप(नाव)स्थानमन्यदेशेषु ।
स्त्रीणां विनाशकारणमुपदिष्टं कामशास्त्रेषु ॥ ४४ ॥
परदारकथितयोगान् दृष्ट्वा शास्त्रेण शास्त्रतत्त्वज्ञः ।
स्वस्त्रीषु सावधानः स्त्रीकृतदोषं न संयाति ॥ ४५ ॥

---

१ कामभयार्थोपधात्रयशुद्धोऽधिकारी अन्तःपुररक्षाया इति ।

२ 'कारीति गो' आ० पु० ग० ।

३ 'पधान' ख० ।

४ 'योगा इष्टा' आ० पु० ।

५ 'यतो नार्यः ख० ।

६ निर्यन्त्रणत्वम् ( भावप्रधानो निर्देशः ) नियन्त्रणाभाव इत्यर्थः ।

७ ताः स्वैरिण्यः अन्यत्र अस्वैरिणीष्वपि स्वं भावं व्यभिचाररूपं योजयन्ति ( अस्वैरिणीरपि स्वैरिणीर्विदधति ) ।

८ 'मेतच्चात्रा' ख० ।

पाक्षिकतया प्रसिद्धा दृष्टोपायाः प्रयोगयोगा हि।
धर्मार्थयोर्विलोपाद्विरुचिः परदारके पुरुषैः[1] ॥ ४६ ॥
तस्मात्स्वदाररक्षादक्षत्वार्थं प्रसिद्धमन्दाक्षैः।
शास्त्रमिदं पठनीयं न तु केवलमन्यनाशाय ॥ ४७ ॥
मुनिनाऽऽरब्धमपीदं श्रेयस एवेह सर्वलोकानाम्।
न तु परयोषिद्दोषानाधातुं प्रक्रमस्तस्य ॥ ४८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनाऽनुसृते।
परवल्लभाधिकरणे षष्ठः पुष्टः कृतोऽध्यायः ॥ ४९ ॥



१ स्यादिति शेषः।

Vidya Vilas Press, Gopalmandir Lane Benares.

# अथ वैशिकं नाम षष्ठमधिकरणम् ।

## प्रथमोऽध्यायः ।

अथ वैशिकं प्रविशदं कर्तुमसौ प्रक्रमं समातनुते ।

---

१ नायिकात्रयेण समागमोपायमभिधाय वेश्याभिः सह तं वक्तुं वैशिकाधिकरण-मारचयति--अथेत्यादिना । न चैतेन वेश्यागमनं शास्त्रेणानुज्ञायत इति शङ्क्यम् । धनार्जनप्रधानानां सत्यानुरागहीनानां केवलं धनमात्रां दृष्ट्वा तस्या आत्मसात्करणाय कामुके बहिरनुरागं प्रकाशयन्तीनां सकलदोषैकानिलयानां जनसमाजदुष्कृतपरिणतीनां कृतान्तदूतीदेश्यानां वेश्यानां आरम्भे स्वादून् परिणामे विषमयान् विषमान् व्यवहारान्–नितान्तं निष्प्रेमताम् , अत्यन्तमर्थप्रवणताम् , विचित्रा वञ्चनचातुरीः, तांस्तान् मायाप्रयोगान् , आहितातुलतिरस्कारसम्भारान् निष्पीडितार्थकामुकखलीकारप्रकारांश्च सम्यक् प्रदर्श्य शीलं धनञ्च रक्षितुं वेश्याभिगमनिवृत्तेरेव शास्त्रेण अभिप्रेतत्वात् । अत एव वेश्याकूटपाटवनिदर्शकस्य समयमातृकाख्यकाव्यस्यान्ते श्रीक्षेमेन्द्रः 'श्रीमतां भूतिरक्षार्थं रचितोऽयं स्मितोत्सवः' इति तत्प्रयोजनमुदाजहार । वेश्याभिगमो हि शिष्टगर्हितः महानर्थसार्थमूलं लोकद्वयभ्रंशकरोऽधर्म्यः । 'पशुवेश्याभिगमने प्राजापत्यं विधीयत' इत्यादिना धर्मशास्त्रे प्रायश्चित्तविधानात् । ( अद्यत्वे अधमवेश्यासङ्गमस्य बीभत्सरोगोत्पादनेन प्राणहरत्वं तु प्रसिद्धमेव ) किञ्च—

वेश्याभिर्विवशीकृतः कुपुरुषः संजायते दुर्गतो
दौर्गत्येन दुरोदरे निपतितः स्वं हारयत्येव सः ।
रुद्धो द्यूतकरैः करोति विधुरश्चौर्यं ततस्तस्करो
बध्यः स्यान्नृपतेरहो नु विषया( गणिका–)ऽऽसक्तेर्दुरन्ता गतिः ॥

( मुग्धोपदेशे ५२ श्लो० )

**तद्वन्तृदोषबोधास्तज्ज्ञानामेव जायन्ते ॥ १ ॥**
**अथ वैशिकाधिकरणे वैशद्याय प्रवर्तते निरतः ।**
**प्रथमाध्यायव्याख्यामाख्यातुं[2] कीर्तितो रिपुभिः ॥ २ ॥**
**अध्यायाः षडमुष्मिन्नधिकरणे तत्र चादिमेऽध्याये ।**
**गम्यविचारो गमनोपावर्तनहेतुसंविधेयः[3] ॥ ३ ॥**

---

इति दृष्टादृष्टेभयदोषानुबद्धत्वादात्महिताभीप्सुभिर्वेश्यासंपर्को मनसापि न ध्येयः। धिक् तान् पुरुषापसदान् ये गङ्गासमाः पावनप्रभवाः कुलीनाः स्वपत्नीर्विहाय कर्मनाशासमासु सकलसुकृतौघनाशिनीसु धनापहारैककामासु वारवामासु निमज्जन्ति । क्वान्तर्वहिःस्फुरद्रसाः सुधासरस्यः क्व च बहिर्मनोरमा विषवल्लर्यः !! क्व यज्ञशिष्टामृतम् , क्व च कुकामिकुक्कुरोच्छिष्टभ्रष्टपललपिण्डम् !!! अहो !

लज्जावशावनतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु सक्तिः कथं भवति वारवधूमुखेषु ? ॥
( सुभाषितरत्नभाण्डागारे )

हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी ।
प्रेमतोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥ ( तत्रैव )

इदमनणीयोऽन्तरं कुलवधूवारवध्वोः तस्मात् वारवनिता सर्वथा संपर्कायोग्यैव सतामिति सत्यमाह भर्तृहरिः—

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ इति ॥

---

१ 'ज्ञानादेव' ग० ।
२ 'व्याख्यातुं ।' आ० पु० ।
३ 'संविधेयः' आ० पु० । 'सविधेयः' ग० ।

एतस्मादपरस्मिन् कथितं कान्तानुवृत्तमध्याये ।
अर्थागमे[1] निदानं विरक्तलिङ्गानि चान्यस्मिन् ॥ ४ ॥
तत्र तथा प्रतिपत्तिर्निष्कासस्य[2] क्रमैः समेतस्य[3] ।
शीर्णस्य प्रतिसन्धिः स्यादध्याये तुरीये तु ॥ ५ ॥
तदुपरि लाभविशेषा अर्थादेशानुबन्धमुख्योऽथ ।
पण्यस्त्रीषु विशेषः षष्ठे षष्ठस्य[4] निर्णीतौ ॥ ६ ॥
इत्थं षष्ठाधिकृतावध्यायार्थान्निरूप्य यत्नेन ।
श्रीवीरभद्रवीरो वैशिकवैशद्यमातनुते ॥ ७ ॥
योगं पुरुषैर्वेश्या[5] रतिवृत्तिभ्यां प्रयोजनात्तनुते ।
स्वाभाविकोऽत्र रत्यै वृत्त्यै[6] प्रोक्तस्ततो भिन्नः ॥ ८ ॥
स्वाभाविकवद्रमणो येन प्रत्येति कृत्रिमं तत्तु ।
यत्नादसौ प्रतनुयान्नार्थं लभतेऽन्यथा कर्त्री ॥ ९ ॥
तस्माद्रतेऽर्थहेतावपि रागं[7] दर्शयेदसौ बाह्यम् ।
तत्राप्यलुब्धता[8] स्याद्वृद्ध्यै विश्वासयोगस्य ॥ १० ॥

---

१ 'गमो' आ० पु० ।

२ 'निष्कामस्य' आ० पु० ।

३ 'समेते वा' आ पु० ग० ।

४ 'स्पष्टस्य' आ० पु० ग० ।

५ पुंवेश्ययोस्तुल्येऽपि रतिफले वेश्यैव प्रयोक्तृतया तत्राधिकृता न पुमान् वेश्याजीविकायास्तत्प्रतिबद्धत्वादित्याह–वेश्या पुरुषैर्योगं तनुत इति ।

६ जीवनोपायभूतार्थप्राप्त्यर्थम् । ततो भिन्नः=कृत्रिमः ।

७ रागं दर्शयेदिति रागिणीषु कामपरासु पुंसां विश्वासयोगात् न त्वर्थपरासु ।

८ 'तत्राप्यनुद्धता स्याद् वृद्ध्यै विश्वासयोगश्च ।' आ० पु० ग० ।

आयतिसंरक्षार्थं नित्यमलङ्कारयोगिनी भूयात्।
भूयान्नरेन्द्रमार्गप्रहितदृगन्ता च दृश्या च ॥ ११ ॥
न स्यादतीव विवृता पण्यसधर्मत्वमात्मनो मत्वा।
नायकमावर्चयेदथ कुर्यात्तद्वारणं परतः ॥ १२ ॥
आत्मानर्थनिवारणमात्मार्थानां च साधनं रचयेत्।
परिभूयेत न गम्यैर्यैस्तान् कुर्यात् सहायान् हि ॥ १३ ॥
धर्माचरणे (-धिकरण-) निष्ठो दैवज्ञो रक्षकश्च विक्रान्तः।

---

'अलुब्धतां च ख्यापयेत्तस्य निदर्शनार्थम्। (रागस्य स्वाभाविकत्वख्यापनार्थम्)' इति सूत्रम्। अलुब्धताख्यापनेन सक्ताद्वित्तादानमपि स्वाभाविकं सिद्धं भवति।

---

१ आयतिः–प्रभावः।

२ आवर्जयेत्। यैर्नायकावर्जनादीनि कार्याणि सिध्येयुस्तान् सहायान् कुर्यादिति। यदुक्तम्—

सुहृज्जनार्जनं कुर्यात् पूर्वं वारविलासिनी।
वेश्यानां पद्मिनीनां च मित्रायत्ता विभूतयः॥
सुहृद्भिरेव जानाति कामुकानां धनं गुणम्।
हृदयग्रहणोपायं शीलं रक्तापरक्तताम्॥ (स० मा० ५।६०–६१) इति।

३ अन्याश्च नायकमवच्छिन्द्यात्।

४ 'धर्माकिरणानिष्ठा' ग०। 'धर्माचरणनिविष्टो' ख०। 'धर्माचरणानिष्ठा' आ० पु०। 'धर्माधिकरणस्थाः' इति सूत्रम्। धर्माधिकरणनिष्ठः प्राड्विवाकप्रभृतिः। रक्षकः नगररक्षाधिकृतः। इमावनर्थघातिनावर्थसाधकौ च। दैवज्ञः तया संयोगे ते वृद्धिर्भविष्यतीति गम्यं प्रोत्साह्य योजयतीत्यर्थसाधकः। सकलः कलाभिज्ञः। 'कलाग्राहिणः' इति सूत्रम्। ('कलेति। ये नायिकातः कलां गृह्णन्ति ते तद्विज्ञतां प्रकाशयन्तो गम्यान् योजयन्ति' ज० मं०)

समविद्यः सकलोऽप्यथ तद्वदमी पीठमर्दाद्या[1]: ॥ १४ ॥
गान्धिकशौण्डिकरजका नापितभिक्षू स्रजां तथा[2] कर्ता ।
इह चैते हि सहाया योगात् कार्यस्य ते[3] ते च ॥१५॥
ऐकाकिनस्तु[4] गम्या वात्स्यायनभाषितैरिति प्रथितम् ।
वृत्तिपरोक्षा[5] धनिनस्तरुणाश्च स्थायिनश्चैव ॥ १६ ॥

---

१ आद्यशब्दाद्विटविदूषकौ ।

२ 'कथा' ख० ।

३ कश्चिदेव किञ्चित् कार्यं साधयति, न तु सर्वः सर्वमिति कार्यवशादन्येऽपि सहायाः स्युरित्यर्थः । "सहायाः प्रियहिताभ्यामनुवर्तनीयाः न त्वभिगम्याः । तदभिगमने स्वार्थमेवैते कुर्युर्न तदर्थम् । " ( ज० मं० )

४ 'केवलार्थास्त्वमी गम्याः' इति सूत्रम् । केवलः अर्थः धनं ( न तु प्रीतियशसी ) येभ्यस्ते केवलार्थाः ।

५ 'अपरोक्षवृत्तिः' इति सूत्रे । "अपरोक्षेति । परोक्षवृत्तेस्तु यदा ततः किञ्चिदेष्यति तदा दास्यतीति कदर्थितं दानं स्यात् । " ( ज० मं० )

अपरोक्षधनो गम्यः श्रीमानपि नान्यथेति निर्दिष्टम् ।
कन्दर्पशास्त्रकारैः कुतः कथा लुप्तविभवस्य ॥

इति सूत्रानुसारिकुट्टनीमतम् । 'वृत्तिपरीक्षा' ख० । वृत्तेः परीक्षा ( कृता ) येषां ते सम्यग्ज्ञातधनागमोपायाः प्रत्यक्षजीविकाः—इत्येवमर्थकल्पनया 'वृत्तिपरीक्षा' इति पाठः कथञ्चित् सूत्रानुसारितां भजते । 'वृत्त्यपरोक्षा' ( वृत्त्या अपरोक्षाः अपरोक्षाः ) इति पाठकल्पनेऽपि सूत्रानुसारिता सुलभा । धनिनस्तरुणा इति—अत्र उभयमिदं दण्डचक्रादिन्यायेन समुदितं कारणम्, न तु तृणारणिमणिन्यायेन व्यस्तम् ( प्रत्येकम् ), इत्थं च केवलं तारुण्यं न गम्यत्वे हेतुः, किन्तु धनवत्त्वे सति तरुणत्वम्, वित्तादानस्य मुख्यत्वात् । केवलं तारुण्यं तु पराङ्गनास्वेव सिद्धत्वे हेतुः, तासां रतिप्राप्तेर्मुख्यत्वात् । वृद्धो धनवानपि अमदत्वान्न सज्जते, निर्धनश्च तरुणत्वेन समदत्वात्

अक्लेशलब्धधनवान् सार्वदिकायस्तथा स्वतन्त्रश्च ।
संघर्षी शुभमानी श्लाघनकः पुंप्रयोगार्थी ॥ १७ ॥
त्यागी स्वभावतोऽपि च राजनि सिद्धस्तथा महामात्रे ।
गुरुशासनातिवर्ती लिङ्गी प्रच्छन्नकामश्च ॥ १८ ॥

सज्जमानोऽपि वित्तदानेऽसमर्थ इति तावुभावपि वित्तालाभाद् गणिकाया न गम्यौ इति भावः ।

१ 'संहर्षः' ख० ग० । संघर्षी-संघर्षवान्-स्पर्धावानन्येन गम्येन बहु ददातीति गम्यः । शुभमानी 'दुर्भगोऽपि यः सुभगमात्मानमभिमन्यते, स दुर्भगत्वमात्मनोऽप्रकटयितुं नायिकामन्यतो व्यावर्तयन् बहु ददाति' ( ज० मं० ) श्लाघनकः=आत्मश्लाघार्थी श्लाघितो बहु ददाति । पुंप्रयोगार्थी नपुंसकोऽप्यात्मनः पुंस्त्वख्यापनार्थं बहु ददाति । राजनि महामात्रे च सिद्धः ( ग्राह्यवचनः ) स्वयमददानोऽपि राजानं महामात्रं वाभिधाय ममेयं प्रीतेति कलाचतुरेति च बहु दापयति । ('प्रच्छन्नकामचारश्च' ख०) प्रच्छन्नकामो लिङ्गी प्रव्रजितः स हि लोको मा ज्ञासीदिति प्रकटमकामयन् कामेन बाध्यमानो बहु ददाति । दैवपरः भाग्यक्षयेण क्षीयते संपत्, नोपभोगेनेति मन्वानो बहु ददाति । 'वैद्यस्य दातृत्वाभावेऽपि व्याधितायाश्चिकित्साकर्तृत्वाद्दातृत्वमेव' ( ज० मं० ) शूरः यः सहायभावेनोपचरितो वित्तवाँश्च । क्षेमेन्द्रेणाप्येते गम्याः—

एको वित्तवतः सूनुः पितृहीनः सुयौवने । इत्यारभ्य—

गतानुगतिको मूर्खः शास्त्रोन्मादश्च पण्डितः ।

नित्यक्षीबश्च वेश्यानां जङ्गमाः कल्पपादपाः ॥ इत्यन्तं ( स० मा० ५।६३–६७ ) परिगणिताः ।एतेभ्यो वेश्यायाः पुष्कलार्थप्राप्तिः सिध्यति । अत्र मुग्धोपदेशकृताऽप्युक्तम्—

अर्थोष्मा पितृलालनं विटघटाश्लेषः प्रियम्मन्यता
तारुण्यं नगरे स्थितिस्तरलता धीः कामशास्त्रं प्रति ॥
संगीतं रजनी विधुर्मधुमदः स्पर्धा सपत्नैस्तथा
वेश्यानामनुरक्तवित्तहरणे कुर्वन्ति साहायकम् ॥ ( ४३ श्लो० ) इति ।

वित्तावमानशीलो दैवपरो ह्येकपुत्रवैद्यौ च ।
एवं शूरप्रमुखा एतासां वल्लभाः प्रोक्ताः ॥ १९ ॥
अधिगम्या गुणबलतः प्रीत्या यशसाऽधिकास्तथा पुरुषाः[1] ।
विद्वान् महाकुलीनः समयज्ञः सत्कविश्चैव ॥ २० ॥
वाग्म्याख्याने कुशलस्तथा प्रगल्भोऽथ विविधशिल्पज्ञः ।
दृढभक्तिः सोत्साहो वृद्धाऽऽसेवी[2] तथाऽनसूयश्च ॥ २१ ॥
आधिव्याधिविहीनो बलवान् मित्रेषु वत्सलश्च वृषः[3] ।
निरतो घटासु गोष्ठ्यामपि च समस्यादिशी(ली)लायाम्[4]॥२२॥
अरविन्दसुन्दरदृशां लासयिता स्यात्तथा प्रणेता[5] च ।
[6]मैत्रो न चासु वशगोऽपरतन्त्रोऽनिष्ठुरश्चैव ॥ २३ ॥
ईर्ष्याविरतो निरतः कलासु चैते तथैव चान्येऽपि ।
नायकगुणा[7] इहोक्ता इत्याद्याः कामशास्त्रेषु ॥ २४ ॥

---

१ 'प्रीतियशोऽर्थास्तु गुणतोऽधिगम्याः' इति सूत्रम् । 'ते तु गुणा उभयोरपि विज्ञेया वैशिके विशदाः' इति पूर्वं ( १।५।२२ ) सूचिताः । नायकगुणा उच्यन्ते 'विद्वान् महाकुलीनः' इत्यादिना ।

२ '–सेवो ऽन–' आ० पु० क० ग० ।

३ व्यवायक्षमः ।

४ 'लीलायाम् ' ख० ।'घटागोष्ठीप्रेक्षणकसमाजसमस्याक्रीडनशीलः' इति सूत्रम् ।

५ 'प्रणेतृत्वमुपदेशेन तासां समुदाचारेषु स्थापनम् । लालनं तासां शरीरस्थितिवैकल्यसंवरणम् ।' ( ज० मं० ) ।

६ मैत्रः करुणावान् । 'मैत्रीपरः सुवशगः'ख०। 'न चासां वशगः' इति सूत्रम् ।

७ 'नायकगुणा इति गुणिद्वारेण गुणाभिधानं बोध्यम् । अत्र प्रकरणानुसारं गम्यगुणा इति वक्तव्ये नायकगुणा इति नायकग्रहणं सामान्यसंज्ञाप्रतिपत्त्यर्थम् । नाय-

अहरहरकदर्यकृ[1]तिर्गोष्ठीकलयोस्तथा सदा निरतिः।
अभ्यर्थनं विशेषे[2] गुणनिरतिर्नैवमर्थेषु ॥ २५ ॥
प्रीत्यादिस्थितशीलं[3] स्थिरमतिजाती च[4] नायकापेक्षा।
लक्[5]षणरूपमधुरता इत्येते स्त्रीगुणाः प्रोक्ताः ॥ २६ ॥
[6]बुद्ध्याचारोऽशीलार्जवः कृतविसंवादः।
अपि [7]दीर्घदूरदर्शी नागरको देशकालज्ञः ॥ २७ ॥

---

कस्यैव कन्यापुनर्भूपरदारवेश्यापेक्षया यथाक्रमं वर उपपत्तिः सिद्धो गम्य इति संज्ञान्तरलाभात्।

---

१ 'वृत्ति' आ० पु० क०ग०। एष पाठः छन्दोभङ्गावहः। अकदर्या कृतिः=करणं=व्यापारः। 'नित्यमकदर्यवृत्तिः' इति सूत्रम्। 'अकदर्यवृत्तिरात्मवृत्त्यनुरोधेनार्थसंचयः' ( ज० मं० )।

२ विशिष्टवस्तुकामना। गुणनिरतिर्नैवमर्थेषु=यथा नायकगुणेष्वनुरक्तिर्न तथा तदीयेष्वर्थेषु।

३ 'शीला' आ० पु० क० ग०।

४ 'जातिश्च' आ० पु० क० ग०। स्थिरमतित्वम्=कर्तव्यमिति निश्चित्यार्थकारित्वम्। स्थिरजातित्वम्=एकजातित्वम्=एकप्रकारत्वम्, न तु मायावित्वम्।

५ लक्षणं सौभाग्यसूचकचिह्नम्। रूपं वर्णः संस्थानं च। मधुरता=माधुर्य=प्रियवाक्यत्वम्।

६ पूर्वं नायकनायिकयोर्विशेषणगुणानभिधाय सम्प्रति उभयोः सामान्यगुणानाह—बुद्धीत्यादिना। 'बुध्याचारसुशीलान्यार्जव' इति 'बुध्याचारौ शीलश्चार्जव–' इति वा पाठे छन्दोऽनुकूलता स्पष्टार्थता च सम्पद्यते।

७ भावप्रधानो निर्देशः। ( गुणिकथनद्वारा गुणाभिधानम् )–दीर्घदूरदर्शित्वम्, नागरकत्वम्, देशकालज्ञतेति। तच्चात्र नोचितम्–नायकनायिकयोरुभयोः साधारणगुणकथनप्रस्तावे 'दीर्घदूरदर्शी' इत्यादिपुंल्लिङ्गनिर्देशात् दीर्घदूरदर्शित्वादेर्नायकगुणत्वमेवाव-

चापललोभस्तम्भाः परिवादक्रोधभूरिहासाश्च ।
दैन्यं चैव पिशुनता वर्ज्याः स्युः सर्वभावेन[1] ॥ २८ ॥
पूर्वा[2]भिलाषितापि च नैपुण्यं कामसूत्रविद्यायाम् ।
त[3]द्वत्तदङ्गग्रन्थे साधारण्या[4]द्गुणा एते ॥ २९ ॥
[5]गुणविरहेण च दोषान् ब्रूमोऽथाऽगम्यभावसंप्राप्तान् ।

---

गम्यते न तु साधारण्येन विवक्षितमपि नायिकागुणत्वमिति दोषात् । ख० पुस्तके तु—

बुद्ध्याऽवरोऽपशीलो ह्यनार्जवः कृतविसंवादः ।
अपि दीर्घदूरदर्शी नागरकोऽदेशकालज्ञः ॥

इति पाठोऽस्ति । तत्र च वर्ज्यनायकसंग्रहो बोध्यः–बुद्ध्याऽवरः ··· अदेशकालज्ञः–इत्येते नायका वर्ज्या इत्यर्थः । इत्थं वर्ज्यनायकानुक्त्वाऽग्रिमेण–'चापललोभस्तंभाः' इत्यादिना वर्ज्यदोषा उक्ताः इति ज्ञेयम् ।

---

१ चापलादिदोषवर्जनं ( गुणः ) इत्यर्थः ।

२ यद्यपि सूत्रे 'पूर्वाभिभाषिता' इत्येव पाठः । ग्रन्थकृतापि चार्थसम्बन्धमविचार्यैव तथैव पाठो धृतः, तथापि 'स्मितपूर्वाभिभाषिता' इति सूत्रे पाठान्तरमुपलभ्यते । येनार्थसम्बन्धः साधु सम्पद्यते । तस्मात्तदनुसारमत्रापि 'स्मितपूर्वभाषितापि च' इत्येवं पाठो भवितुमुचितः ।

३ 'तच्च तदङ्ग–' ख० । 'तदङ्गग्रन्थे' इत्यत्र गकारस्य संयुक्त(ग्र)परत्वात् दीर्घत्वे छन्दोभङ्ग इत्येके । अन्ये तु 'प्राप्य नाभिह्रदमज्जनमाशु' ( १० । माघे ) इत्यत्रेव अत्रापि संयुक्तपरत्वे न छन्दोभङ्गः । न च ''नाभिह्रद' इत्यत्र 'प्रह्रे वा' इति पिङ्गलसूत्रेण विकल्पात्पाक्षिको दीर्घाभाव इति न दोषः, 'तदङ्गग्रन्थे' इत्यत्र तु न तथेति दोष एवेति वाच्यम् । उल्लिखितपिङ्गलसूत्रे प्रह्रसदृशसहृदयश्रुत्यनुद्वेजकयावत्संयुक्तोपलक्षणत्वादत्रापि पाक्षिकदीर्घाभावेनाऽदोषात् ।

४ '–ण्यात्तद्गुणा' ख० ।

५ उक्तगुणविपरीता दोषा बोध्याः । तद्योगाच्च नायका अप्यनायकाः । एव-

कृ[1]मिशकृत्काकवक्त्रः क्षयरोगी प्रियकलत्रगुणकश्च ॥ ३० ॥
परुषोक्तिरथ कदर्यो निर्घृ[2]णगुरुजँ[3]नानिसृष्टचौराश्च ।
दम्भरतो दृढशङ्को बहुतरमन्दाँ[4]क्षसंयुक्तः ॥ ३१ ॥
मानामाँ[5]नापेक्षी द्वेष्यैरीभर्भू[6]यते यश्च ।
एँ[7]ते गम्याऽगम्या (ऽ) यः सक्तो मूलकृँ[8]त्येव ॥ ३२ ॥

---

* सत्स्वपि गुणेषु दोषान्तरयोगात्तेऽगम्या इति ।

---

१ अगम्यानाह—कृमिशकृदित्यादिना । कृमिशकृद्वायसास्यः "कृमिशकृदिति पुरीषमक्षिकेति प्रसिद्धा । सा हि यस्मिन् व्रणे पुरीषं मुञ्चति तत्र कृमिर्भवति, तद्वयच्छुक्रसंसर्गाद्या हि गर्भमाधत्ते सा स्त्री जरां धत्ते । वायसास्यो दुर्गन्धमुखः । यद्वा ( यथा ) काकः शुच्यशुचौ मुखं निक्षिपति एवं (यः) निर्विचारं स्त्रीः कामयते स तासामनभिगमनीयः स्यात् ।" ( ज० मं० ) क्षयरोगी=राजयक्ष्मरोगयुक्तः । 'क्षयी रोगी' इति सूत्रे । क्षयो राजयक्ष्मा । रोगशब्दः सामान्यवाच्यपि लोकप्रसिद्ध्या कुष्ठवाची । द्वयोरपि सांक्रामिकत्वात् ।' (ज०मं०) प्रियकलत्रगुणकः=स्वस्त्रीगुणासक्तः नान्यत्र सज्जते नाप्यर्थं ददातीत्यगम्यः । 'प्रियकलिः कुनेत्रश्च' ख०। (प्रियकलिः कलहप्रियः) ।

२ 'निर्गुण' ख० ।

३ गुरुजनैः पित्रादिभिर्निसृष्टः त्यक्तः ।

४ मन्दाक्षं=लज्जा । इदं सूत्रे न दृश्यते । तत्र तु 'विलज्जः' इत्यस्ति ।

५ 'मानापमानयोरनपेक्षी' इति सूत्रम् । 'मानामानापेक्षी' आ० पु० क० ग० ।

६ 'द्वेष्यैरप्यर्थहार्यः' इति सूत्रम् । 'यो द्वेष्यैरप्यर्थलोभात् संधत्ते स लुब्धः कथं ददाति' ( ज०मं० )

७ 'एते गम्या दोषाः संसक्तौ मूलकृत्ये वा ।' ख० । पाठद्वयमपीदमसङ्गतार्थम् । 'एतेऽगम्यादोषात् संसक्तो मूलकृत्येव ( कृत्ये च )' इति पाठे कृते तु संगतार्थत्वं सम्पद्यते ।

८ मूलकृति=मूलकर्मणि=वशीकरणादिप्रयोगे । मूलकृदिति सम्पदादित्वाद् भावे क्विप् ।

रा[1]गो भयं तथार्थः सं[2]घर्षो वै[3]रिताप्रतीकारः ।
जि[4]ज्ञासा पक्षः किल सखेदः[5] संपर्क इत्याद्याः[6] ॥ ३३ ॥
प्रि[7]यसमता धन्यत्वं रागापनयः सजातिसादेश्ये ।

---

१ साम्प्रतमभिगमनकारणान्याह—रागो भयमित्यादिना

२ "संघर्षः स्पर्धा । यथा देवदत्ताया अङ्गसेनयेति । ततो हि समाकृष्य स्पर्धया मूलदेवः कामितः ।" ( ज० मं० )

३ 'वैरनिर्यातनम्' इति सूत्रे । 'विरचितप्रतीकारः ।' ख० ।

४ विदग्धोऽयमिति श्रूयते तात्किं तथैवेति ज्ञातुमिच्छयाऽपि कश्चिदभिगम्यते । पक्षः=आश्रयः । यमाश्रित्य कार्यं साधयति । 'जिज्ञासापेक्षा' ख० ।

५ 'सुखदः' ख० । 'खेदः परिश्रमः । संप्रयोगो हि जीविका । तत्र चाऽकृतखेदा सहसा क्वचित्क्वचित् प्रवृत्ता विमर्दं न सहते ।' (ज० मं०) संपर्कः सम्बन्धः । इदं सूत्रे न दृश्यते ।

६ आद्यशब्दात् 'धर्मो यशोऽनुकम्पा सुहृद्वाक्यं ह्रीः'—इत्येतानि सूत्रोक्तानि ग्राह्याणि । तत्र धर्मः वेश्याव्रतोक्तविधिनाऽभिगमनेन । वेश्याव्रतं अनङ्गदानव्रताख्यम् । मत्स्यपुराणे ( ७० अ० ) पद्मपुराणे ( सृ० खं० २३ अ० ) च द्रष्टव्यम् । यशः प्रभविष्णूनामाभिगमे कारणम् । तैः संसृष्टो हि लोके ख्यातिं याति । 'यशः कस्याश्चित्तिथौ कामसत्रप्रदानात्' इति जयमङ्गलकारः । 'न मालती कामसत्रदानपरा' (६३६ श्लो०) इति कुट्टिनीमतेऽपि वेश्यानां कामसत्रप्रदानमुद्राङ्कितम् । ह्रीः—यो मान्यवचनः स तद्वचनातिक्रमलज्जयाऽभिगम्यते स्पष्टमन्यत् ।

७ प्रियसमता मत्प्रियस्यायं सदृश इत्यभिगम्यते । धन्यत्वम्—पुण्यवानयं धनवत्त्वाद् रूपवत्त्वाच्चेति । रागापनयः रागस्योत्कटस्य कश्चिदभिगम्यापनयनम् । सजातित्वम्—समानजातीयः कश्चिद्वेश्याप्रसूतः स समानजातिप्रीत्या प्रतिषिद्धोऽनर्थं नोत्पादयेदिति भीत्या वाऽभिगम्यते । 'सजातिरयमिति विप्रतिपन्नायाः कुलयोषितोऽभिगमनकारणमेतत् ।' इति जयमङ्गलाकारव्याख्यानं तु वेश्याभिगमकारणकथनप्रस्तावे कुलयोषिदभिगमकारणोक्तेरप्रकृतत्वादसंगतं प्रतिभाति । सादेश्यम्=समानदेशत्वम्–समा-

आयतिसातत्ये अपि[1] गमननिदानानि केषाञ्चित्[2] ॥ ३४ ॥
अर्थोऽनर्थोपहतिः[3] प्रीतिस्तद्धेतुरित्यपि[4] प्राहुः।
नार्थः प्रीत्या बाध्यः प्राधान्यादेव चार्थस्य[5] ॥ ३५ ॥
इत्थं गम्यविचारं कृत्वा श्रीवीरभद्रदेवेन।
वात्स्यायनीयदृष्ट्या उक्ता[6] इह हेतवो गमने ॥ ३६ ॥
यदि गौरवकामा स्यादथ लाघववारणे सदोद्युक्ता।
गमनपरापि तथान्तः प्रार्थितसङ्गापि तेनेह ॥ ३७ ॥

---

नदेशीयोऽयमिति प्रीत्याभिगम्यते। 'साहवेश्यम्' इति सूत्रे। 'सादेश्यम्' इति तत्रैव पाठान्तरम्। 'रागस्यापनयः साजात्यसादेश्ये' ख०।

---

१ 'ह्यपि' ख०।

२ आचार्याणाम्।

३ वात्स्यायनस्य मतं दर्शयति--अर्थ इत्यादिना। आचार्यैर्यदि रागो भयमित्यादिनाऽभिगमकारणानां परिगणनमभिप्रेतं तर्हि तन्न शक्यं चिकित्सा मैत्री शोकापनयः कलागम इत्येवमादीनामन्येषामपि भूयसां सम्भवात्। अथ प्रदर्शनमभिप्रेतं तर्हि अर्थोऽनर्थप्रतीघातः प्रीतिरित्येतावदेव वक्तव्यम्। रागो भयमित्यादीनां सर्वेषामत्र त्रितय एवान्तर्भावात्। तत्र–संघर्षजिज्ञासापक्षखेदधर्मयशःसुहृद्वाक्यरागापनया अर्थे भयं वैरनिर्यातनमनुकम्पा अनर्थप्रतीघाते, शेषाश्च प्रीतावन्तर्भवन्ति (ह्रीरपि प्रीत्यंशमेव स्पृशति) इति।

४ 'प्राप्तिस्तद्वत्तु रत्याश्च' ख०।

५ अर्थप्रीत्योर्यथास्वं विषयेषु युगपत्प्रत्युपस्थितौ प्रीतिविषयं त्यक्त्वाऽर्थविषयमभिगच्छेत्। वेश्याया अर्थस्य प्रधानत्वात्, भयादीनां युगपदुपस्थितौ तु तेषां गौरवंलाघवं च ( वक्ष्यमाणं ) परीक्ष्य गौरववत्पक्षमभिगच्छेदिति भावः।

६ अत्र च्छन्दोभङ्गभिया सन्धिर्न कृतः। दृष्ट्या इत्यस्य ल्यब्लोपपञ्चम्यन्तताश्रयणे तु न दोषः।

सहसा[1] तेन न रचयेत्प्रीतिं सा निजनिकारशङ्कातः ।
अवमानयन्ति पुरुषाः सुलभा नारीः प्रयत्नेन ॥ ३८ ॥
परिचारकप्रमुखतस्तदभावे[2] पीठमर्दमुख्येभ्यः ।
शौचाशौचे विद्याद्रागारागादि[3] चैतस्य ॥ ३९ ॥
अस्य (त्र) प्रीतिं रचयेद्विटमुख्यै[4]र्दासगायनाद्यैश्च ।
ते नृत्या[5]दिव्याजात्तद्गेहं प्रापयेयुस्तम् ॥ ४० ॥
सा च प्रीत्या कुतुकैरत्यद्भुतभोग्यवस्तुदानैश्च ।
गोष्ठ्युपचाराभ्यामपि रञ्जनमेतस्य संतनुयात् ॥ ४१ ॥
अथ परिहासप्रायाः करकलितोपायनैस्तथा रुचिराः ।
परिचा[6]रिका अभीक्ष्णं प्रेष्यास्तस्मिन् परावृत्ते[7] ॥ ४२ ॥
सह वा गमनं कुर्याद्गेहे स्वयमस्य पीठमर्देन ।

---

१ 'सह साहसेन रचये त्प्रीतिं सा हेमनिकषसंकाशा ।
अवमानितकिंपुरुषा सुलभा नारी प्रयत्नेन ॥' ख० ।

२ प्रमुखशब्देन सूत्रोक्ताः संवाहकगायनवैहासिका ग्राह्या ये ग्रन्थकृता नीचैः (४० श्लो० ) उक्ताः । क्षेमेन्द्रोऽप्याह—
प्रथमं प्रार्थिता वेश्या न क्षणोऽस्तीत्युदाहरेत् ।
जनस्यायं स्वभावो हि सुलभामवमन्यते ॥ ( स० मा० ५ । ६८ ) इति ।

३ आदिना सक्तासक्तते दातृताऽदातृते च सूत्रोक्ते ग्राह्ये ।

४ द्विण्मुख' ख० पु० ।

५ आदिना 'लावककुक्कुटमेषयुद्धशुकशारिकाप्रलापनप्रेक्षणककलाव्यपदेशेन' इति सूत्रोक्तं ग्राह्यम् ।

६ 'परिचारिकाम्' इति सूत्रे । 'परिचारकान्' इति तत्रैव पाठान्तरम् ।

७ गते ।

व्याजेन[1] कारणानां गम्योपावर्तने[2] विधयः ॥ ४३ ॥
ताम्बूलानि[3] च मालाः प्रीत्या गृहमागतस्य तस्येयम्[4] ।
आहरति सानुलेपनमथ गोष्ठीर्योजयेत्कलया ॥ ४४ ॥
सप्रणयं च (व) सुदानं[5] कुर्यात्परिवर्तनं तथा भूयः ।
संयोगस्याकूतं स्वीयं संयोजयेदेषा[6] ॥ ४५ ॥
प्रतिपेशलोपचारैर्दानैः[7] प्रीत्या तथा कथायोगैः ।
संसृष्टा गम्येन तु तद्भजनतत्परा भूयात् ॥ ४६ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनामाधिकृतौ प्रथमोऽध्यायो विनिर्णीतः ॥ ४७ ॥

---

१ सहसा गमने हि हेया स्यादिति कारणव्यपदेशेन गच्छेत् ।

२ इति गम्यस्य नायकस्य उपावर्तने वशीकरणविधय उक्ता इति शेषः ।

३ 'लादि च' ख० ।

४ 'यस्ये' ख० ।

५ 'वसुदानं' ख० । 'द्रव्याणि प्रयणे दद्यात् कुर्याच्च परिवर्तनम् ।' इति सूत्रम् ।

६ 'परिवर्जये' ख० ।

७ 'दत्तैः' ख० ।

# अथ द्वितीयोऽध्यायः ।

अथ कुरुते कुतुकी ननु तदपरमध्यायमादरात् सार्थम् ।
प्रत्यर्थिपार्थिवानां यस्य भयान्नार्थवाञ्छाऽपि ॥ १ ॥

नायकयुक्ता[1] रचयेद्भजयितुं वृत्तमेकचारिण्याः ।
बहिरन्तर्न कदाचित्सक्ता भूयादियं तेन ॥ २ ॥

स्यान्मातर्यायत्ता क्रूरायामर्थलाभशीलायाम् ।
तदभावेऽन्यत्र[3] स्यान्नातिप्रीतिस्तयोर्गम्ये ॥ ३ ॥

---

१ पूर्वाध्यायोक्तविधिना वशीकृतेन नायकेन युक्ता इयं वेश्या यदि बहुजनरञ्जनायासविरक्ता एकचारिणी (एकमेवात्मसात्कृत्य सुखजीविनी) भवितुं वाञ्छेत्। तर्हि पूर्वं (४।१) प्रपञ्चितमेकचारिण्याः (सपत्नीहीनायाः स्त्रियाः) वृत्तमनुतिष्ठेत् । यदि तु नैकचारिणी तर्हि अनेनाध्यायेन वक्ष्यमाणं कान्तानुवृत्तमास्थाय नायकं रञ्जयेत्, हृदयेनाऽसक्ता च सक्तमिवात्मानं प्रकाशयेदिति सङ्क्षेपः । अग्रे विस्तरेणोच्यते-स्यान्मातरीत्यादिना ।

२ 'दूरा-' ख० ।

३ मातृकायाम् ( कृतकमातरि ) । असुकरो ह्यर्थलाभो वेश्यानामन्तरा मातरं मातृकां वेति वेश्या तदधीना सती तद्वचनं नातिक्रामेत् । यतो मातुर्मातृकाया वा ऽभावे-

रिक्तः शक्तो न निर्याति नाप्नोत्यवसरं धनी ।
शून्यशालेव पथिकैर्निरुद्धा कामुकैरहम् ॥ ( स० मा० १ । ३३ )

इत्युक्ता दुर्दशा भवति वेशवधूनाम् । अत उक्तम्-

व्याघ्रीव कुट्टनी यत्र रक्तपानाभिषैषिणी ।
नास्ते तत्र प्रगल्भन्ते जम्बुका इव कामुकाः ॥
न भवत्येव धूर्तस्य वेश्यावेश्मन्यमातृके ।

आनयति दुहितरं सा बलतस्तत्रापि[1] नायिका तनुते ।
सततारतिनिर्वेदौ भीतिक्री(व्री)डे न[2] चानाज्ञा ॥ ४ ॥
व्याधिं कमप्यनित्यं[3] चक्षुरविषयं तथाऽनिमित्तं[4] च ।
प्रख्यापयेत्[5]सति तथा[6] हेतौ छलतो[7]ऽस्य नो योगः ॥ ५ ॥
प्रेषयति चेटिकामथ तन्निर्माल्यादिकारणादेषा ।

---

चुल्लीसुप्तस्य हेमन्ते मार्जारस्येव निर्गमः ॥
अकण्टका पुष्पमही वेशयोषिदमातृका ।
मन्त्रिहीना च राज्यश्रीर्भुज्यते विटचेटकैः ॥ ( स० मा० १ । ४१–४३–४५ ) इति ।

४ 'तथा' ख० । 'तयोर्यग्यो' ग० । तयोर्मातृकयाः गम्ये अतिप्रीतिर्न स्यात्–प्रीतौ सत्यां कार्यव्याघातात् । गम्येऽप्रीयमाणयोस्तयोर्व्यापारमाह–आनयति दुहितरं सा बलत इति । गम्यमभिभूय सा कार्यवशाद्दुहितरं गम्यान्तरे नयतीत्यर्थः ।

---

१ '–स्तत्रायिका' आ० पु० । 'स्तन्नायिका' क । तत्र मात्रा मातृकया वा बलाद्गम्यान्तरं नीता नायिका अरतिम्=रम्येऽप्यसुखम् , निर्वेदम् , कथं मुखं दर्शयिष्यामीति व्रीडाम् न जाने किं मयि प्रातीविश्वास्यति कुपित इति भयं च कामं प्राप्नुयात्, परं तस्याः आज्ञां नातिक्रमेत् तदधीनत्वादर्थागमस्येति ।

२ 'च मानज्ञा' ख० । न चानाज्ञा=न च तस्याः आज्ञा अनाज्ञेत्यवहेलनीयेत्यर्थः ।

३ 'निन्द्यं' ख० ग० ।

४ 'ऽस्थिरत्वं वा' ख० ग० ।

५ 'व्याख्या–' आ० पु० ।

६ 'तथा' ख० ।

७ 'बलतो–' ख० । कृतकस्य ज्ञायमानत्वात् कमप्येकम् ( अनल्पम् ) अनित्यम् ( अस्थिरम् ) अनिन्द्यम् ( अजुगुप्सितम् ) जुगुप्सिते हि व्याधौ निर्दिष्टेऽनभिगमनीया स्यात्, चक्षुरविषयम् ( चक्षुःशब्द इन्द्रियोपलक्षणार्थः ) इन्द्रिया-

कुर्यादथ विस्मयमियमुपचारे तस्य सङ्गेषु ॥ ६ ॥

स्यादस्य चाथ शिष्या सा तु चतुःषष्ठियोगविद्यायाम् ।

एतत्कथितान् योगानभीक्ष्णयेनोपसेवेत ॥ ७ ॥

रहसि च वृत्तिं रचयेत्तत्सात्म्येनेह सा प्रयोगाणाम् ।

गुह्यादीनां गोपनमाख्यानं स्यान्मनोवृत्तेः ॥ ८ ॥

ग्राह्यम् ( अनिमित्तम् आकस्मिकम् )—एवंविधं व्याधिं शिरःपीडामुदरशूलं वा पूर्वमेव ख्यापयेत् येन हेतौ=कारणविशेषे विशिष्टलाभस्थानधन्यन्तराभिगमनादौ सति=उपस्थिते बलतः=तद्व्याधिव्यपदेशेन अस्य=नायकस्य योगः=अभिगमनं नो विधीयेतेत्यर्थः ।

शिरः शूलादिकं व्याधिमनित्यमजुगुप्सितम् ।

अवहारोपयोगाय पूर्वमेव समादिशेत् ॥ ( स० मा० ५ । ६९ ) इति ।

अनभिगमने च व्याधिख्यापनार्थं विधिमाह—प्रेषयतीत्यादिना । 'अद्याहं शिरःशूलेन बलवद् बाध्यमानाऽभिगत्य भवत्सेवासुखमुपलब्धुमसमर्था भवद्विरहासहा भवन्निर्माल्यमेव हृदये धृत्वा भवदुपयुक्तं ताम्बूलमेव मुखे न्यस्य सुखं स्थास्यामीत्युक्त्वा निर्माल्यस्य ताम्बूलस्य वा ऽऽनयनाय चेटिकां प्रेषयेदिति ।

---

१ 'कुर्याद् विस्मय–' आ० पु० । उपचारे मैथुनसम्बन्धिनि सरकताम्बूलप्रभृतौ आश्लेषचुम्बनकेशग्रहणादौ वा न भूतपूर्वं सर्वमेतदिति विस्मयं दर्शयेत् । चतुषष्ठियोगविद्यायां पाञ्चालिक्यां ( प्रथमाधिकरणे कलानिरूपणप्रकरणे जयमङ्गलायां परिगणितायाम् ) बाह्याभ्यन्तरमैथुनोपचारसंबधिन्यामस्य शिष्यत्वं प्रतिपद्येत ।

२ 'न क्षीणानेव सेवेत' ख० । तेनोद्दिष्टान् चातुःषष्ठिकयोगान् पश्चात्तस्मिन्नेव नायके पुनर्योजयेद्येन 'अस्मत्सुखार्थमेवास्या यत्न इति सोऽवगच्छेत् ।

३ 'तस्यापि न च नेह सा' ख० ।

४ 'स्वगुणादीनां गोपनमाख्यानं नात्मनो वृत्तेः ।' ख० । 'गुह्यानां वैकृत(तानां) प्रच्छादनम्' इति सूत्रम् । माभूदस्य वैराग्यमिति गुह्यानां कक्षोरुजघनानां वैकृतं कमपि विकारं ) प्रच्छादयेदित्यर्थः ।

नोपेक्षेत च शयने कृतपरिवृत्ति[1] स्रते सतोभिमुखम् (ऽ) ।
गुह्यस्पर्शं कुर्यात् सुप्ते परिचुम्बनां[2]द्यथ वा ॥ ९ ॥
अन्यमनस्के[3] दृष्टिः प्रासादे राजमार्गनि[4]ष्ठस्य ।
[5]तत्र ज्ञाने(ते) नाशो व्रीडायाः साध्वसस्याऽथ ॥ १० ॥
[6]तद्द्वेष्ये स्याद्द्वेषस्तत्प्रियमैत्री रतिस्तदीये स्वे[7] ॥

---

१ 'वृत्तिः स्रते स्वतो ऽ–' ख० । 'शयने परावृत्तस्यानुपेक्षणम्' इति सूत्रम् । स्नेहप्रख्यानार्थमभिमुखं स्वपेदित्यर्थः । स्वयं गुह्यस्पर्शं कुर्वन्तं नायकं न वारयेदिति–'आनुलोम्यं गुह्यस्पर्शन' इति सूत्रम् ।

२ 'नादि च' ख० ।

३ 'अन्यमनस्को' ग० । किमयमुत्कण्ठयोद्वेगाद्वाऽन्यमनस्क इत्यन्यमनस्कस्य प्रेक्षणम् ।

४ राजमार्गस्थस्य नायकस्य प्रासादस्थया नायिकया प्रेक्षणमित्यर्थः । 'राजमार्गनिष्ठा स्यात्' ख० ॥

५ 'सूत्रज्ञाने' ख० । तत्र=नायिकया राजमार्गस्थस्य नायकस्या प्रेक्षणे मां पश्यतीति तेन ज्ञाते सति नायिकागताया व्रीडायाः साध्वसस्य च नाशः=सा व्रीडिता साध्वसावलम्बिनी च न भवेत् क्षणमपि तवाऽदर्शनमसह्यम्–तव दर्शनक्षणे लज्जापि दूरमपसरतीति ख्यापनार्थम् । सूत्रे तु 'तत्र विदिताया व्रीडा शाठ्यनाशः' इत्यस्ति । "तत्रेति प्रेक्षणे विदिताया नायकस्य मम पश्यतीति व्रीडा लज्जा स्यात् सैव शाठ्यनाश इत्युच्यते–तद्धेतुत्वात्तस्या । यदि व्रीडां ( न ) दर्शयेत कृतकस्नेहोऽस्याः यन्मामसकृत् पश्यतीति शाठ्यं सम्भाव्येत ।" इति तत्रत्या जयमङ्गला ।

६ 'तस्य द्वेष्ये' ख० ।

७ तदीये स्वे नायकस्य स्वकीये रतिः प्रीतिः । 'तद्रम्ये रतिः' इति सूत्रम् । 'तद्रम्य इति–यद्यसावसंप्रयोगशीलस्तदा रम्ये प्रदेशेऽनया रतिः कार्या येन तद्गतस्य संप्रयोगेच्छा भवति' ( ज० मं० )

तन्मनसः शोकादौ कुर्यात्स्वीये मनस्येवम्[1] ॥ ११ ॥

जिज्ञासा[2] परयोषिति कोपः स्वल्पो नखादिचिह्ने स्वे[3] ।

अन्यकृतस्या[4]ऽऽशङ्का रागस्यैवा[5]ऽप्रकाशश्च ॥ १२ ॥

स्वप्ना[6]ऽऽमयमदकाले स्यादनुरागस्य चारु निर्वचनम्[7] ।

नायकगुणान् गृहीत्वा स्तुतिकाले वर्णयेत् सततम् ॥ १३ ॥

---

१ एवम्=शोकादिकम् ।

२ अन्यासु स्त्रीषु अस्य स्नेहोऽस्ति न वेति चरप्रणिधानेन जिज्ञासा कार्येत्यर्थः । कोपः स्वल्पः='यदि तत्र स्नेह ईर्ष्या तदा कोपः स्नेहप्रख्यापनार्थं कार्यः । स चादीर्घः कदाचिद्विरागः स्यात् । ' ( ज० मं० )

३ 'षु' ख० । स्वे=स्वकृते=नायकशरीरे स्वयं कृतेऽपि नखादिचिह्ने अन्यया स्त्रिया कृतमित्याशङ्कनम् । एतदपीर्ष्याख्यापनार्थं स्नेहनिर्बन्धसूचनम् ।

४ 'अन्यः कृत्वा' आ० पु० ग० ।

५ 'स्याथा' ख० । 'रागस्याऽवचनमाकारतस्तु दर्शयेत्' इति सूत्रम् । अहं त्वयि दृढमनुरक्तास्मीति वचसा न प्रकाशयेत् ( वचसा प्रकाशने हि कृतकोऽस्या राग इति सम्भाव्येत ) आकारेण तु तत्प्रकाशयेत् । आकारतोऽप्यनुरागापरिज्ञाने तु कृतकमुत्स्वप्नायमाना मदावेशं प्राप्ता व्याधिगता वा वचसापि रागं प्रकाशयेदिति भावः । "जातरागास्मि कामयस्व मामिति न वाच्यम् । लज्जापरिहारार्थम् । कामातुरा तिष्ठेदित्याह आकारत इति । तत्राप्यपरिज्ञाने मदस्वप्नादिषु निर्वचनम् । कृतकसुप्ता यदागत्य ( ऽ ) व्याधिमपदिशेत् । असंभोगेनैव व्याधितास्मीति । " इति तु जयमङ्गलाकारः ।

६ 'स्वीये संमदकाले' ख० ।

७ 'निर्बन्धः' ख० ।

यो[1]जयति तस्य [2]वाक्यं रम्योत्तरतो [3]यदा च भक्तोऽसौ ।
कुर्यात् कथा[4]नुवृत्तिं वृत्तं मुक्त्वा[5] सपत्नीना[6]म् ॥ १४ ॥
निःश्वासपतितभिन्ने स्खलितेऽप्यथ जृम्भिते तथा पत्युः ।
कुर्यादना[7]र्तिवाञ्छां जीवेत्याद्याः क्षुतादौ स्युः ॥ १५ ॥
[8]व्याधेः स्यादपदेशो दौश्चित्त्ये [9]दौर्हृदेऽप्ये(दस्यै)वम् ।

---

१ इतः पूर्वम्–'तस्मिन् ब्रुवाणे वाक्यार्थग्रहणम् । तदवधार्य प्रशंसाविषये भाषणम् । इति सूत्राणि ग्रंथकृता नानूदितानि । 'तस्मिन्निति नायक इत्यर्थः । वाक्यार्थग्रहणम् । अवधीरणेऽवज्ञा संभाव्येतेत्यर्थः । न केवलमर्थग्रहणम्, प्रशंसा कर्तव्या सुभाषितमुक्तं को जानात्येवमभिधातुमिति । विषये भाषणं शब्दस्पर्शादिषूक्तिः कर्तव्या कस्मिन् विषये रुचिरिति ज्ञापनार्थम् तथैवानुतिष्ठेत् ।' ( ज० मं० ) तस्य नायकस्य वाक्यं श्रुत्वा तस्य रम्यमुत्तरम् दद्यात् वैदग्ध्यख्यापनार्थम् ।

२ 'वाच्ये रम्योत्तरतां प्रमोदयुक्ताऽसौ' ख० ।

३ यदा च पश्येद्भक्तिमान्नायको मयीति तदा तेन कथ्यमानासु कथासु तन्मुखावलोकनहुङ्काराभ्यामनुवर्तनं कार्यं स्पृहाख्यापनार्थम् अन्यथाऽस्या मत्कथनेऽवज्ञेति मन्येत । सपत्नीकथायां तु ईर्ष्याकोपख्यापनार्थं नानुवर्तनं कार्यमिति भावः ।

४ 'सु' ख० । ५ 'क्ता' ख० ।

६ 'सपत्नेन' आ० पु० ।

७ पीडा मा भूदिति वाञ्छेत् । नायकस्य क्षुतादौ ( क्षुतं छिक्का ) जीवेति वदेत् स्नेहसूचनार्थम् ।

८ 'दौर्मनस्ये व्याधिदौर्हृदापदेशः' इति सूत्रम् । कदाचिद्दौर्मनस्ये जाते नायकेन च तत्कारणे पृष्टे व्याधिमपदिशेद्दौर्हृदं वा येन स तद्दौर्मनस्यं वैराग्यसम्भवं नावगच्छेदिति । 'दौर्मनस्य इति नायकसम्बन्ध्यनिष्टश्रवणाद्दौर्मनस्ये जाते तत्कारणं पृच्छेत् । चिरानुबन्धो मे व्याधिः शत्रुर्बाधत इति' इति जयमङ्गलाकारव्याख्यानं तु न स्पष्टार्थम् । ९ 'स्याच्च दौ' ख० ।

[1]गुणतः पराऽप्रकथनं निन्[2]दातस्तद्भवत्येव ॥ १६ ॥
[3]दत्तस्तुल्यो दोषः स्मर्तव्यः सर्वथा तथा ह्यनया ।
स्वकृते दोषे भीतिस्तद्राचिते दर्शयेत् पीडाम् ॥ १७ ॥
भूषाणामग्रहणं राजभये व्याधितै[4]स्तथा व्यसने ।
कान्तस्य संप्रसक्ते भोजनहानिर्विलापश्च[5] ॥ १८ ॥
काङ्क्षति[6] च देशमोक्षं निष्क्रय[7]मपि भूपतेस्तथा रुचिरम् ।
अफलत्वं सफलत्वं स्वायुषि वैधुर्यलाभाभ्याम्[8] ॥ १९ ॥

---

१ परगुणाऽकीर्तनम् । अन्यथाऽन्याऽऽसक्तेति जानीयात् । निन्दातस्तद्भवत्येव=निन्दातः=निन्दायै ( सार्वविभक्तिकस्तसिः ) तत् परकथनं भवत्येव नायकसमक्षे परनिन्दां तु कुर्यात्कामम् । 'न निन्दा समानदोषस्य । दत्तस्य धारणम्' । इति सूत्रम्। नायके ये दोषास्ते यस्मिन् पुरुषे विद्यन्ते तस्य निन्दा न कर्तव्या येन तद्द्वारेण मां जुगुप्सते इति नायको न जानीयात् । नायकेन दत्तस्य च भूषादेर्धारणं कुर्यादित्यर्थः ।

२ 'विवादतः' ख० ।

३ अत्र ग्रंथकृता 'गुणतः परस्याकीर्तनं निन्दा समानदोषस्य दत्तस्य स्मरणम् । स्वयंकृतेऽपराधे भयं तत्कृते पीडां दर्शयेत् । राजोपरोधे व्याध्युपरोधे तद्व्यसने चालङ्कारस्य ग्रहणम्' इति सूत्रीयं पाठान्तरमनुसृतमिति बोध्यम् ।

४ व्याधितः 'भये' इति बुद्धिस्थं परामृश्यते 'राजभय' इत्यत्र समस्तस्य तस्याऽन्यथा परामर्शाऽयोगात् ।

५ एतत् समदुःखतासूचनार्थम् ।

६ 'विषमशीला मे माता अपलाप्य मां देशान्तरं नय येन स्वातन्त्र्यं स्यादिति।

७ 'निष्क्रम' ख० । यदि राजप्रतिबद्धा स्यात्तदा राज्ञः सकाशान्मां निष्क्रीय देशान्तरं नय अन्यथा पलायितां मां बलादानाययेदिति वदेत् ।

८ नायकस्य वैधुर्ये वियोगे स्वायुषोऽफलत्वम् । संयोगे सफलत्वं वर्णयेदित्यर्थः ।

अर्थागमे तदीयेऽभिप्राये संभृते वपुः[1]प्रचये।
संभाषितोपहारं दद्यादियमिष्टदेवस्य ॥ २० ॥
कुर्यान्नित्यमलङ्कृतिमं[2]मितोऽभ्यवहार आदराद्वर्ज्यः।
गीतदशायां तस्य च संकीर्ति(र्नाम)गोत्रयोः कार्या ॥२१॥
ग्ला[3]न्यामुरसि ललाटे निजकरकमलं मृदुः (दु) प्रकुर्वीत।
निद्रालाभं रचयेत्तत्सुखमुपलभ्य निश्शङ्कां[4] ॥ २२ ॥
तस्योत्सङ्गे शयनं कुर्यादुपवेशनं स्मितास्थेयम्।
तस्मात् पुत्रा[5]काङ्क्षा गमने चैवाऽवियोगार्थम्[6] ॥ २३ ॥

---

१ 'च पुनः' ख०। 'तस्यार्थलाभेऽभिप्रेतसिद्धौ शरीरोपचये वा व्याध्यपगमात्। अर्थलाभादिनिमित्तमाशापूरिकादेव्या मयोपयाचितकं कृतं तेन च संपन्ना मनोरथाः। साम्प्रतं तस्यै बलिरुपहर्तव्य इति' ( ज० मं० )

२ 'बहुभक्षणस्य प्रायशो वेश्यानां दोषवत्त्वात्। तत्रापि स्निग्धं न रूक्षम् ज्वरकारित्वाद्रूक्षस्य।' ( ज० मं० ) 'भितो व्य' ग०। 'मितोव्य' ख०।

३ 'ग्लान्यामुरसि ललाटे च करं कुर्वीत। तत्सुखमुपलभ्य निद्रालाभः।' इति सूत्रम्। नायकस्य ग्लान्यां व्याध्यादिसम्भवायां सत्यां तस्योरसि ललाटे च निजकरकमलं मार्दवेन निवेशयेत्। नायकस्य सुखमुपलभ्य च शयीत न तु तस्मिन् ग्लानिविकले इति ग्रंथकाराशयः। नायिकायाः ग्लान्यां सा नायकस्य करं हस्तेन गृहीत्वा स्वे उरसि ललाटे च स्थापयेत्। नायकहस्तस्पर्शेन सुखमुपलभ्य च निद्रां गच्छेदिति च जयमङ्गलाकर्तुराशयः। उभयमपि चैतत् संगच्छते।

४ 'ङ्कम्' ख०।

५ 'त्र्या' ख०। पुत्राकाङ्क्षा आजीवनं सहचरीभूतेति ज्ञापनार्थम्।

६ 'कान्तागमने चैवादियोगार्थम्' आ० पु०। 'काङ्क्षा गमने चैवादियोगार्था' क०। 'चैवाऽधियोगाय' ख०। 'तस्मात्पुत्रार्थिनी स्याद्गमने च वियोगे नायुष आधिक्यमिच्छेत्' इति सूत्रीयं पाठान्तरमनुसृतं ग्रंथकृता। तच्चाऽस्पष्टार्थम्। 'गमनं वियोगे।

नेच्छेदायुरिहाधिकमेतस्माद्रहसि नार्थमज्ञातम्[1] ।
ब्रूयाद्व्रतमुपवासं निवर्तयेत्स्वस्य दोषेण[2] ॥ २४ ॥
अनिवृत्तौ सह कुर्यात् स्वयमपि तेनेह सोपवासादि ।
शक्यमिदं न ममेति प्रथयेत्[3] प्रसृते विवादे तु ॥ २५ ॥
वस्तु तदीयं पश्येदात्मीयादातिविशेषतो नित्यम्[4] ।
तेन विना गोष्ठ्यादावगमनमप्याचरेन्नियतौ ॥ २६ ॥
निर्माल्यस्य च धारणमुच्छिष्टस्याऽशनं तथा श्लाघा[5] ।

तस्मात्पुत्रार्थिनी स्यात् । आयुषो नाधिक्यमिच्छेत् । ' इति सूत्रम् । नायके क्वचिद् गन्तुमुद्यते–एवं च वियोगे उपस्थिते स्वयमपि तेन सह गमनं रोचयेत् असहास्मि वियोगस्येति । नायकान्मम मृतिः प्रागेव भवेच्चेद् भद्रम् इति चायुषो नाधिक्यमिच्छेत् तदेकप्राणताख्यापनार्थम् ।

---

१ 'तार्थ' आ० ग० । नायकस्याऽज्ञातमर्थं रहसि न ब्रूयात् तद्वैलक्ष्यादिपरिहारार्थम् ।

२ मयि दोष इत्युक्त्वा नायकस्य व्रतमुपवासं वा निवर्तयेत् । यद्यसौ न निवर्तते तर्हि स्वयमपि तेन सहोपवासाद्याचरेदिति ।

३ 'प्रश्नयेत्' ग०। 'विवादे तेनाप्यशक्यानिर्देशः । ' इति सूत्रम् । विवाद इति–कस्मिंश्चिद् वस्तुनि केनचिद्विप्रतिपत्तौ तेनाप्यशक्यमिति–शक्तश्चेत् स एवेति कथयेदित्यर्थः ।' इति जयमङ्गलाकारः । ग्रन्थकारस्तु किमप्यन्यथैव व्याख्यातवान् । तच्चेत्थम् योजनीयम् तेनः=नायकेन अपि=च (अपिश्चार्थेऽव्ययानामनेकार्थत्वात् ) कस्मिंश्चिद्विषये विवादे प्रसृते अशक्यम् नेदं मम शक्यमित्युक्त्वा स्वयं पराजयं स्वीकुर्यादिति ।

४ 'नियतम्' आ० पु० ।

५ नायकनिर्माल्यधारणोच्छिष्टाऽशनाभ्यामप्यात्मनः श्लाघा मन्तव्येत्यर्थः ।

पूंजां[1] कुर्यादस्य च कुलशीलादेः[2] प्रयत्नेन ॥ २७ ॥
[3]गीतादिषु प्रयुक्तिस्तत्राभिज्ञो यदा भवेत्स पुनः ।
[4]अभिगमनं च विरचयेदनपेक्ष्यैवातपप्र[5]भृति ॥ २८ ॥
जन्मान्तरेऽपि भूयादेष पतिर्मम[6] मनोरथान् ब्रूयात्[7] ।
इत्थं तदिष्टभावानपि लीलादीन् समातनुयात् ॥ २९ ॥
[8]तस्याऽभिगमे कुर्यान्नित्यविवादं[9][10] सहैव मात्राद्यैः ।
ते चेन्नयन्ति परतो[11] मरणोपायस्तदा चिन्त्यः[12] ॥ ३० ॥

---

१ पूजाम्=स्तुतिम् ।

२ 'शिल्पजातिविद्यावर्णवित्तदेशमित्रगुणवयोमाधुर्याणि सूत्रोक्तानि ग्राह्याणि ।

३ मद्विज्ञानं श्लाघेतेत्येतदर्थम् ।

४ इदमासक्तिख्यापनार्थम् ।

५ 'तपत्रादि' ख० ।

६ 'मैं' ख० । अत्र इति पदमध्याहार्यम् इति मनोरथान् ब्रूयादिति ।

७ 'भूयः' ख० ।

८ इतः परम् 'मूलकर्माभिशङ्का' इति सूत्रं नानूदितं ग्रंथकृता । मूलकर्मणः वशीकरणप्रयोगस्यं नियतं त्वया मयि गूढं वशीकरणतन्त्रं प्रयुक्तं येनाहं तव विधेयास्मि संवृत्तेत्याशङ्का कार्येति ।

९ नायकमभिगच्छन्ती किं मां धारयसीति मात्रा सह नित्यं कृतककलहः कार्योऽनुरागप्रकटनार्थः । १० 'वादे' ग० ।

११ नयन्ति बलादिति शेषः । परतः परत्र ( सार्वविभक्तिकस्तसिः ) अन्यं गम्यं प्रतीत्यर्थः ।

१२ एवं विधव्यतिकरे नायिकया अरतिनिर्वेदादिकं प्रकाश्यमिति तु पूर्वमुक्तम् । अधिकमिदमुच्यते विषाशनानशनशस्त्ररज्जुप्रभृतिर्मरणोपायश्चिन्त्यः वाचैव प्रकाशयितुं न तु कर्तुमिति ।

प्रत्यायनं[1] प्रणिधिभिर्वृत्तिग्रहणं स्वयं स्वकीयं हि ।
अर्थग्रहणं मात्रा नैव विवादस्तया[2] कार्यः ॥ ३१ ॥
शपथप्रदानविधिना गमनेऽस्योपस्थिते[3] सदा तिष्ठेत् ।
याने[4] शुद्धिर्नियमो भूषात्यागश्च मङ्गल्यम्[5] ॥ ३२ ॥
स्मरणमतीतानां[6] स्याद्वीक्षणिकायाश्चुपश्रुतौ यानम्[7] ।

---

१ 'प्रत्यायनं प्रणिधिभिर्नायकस्य स्वयं वात्मनो वृत्तिग्रहणम्' इति सूत्रम् । 'प्रत्यायनं च प्रणिधिभिरिति–मातुरेवास्या दोषो न त्वस्या इति । स्वयं वेति–कुत्सिता वेश्यानां जीविका यत् स्निग्धं संत्यज्यार्थतृष्णया मातरोऽन्येन योजयन्तीति ।' (ज० सं० )

२ पूर्वोक्तरीत्या नायकाभिगमने तु कामं मात्रा विवादः कार्यः परमर्थग्रहणे न कदापि तदर्थत्वात्सकलप्रयासस्येति ।

३ 'तेः' आ० पु० क० ग० । कार्यवशान्नायकस्य देशान्तरगमने उपस्थिते 'मज्जीवितेन शापितोऽसि यदि शीघ्रं नागच्छसि' इति शपथं दद्यात् ।

४ पूर्वं नायकस्य प्रत्यक्षेऽनुष्ठेयं वृत्तमुक्त्वाऽधुना परोक्षे वृत्तमाह याने इत्यादिना । इदं च नायकजनानां समक्षे आचर्यमाणं तद्द्वारा नायकं मदेकप्राणेति विश्वासयेत् । प्रत्यक्षवृत्तादप्यधिकमुपकारीति परोक्षवृत्तस्य वैफल्यं नाशङ्कनीयम् । याने=नायकस्य देशान्तरगमने । 'प्रोषिते मृजानियमश्चालङ्कारस्य प्रतिषेधः ।' इति सूत्रम् । मृजा= शुद्धिः नियमः =व्रतादिकरणम् । जयमङ्गलाकाराभिप्राये तु मृजानियमं इत्येकं पदम् । तदर्थश्च मृजायाः शुद्धेर्नियमो निरोधः =शरीरासंस्कृतिः इति ।

५ मङ्गल्यं शङ्खवलयादि तु धारणीयमेव ।

६ पूर्वं नायकेन सहोपभुक्तानां विषयाणाम् ।

७ 'द्वीक्ष' आ० पु० क० ग० । ईक्षणिका विप्रश्निकास्तासां गृहे गमनं प्रश्नद्वारा नायककुशलावगमार्थम् ।

८ 'या' ख० । अपररात्रे कस्यापि गृहोपकण्ठमुपगम्य शुभाशुभपरिज्ञानार्थं

आगमनेच्छां कुर्यात्त( त्पत्रा )देस्तदीयानाम् ॥ ३३ ॥
स्वप्नेऽप्यस्तु तदीयः सङ्गो मे कीर्तयेदिदं प्रकटम् ।
उद्वेगोऽनिष्टेऽपि च शान्तिककर्माऽऽचरेन्नियता ॥ ३४ ॥
प्रत्यागमे मनोभवपूजादेवोपहारदानानि ।
वायसपूजा च स्यादेतद्वर्जं नवे सङ्गे ॥ ३५ ॥
अनुक(म)रणं कथयेदिह श(स)क्तं प्रति नीतिमार्गमाश्रित्य ।
समवृत्तिरर्थकारी निरपेक्षोऽर्थे निराशंसः (शङ्कः) ॥ ३६ ॥

---

तद्गृहजनैरुच्चारितस्य प्रथमवाक्यस्य श्रवणम्–तस्मिन् वाक्ये शुभार्थके शुभं विपरीते च विपरीतं ज्ञातव्यम् । इदमुपश्रुतिरित्युच्यते–उपगम्य श्रुतिः श्रवणमित्यर्थात् ।

---

१ 'त्तत्त्वादेस्तदीयां हि' क० तत्रत्यादेस्तदीयां हि' आ० पु० । 'तत्पत्न्यादेस्तदीयानाम्' ख० । सूत्रे त्विदं न दृश्यते । तत्र तु 'नक्षत्रचन्द्रसूर्यताराभ्यः स्पृहणम्' इत्यस्ति । 'नक्षत्रादिभिः स्पृहणमिति–पुण्यवन्त एते यन्नायकेन दृश्यन्ते अहमपुण्या यन्मां नेक्षत इति ।' ( ज० मं० । 'तत्पत्रादेः ।' इति पाठः सङ्गतार्थः । तदीयानाम्=नायकसम्बन्धिनाम् ।

२ 'उद्वेगे निष्ठा' ख० ।

३ 'जातैश्च' ख० ।

४ इतः पूर्वम्–'सखीभिः पूर्णपात्रस्याहरणम्' इत्यस्ति सूत्रे ।

५ 'वर्ज्यं' ख० नवे सङ्गे=प्रथमसमागमे, एतद्वर्जम्=वायसपूजां विहाय कामपूजादिकमन्यत्सकलमनुष्ठेयमित्यर्थः ।

६ 'सक्तस्य चानुमरणं ब्रूयात्' इति सूत्रम् ।

७ कः पुनः सक्त इत्याह समवृत्तिरित्यादिना ।

८ 'कारो' क० ।

एते श(स)क्ताः कथिता अपि च निसृष्टार्थभावयुक्तो[1] यः ।
एतन्निदर्शनार्थं[2] कथितं कथितं तु[3] दत्तेन ॥ ३७ ॥
लोकादनुसरणीयोऽनुक्तोपायस्तथा[4] वशीभावे ।
पुरुषप्रकृतेरपि[5] किल नाऽपरथा द्रव्यलाभः[6] स्यात् ॥ ३८ ॥
सूक्ष्मत्वादतिलोभात्स्वाभाव्याज्ञानतस्तथा[7] चैव ।
दुर्ज्ञानं नारीणां मनसि वशत्वं[8] च जिज्ञासोः ॥ ३९ ॥

---

१ 'उक्तो' आ० पु० क० ग० । निसृष्टार्थभावयुक्तः=सर्वात्मना विश्वस्तः ।

२ एतत्=वेश्यायाः प्रत्यक्षपरोक्षवृत्तं दत्तकार्यप्रोक्तं वैशिकशास्त्रमनुसृत्य निदर्शनार्थमुक्तम् । अत्रानुक्तं तु पराराधनकुशलाल्लोकाज्ज्ञेयं पुरुषस्वभावाच्चेति ।

३ 'नु' क० ।

४ 'योग' ख० ।

५ 'षा' आ० पु० ।

६ 'भस्य' आ० पु० ।

७ 'प्रकृत्यज्ञानादित्यर्थः ।

८ 'मनसिजवत्त्वम्' इति स्यात् । नारीणां वेश्याख्यानां मनसिजवत्त्वं स्वाभाविककामावेशवशीभूतत्वं विज्ञस्यापि दुर्ज्ञानं किमुत जिज्ञासोः । यतस्तामर्थलुब्धाः कृत्रिममपि स्वाभाविकमिव दर्शयन्ति कामाविष्टत्वम् । 'कामलक्ष्म तु दुर्ज्ञानं स्त्रीणां तद्भावितैरपि' इति सूत्रम् । कृतकं कामलक्षणं वेश्यानां निदर्शयन्नाह–रज्यन्त इत्यादिना ।

कामयन्ते विरज्यन्ते रञ्जयन्ति त्यजन्ति च ।
कर्षयन्त्योऽपि सर्वार्थान् ज्ञायन्ते नैव योषितः ॥ इति सूत्रम् ।

रज्यन्ते रमयन्त्यश्च' ' ' 'कर्षन्त्यपि च' इति सूत्रे पाठान्तरम् । इदमेव ग्रन्थकृताऽनुसृतम् । वेश्या हि कृतकं कामयन्ते, तदपि न चिरं किन्तु दिनैरेव विरज्यन्ते निष्कृष्टार्थं कृत्वा कामुकम् । अथ पुनः प्राप्तविभवमालक्ष्य तं नानाविधैर्वक्ष्यमाणैः कृतकोपचारैर्धनादानाय पुना रञ्जयन्ति । तदपि न दीर्घकालं कि-

रज्यन्त्यो रमयन्त्यो रञ्जनकर्त्र्यस्तथा क्षमास्त्यागे ।
सर्वार्थाकर्षेऽपि च दुर्ज्ञानास्तेन भामिन्यः ॥ ४० ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे प्रथमादपरः कृतः सार्थः ॥४१॥



---

न्तु यावन्न निःशेषार्थग्रासस्तावदेव । तस्मिन् सिद्धे तु निष्पीडितालक्तकवन्निःसारं तं पुनस्त्यजन्तीत्येवं रागविरागरञ्जनत्यागादिविचित्रचरित्रप्रकाशनपरा ऐन्द्रजालिकमायादेश्या वेश्याः किंरूपा इति नैव ज्ञायन्ते । तस्मात्तासु नासक्तिं कुर्यादित्युपदेशः ।

Vidya Vilas Press, Gopalmandir Lane, Benares.

# अथ तृतीयोऽध्यायः ।

अस्य तृतीयक[1]मधुना सम्यगसौ कर्तुमुद्यमं कुरुते ।
कुरुते यदरिवधूटी धाटी[2]भीता न विश्रामम् ॥ १ ॥
वित्ता[3]ऽऽदानं द्विविधं स्वाभाविकमथ च यौक्तिकं [4]सक्तात् ।
[5]सङ्कल्पितमिह चाद्यं सोपायं स्यात्ततः परतः ॥ २ ॥
लभमानाऽधिकमाद्यं नान्यस्मै स्यादुपायशीला सा[6] ।
इत्येके आचार्यास्तदधिकतायै तदित्यन्ये[7] ॥ ३ ॥

---

१ 'तीयमधु' ग० ।

२ धाटी—प्रपातः=अभ्यवस्कंदः ।

३ पूर्वाध्यायोक्तकान्तानुवृत्तविधिना वशीकृतात् कान्ताद् वित्तादानं विधेयम् । तच्च नानुपायेन विधेयम् । इत्यधुना स्वाभाविकयौक्तिकभेदेनार्थागमोपायानाह वित्तादान-मित्यादिना ।

४ 'शक्तात्' ग० ।

५ 'स्वाभाविकं सङ्कल्पात्समाधिकं लभमाना–' इति सूत्रम् । 'स्वाभाविकं संकल्पितं समधिकं वा' इति सूत्रे पाठान्तरम् ।

६ 'लाय' आद्यम्–सङ्कल्पितं भावाविकलमधिकं लभमाना अन्यस्मै–यौक्तिकाय वित्तादानाय नोपायान् प्रयुञ्जीतेत्याचार्याणां मतम् ।

७ 'विदितमप्युपायैः परिष्कृतं द्विगुणं दास्यतीति (स्वाभाविकतया लभ्यमानेऽप्येर्थे उपायान् प्रयुञ्जीतेति ) वात्स्यायनः' इति सूत्रम् ।

[1]तद्व्यवहारिषु कलयेच्छुद्धा (द्ध्या) याभूषणादिके [2]तस्य।
अर्पणनयने कार्ये विस्रम्भार्थं प्रयत्नेन ॥ ४ ॥
तत्पुरतस्तद्वित्ते[3] स्तुतिनिरता स्यात्तथा च भूषादौ।
[4]दत्वा मूल्यं प्रकृतं तद्द्रव्यस्यैव चाऽऽदानम् ॥ ५ ॥
[5]व्रतवृक्षारामाणां देवकुलानां तथा तडागादेः।
उत्सवसम्बन्धी स्याद् व्यपदेशः प्रीतिदायस्य ॥ ६ ॥
[6]रक्षिभिरथवा चौरैर्मुष्टिर्वाच्या स्वकीयभूषादेः।
तत्र निमित्तं [7]कथयेदभिगमनं सा तमुद्दिश्य ॥ ७ ॥

---

१ यैरुपायैरादीयमानेऽप्यर्थे नार्थपरता ज्ञायते तानुपायानाह—तद्व्यवहारिषु इत्यादिना। 'तदव्यवहारिषु' इत्यत्र तच्छब्दः भूषणादिकस्य परामर्शायोपात्तो न तद्घटयितुमलं तस्य पूर्वपरामर्शकत्वात् भूषणादिकस्य च तदुत्तरमुपात्तत्वादिति दोषः। यद्वा तच्छब्दस्यात्र बुद्धिस्थ( भूषणादि )परामर्शकत्वमिति न दोषः। तद्व्यवहारिषु=भूषणादिविक्रेतृषु। शुद्ध्ये आभूषणादिके=शुद्ध्ययाभूषणादिके इति सन्धिः। शुद्ध्यै=उद्धारार्थम्।

२ 'वितस्यं' 'ख०'

३ 'त्त' आ० पु० क० ग०।

४ 'इदं सूत्रे न दृश्यते।

५ अमुकतिथौ मम व्रतमस्ति तत्रैतद्द्रव्यमावश्यकम् आरामो मया कार्यः स्वयं रोपितस्य वृक्षस्य कुट्टिमबन्धः प्रतिष्ठा वा कार्या, देवमन्दिरादेर्वा स्वनिर्मातस्य प्रतिष्ठा कार्या अमुकमित्रस्योत्सवे एतत् प्रीतिदायतया देयमित्यादिव्यपदेशः कार्य इत्यर्थः।

६ कृतसंकेतैर्दण्डपाशिकैश्चौरैर्वा तादृशैः। एवं सति स्वयंकृतसंकेतैर्दण्डपाषिकादिभिर्हृतस्य भूषादेरनाशः, अलङ्कारशून्यां च तामभिगतां दृष्ट्वा मदभिगमननिमित्तोऽस्या अलङ्कारपरिमोष इति चिन्तयन् अलङ्कारान्तराणि कारयतीति।

७ 'त्तै' ग०। 'सन्त' आ० पु० ख० ग०।

कथनं प्रणिधिमुखेन च योऽभूद्गमनेन[1] तत्र[2] तस्येह ।
याचितभूषाप्रभृतेरज्ञातस्य[3] व्ययस्याऽथ ॥ ८ ॥
एवंविधान्तरेण च कथयेद्वित्तप्रणाशनं चतुरा ।
ऋणसंभवं[4] विदध्यात्तस्य कृते पद्मपत्राक्षी ॥ ९ ॥
कुर्याद्व्यये विवादं तत्सम्बद्धं[5] तदा जनन्याऽसौ ।
सुहृदां कार्येऽगमनं[6] युक्ते कार्ये समुच्छित्तिः ॥ १० ॥
सति[7] चाऽभिहारहेतावेतैः पूर्वं समाश्रिता गुरवः ।

१ 'भूयोगमनेन' ख० ।

२ 'तच्च' ग० । नायकागमनार्थस्य व्ययस्य ।

३ 'दाहात् कुड्यच्छेदात् प्रमादाद्भवने चार्थनाशः । तथा याचितालङ्काराणां नायकालङ्काराणां च ( नाशः )' इति सूत्रम् । तस्य पूर्वभागो नादृदितो ग्रंथकृता । त्रुटितो वा भवेत्तदनुवादकांशः इति । दाहादिना याचितालङ्काराणां नायकालङ्काराणां नाशो जात इति प्रणिधिमुखेन निवेदयेत्–येन क्षतिपूतिपर्याप्तं धनं ददाति स्वकीयालङ्कारांश्च न मृगयतीति ।

४ 'क्षण' आ० पु० । नायकस्य समक्षं नायकनिमित्तव्ययाय ऋणग्रहणम् । ऋणं किमिति गृह्णासि कथं त्वया शोधनीयमिति वादिन्या मात्रा सह किं तव, अहमात्मानमपि विक्रीय शोधयिष्यामीत्येवं विवादः कार्यः येन तादृशव्यतिकरं दृष्ट्वाऽवश्यं नायको धनं ददातीति ।

५ नायकसम्बद्धे न त्वात्मसम्बन्धिनि ।

६ '····गमनं ह्युपस्थितिः स्वस्य' ख० ।

७ 'सुहृत्कार्येष्वनभिगमनमनभिहारहेतोः । तैश्च पूर्वमुपनीता गुरवोऽभिहाराः पूर्वं श्राविताः स्युः । उचितानां क्रियाणां विच्छित्तिः' इति सूत्रम् । अभिहारः–उत्सवेषु सम्बन्धिभिरुपहियमाणं वस्त्रालङ्कारादि । सुहृद्भिरस्माकं यादृशा गुरवोऽभिहारा उपहृतास्तादृशानुपहर्तुमशक्ततया मयाऽऽकारितयापि सुहृत्कार्येन गन्तव्यामित्युक्ते यदि नायकः

अभिहाराः स्वीकार्यास्तैं[1] पूर्वं सर्वभावेन ॥ ११ ॥
नायककृते च कार्यं[2] शिल्पिषु वैद्ये तथा महामात्रे।
कार्यार्थे स्यादुपकृ[3]तिरभ्यु[4]पपत्तिः सुहृत्प्रभृतेः ॥ १२ ॥
व्यसनोत्सवयोर्युक्त्[5]या कार्यं गेहेऽन्यदोहदो[6]द्योगः।

---

प्रयच्छति तदा गमनमन्यथाऽनभिगमनमिति। उचितानाम्=प्रत्यहं शरीरस्थित्यर्थं क्रियमाणानां क्रियाणां विच्छेदः कार्यः येनाधुनाऽस्याः शरीरस्थितिरपि न सम्भवतीति। अयमंशः सूत्रस्य ग्रन्थकृता नानूदितः।

२ 'तौ ये तैः' ग०।

---

१ 'स्तैः' ख०।

२ निर्देश्यमिति शेषः। 'नायकार्थं च शिल्पिषु कार्यम्' इति सूत्रम्। तत्र 'नायकार्थम्' इत्यस्य 'नायककृते' इत्यर्थः इति ग्रंथकृत्। जयमङ्गलाकारस्तु–नायकार्थम्–नायकादर्थः (धनलाभः) यस्मिंस्तादृशं शिल्पिषु कार्यं निर्देश्यम्–अयमुत्कृष्टः शिल्पी अमुकभूषणनिर्माणस्यैतावन्मृगयते त्वं प्रयच्छसि चेत्कारयेयं नोचेन्नाग्रहः इत्येवंरूपेणेत्यभिप्रैति।

३ उपकृतो वैद्यो भेषजापदेशेन महामात्रश्च प्रसह्य तस्यै नायकं धनं दापयतीति।

४ 'त्यु' आ० पु० ख०।

५ 'क्त्' आ० पु०। मम सुहृदा पूर्वं मम व्यसने उत्सवे वा साहाय्यं कृतम् सम्प्रति मयापि तस्य कर्तव्यमिति निर्देश्यम्। यद्वा नायकसम्बन्धिनां सुहृदादीनां व्यसनोत्सवयोः साहाय्यं विधेयम्–येन ते उपकृतितुष्टा नायकमभिधाय बहु दापयेयुरित्यर्थः।

६ 'युक्त्या कार्यो गेहा' ख०। कार्यं गेहे इति–गृहकर्म इति सूत्रम्। गृहकर्मछादनेष्टकादि कारयितव्यम् (इति निर्देश्यम्) इति जयमङ्गला।

७ 'दोद्योग.' आ० पु० अमुकवस्तुनि मम सख्या दोहदो जातः स मया पूरयितव्य इति निर्देश्यम्। सख्याः पुत्रस्योत्सङ्जनं दोहदः' इति सूत्रम्। सख्याः स्वस्याः पुत्रस्योत्सङ्जनं यस्योत्सवनिकेति प्रतिपत्तिः क्रियाकालोपलक्षणं चैतत् प्रन्नशाशनं चूडाकरणादि वा करणीयम्। दोहदोऽभिलाषो यस्मिन् सख्या। (ज० मं०)

व्याधिः खेदविनाशो[1] मित्राणामत्र निर्दिष्टः ॥ १३ ॥

विक्रयकर्म[2] चरेदथ सा भूषादेस्तथैकदेशस्य ।

नायककृत्योद्देशाद्वणिजो वा दर्शनं तस्मै[3] ॥ १४ ॥

ग्रहणं प्रतिगणिकानां व्यतिकरतः स्याद्विशिष्टभाण्डस्य[4] ।

स्मरणं[5] पूर्वोपकृतेरथ नित्यं कीर्तनं तस्य[6] ॥ १५ ॥

प्रतिगणिकानां लाभातिशयं संश्रावयेत्तथा परतः[7] ।

तासु च नायकनिकटे स्वापेक्षं[8] (पेक्षा) लाभबाहुल्यम्[9] ॥१६॥

---

१ दुःखापनयनम् ।

२ 'विक्रम' आ० पु० ।

३ 'साक्षाद्वा दर्शने तस्य' ख० । 'तस्यै' आ० पु० ग० । 'तया शीलितस्य चालङ्कारस्य भाण्डोपस्करस्य वा वणिजो विक्रयार्थं दर्शनम्' इति सूत्रम् । '···वणिजः कृतसंकेतस्य नायकसमक्षं दर्शनं कर्तव्यम् । येनायं नास्त्यस्याः किमपि यच्छीलितमपि विक्रेतुमारब्धमिति प्रयच्छति' ( ज० मं० )

४ अत्र 'भाण्डसंप्लवे विशिष्टग्रहणमिति' दत्तकसूत्रमुदाहृतं जयमङ्गलाकृता । 'भाण्डस्य सादृश्यात्स्वेन भाण्डेन व्यतिकरे परिवर्ते सति मा भूत्पुनरेवमिति विशिष्टस्य प्रमाणसंस्थानाभ्यां ततोऽधिकस्य ग्रहणं वणिजो हस्तात् क्रमेण नायकसमक्षं कुर्यात् येनायं क्रीत्वा प्रयच्छति प्रायशश्च वेश्यानां सामान्यानां कार्योत्पत्तौ भाण्डं याचितकं भवतीति प्रतिगणिकाग्रहणम् । ' ( ज० मं० )

५ इदमर्धमादर्शपुस्तके त्रुटितमस्ति ।

६ येन कृतज्ञेयमिति विभाव्य पुनः प्रयच्छति ।

७ प्रणिधिद्वारा ।

८ 'स्यापेक्षा' ख० । 'सापेक्षं' ग । 'स्वापेक्षा' आ० पु० ।

९ 'लोभ' आ० पु० ग । 'तासु नायकसमक्षमात्मनोऽभ्यधिकं लाभं भूतमभूतं वा व्रीडिता नाम वर्णयेत्' इति सूत्रम् ।

भूतमभूतं वा यत्तत्कथयेच्चारु (हा[1]स)सव्रीडा[2] ।
मा[3]तुश्च प्रतिषेधः प्रक[4]टस्तदभिन्नसन्धा[5]ने ॥ १७ ॥
त[6]त्स्पर्धिनामतिशयस्त्यागे वाच्योऽतिसादराशयया ।
नै[7]तत् पुनर्मिलिष्यति कुर्यादिति बालकस्यैवम् ॥ १८ ॥
इत्थमुपायाः कथिता अर्थाधिगमे च वीरभद्रेण ।
वात्स्यायनानुसारादधिगतकामार्थतत्त्वेन ॥ १९ ॥
प्र[8]कृतिविकाराद्वर्णादास्यगतादधिकदानत[9]श्चैव ।

---

१ क पुस्तके 'हास' इति नास्ति ।

२ सव्रीडा लज्जितेव कथयेत्—येन सोऽपि लज्जितः प्रयच्छेत् ।

३ पूर्वं निःसारत्वात्त्यक्तानां साम्प्रतमधिकं ददतां संधानेऽभिरुचिं प्रकाशयन्त्याः मातुः प्रकटं प्रतिषेधः कर्तव्यः । येन तथा श्रुत्वाऽसौ मय्यनुरक्तेति प्रयच्छति ।

४ 'कार्यं' ख ।

५ 'संवर्गे' ख० ।

६ नायकेन स्पर्धमानानामन्येषां दानाधिक्यं वाच्यं प्रणिधिमुखेन न तु स्वयम् । यच्छ्रुत्वाऽसौ मा धिकदायिनोऽन्यान् गच्छेदिति प्रयच्छति ।

७ 'न पुनरेष्यतीति बालयाचितकम्' इति सूत्रम् । 'न पुनरेष्यतीति-न पुनर्गृहमनेनागन्तव्यमिति बालेन प्रयुक्तेन याचितकं कार्यमिदं मे देहीति । बालवद्वा लज्जां त्यक्त्वा याचितव्यमित्यर्थः' ( ज० मं० )

८ सक्ताद्वित्तादानोपायानुक्त्वा सम्प्रति विरक्ते किं प्रतिपत्तव्यमिति विरक्तलक्षणनिर्देशपुरःसरमाह—प्रकृतिविकारादित्यादिना । स्वभावविपर्ययेण मुखवर्णभेदेन ( इङ्गिताकाराभ्याम् ) रक्तवद्विरक्तमपि जानीयादित्यर्थः ।

९ 'दारत–' ख० । 'दारभ–' आ० पु० । अधिकदानश्चेति चकारात् न्यूनदानतश्च । 'ऊनमतिरिक्तं वा ददाति ।' इति सूत्रम् । यथा दीयमानात्, न्यूनदानमिव (विशि-

[1]प्रतिलोमलोकैसङ्गादन्यत्त्वाच्चान्यथाकरणात् ॥ २० ॥
[4]आच्छेदादुचितस्य च विस्मरणाद्वा तथा प्रतिज्ञाते ।
[5]योजयति चान्यथा [6]तत्संज्ञोक्तिः स्वीयपक्षेषु ॥ २१ ॥
अन्यत्र चैव शेते कार्याण्यपदिश्य मित्रवर्गस्य ।
कथयति परिजननिकटे पूर्वयुतायाः कथां चात्र ॥ २२ ॥
इत्थं निर्गतरागं ज्ञात्वा प्रागेव नायकं सुतनुः ।
कुर्यात्सारद्रव्यं स्वे हस्ते तस्य यत्नेन ॥ २३ ॥

---

ष्टपरितोषादिकारणाभावेऽपि) अधिकदानमपि विरक्तताचिन्हमिति तज्ज्ञसूक्ष्मेक्षिका-साक्षिकम् ।

---

१ प्रतिलोमाः = नायिकाया विपक्षाः ।

२ 'संवादन्युक्ता' ग० ।

३ 'दन्यक्त्वाचान्य' आ० पु० । 'दत्यक्त्वा वान्य' ख० । 'व्यपदिश्यान्यत्क-रोति' इति सूत्रम् । 'व्यपदिश्य 'स्नातव्यमिति' अन्यत्करोति सज्जीकृतेऽपि स्नानो-पकरणे भुङ्क्ते ।' (ज० मं०) '...सङ्गादुक्त्वान्यच्चान्यथा करणात्' इति पाठ उचितः स्पष्टार्थत्वात् सूत्रानुसारित्वाच्च ।

४ उचितस्य प्रत्यहं दीयमानस्य आच्छेदात् प्रदानात् ।

५ इदं मया देयमिति प्रतिज्ञातं विस्मरति मृग्यमाणे च अन्यथा योजयति न मया प्रतिज्ञातमिति ।

६ 'वैतत्पक्षो–' ख० । संज्ञोक्तिः संकेतेन कथनं न तु वचसा मा श्रौषीदि-यमिति ।

७ 'जारेषु' ग० ।

८ पूर्वसंसृष्टाया नायिकायाः ।

९ 'सादर' ख० ।

तेच्च[1] गृहीतं द्रव्यं नोत्तमवर्णः[2] (ऽ) प्रसह्य[3] गृह्णीयात् ।
धर्मज्ञे व्यवहारं कुर्यात्सद्यो विवादेऽस्य[4] ॥ २४ ॥
अल्पफलः किल श(स)क्तो निश्चितपूर्वोपकारकारी यः ।
कार्यो विरक्तया ननु तस्याऽलीकै[5]रुपालम्भः ॥ २५ ॥
निः[6]सारप्रातिपत्तिकनिःसारणमाचरेत् कृतोपाया ।
तदनिष्टानि विरचयेदन्यांवष्टम्भतो ह्येषा ॥ २६ ॥
निर्भोगः[8] परितुष्टे भूम्यभिघातस्तथाङ्घ्रिकमलेन ।
अज्ञात[9]विषयकथनं तज्ज्ञानं विस्मयः कुत्सा ॥ २७ ॥

---

१ 'तया' ख० ।

२ 'उत्तमर्णस्थाने छन्दोभङ्गभिया उत्तमवर्णशब्दः प्रयुक्तः । 'तानि चास्या हस्तादुत्तमर्णः प्रसह्य गृह्णीयात्' इति सूत्रम्। '···द्रव्यं नोत्तमवर्णः प्रसह्य गृह्णीयात्' इति ग्रन्थकारोक्तिस्तु सूत्रविरुद्धा । 'द्रव्यं तदुत्तमर्णस्तस्या हस्तात् प्रसह्य गृह्णीयात्' इति पाठ सूत्रानुसारिता संपद्यते । उत्तमर्णः यस्मान्नायकार्थमृणमाहृतवती स कृतसंकेतः तत्सारद्रव्यं नायिकाया हस्तात् प्रसह्य प्रतिगृह्णीयादित्यर्थः ।

३ 'विरुध्य' ख० ।

४ 'स्याः' ख० । प्रसह्य गृह्यमाणे यदि नायको विवदेत्तर्हि उत्तमर्णः धर्माधिकरणेऽभियोगं प्रवर्तयेत् अथ न विवदेत्सिद्धं कार्यमिति ।

५ अलीकैः= असत्यैः=कल्पितैः (अन्यासक्तोऽयमित्यादिरूपैः) अपराधैरिति शेषः । "सक्तं तु पूर्वोपकारिणमपि व्यलीकेनानुपालयेत" इति सूत्रम् । 'पूर्वं बहुधा कृतोपकारोऽपि परामिच्छति तदा निष्कासयेदित्यर्थः । ( ज० मं० ) ।

६ निःसारो निर्धनः । निष्प्रतिपत्तिको निरनुष्ठानः ।

७ अन्यं धनरत्युभयफलक्षममवष्टभ्य ( अनुसृत्य ) इत्यर्थः ।

८ निःसारणोपायानाह–निर्भोग इत्यादिना । 'निर्भोगात्' ख०। 'ओष्ठनिर्भोगः।' इति सूत्रम्।

९ 'ज्ञातिविषयसंकथनम्' ख० ।

दर्पस्य प्रति[1]घातः संरागः स्यात्तथाऽधिके तस्मात् (स्मि[2]न्) ।
अनपेक्षणमप्युक्तं वाक्ये छलसंग्रहश्चैव ॥ २८ ॥
हासोऽनर्मणि नर्मणि हासो व्यपदेशतः परार्थस्य ।
तस्मिन् गदति कटाक्षैरीक्षणमिह परिजने प्रोक्तम् ॥ २९ ॥
ताडनमपि च सहासं निन्दा चाऽतैः[3] समानदोषाणाम् ।
उद्वेगो रतकृत्ये सुरताऽकृतिं जघ[4]नगुप्ती च ॥ ३० ॥
नखदशनकर्मनिन्दा परिरम्भे स्यात्तथा पुनर्व्यवधिः ।
गात्राणां स्तब्धत्वं श्रा[5]न्ते कार्यार्थमुद्योगः ॥ ३१ ॥
हासोऽशक्तौ श[6]क्तौ स्तुतिविरहः स्यात्तथा प्रयत्नेन ।
स[7]क्तोर्वोर्विन्यासो निद्राविरतिस्तथा चैव ॥ ३२ ॥
उपलभ्याऽस्य च भावं रचयेद्गमनं महाजनोद्देशात्(--द्देशे) ।
अस्य कथां विनिहत्य च गमयेत्कथयाऽन्यया कालम् ॥ ३३ ॥
[8]परिचर्या(ऽ)मनुकीर्तनमेतद् व्यसन[9]व्यलीकयोस्तद्वत् ।

---

१ 'प्रतिघातः' ख० । 'संवासः' इति सूत्रे । 'संरागः' इति तत्रैव पाठान्तरम् ।

२ 'तास्मिन्' ख० ।

३ 'बाधः' आ० पु० । 'भावः' ख० । नायके ये दोषास्ते येषु सन्ति तेषां निन्दा–यथा तद्द्वारेणेयं मां निन्दतीति नायको जानाति ।

४ 'नयन' ख० ।

५ 'प्रान्ते' ख० । नायकं श्रान्तमुपलभ्य रतिकार्यार्थमुद्यमः ।

६ 'सक्तौ' ख० ।

७ 'सक्तोर्वोरविकासः' ख० । 'सक्थ्नोर्व्यत्यासः' सूत्रे ।

८ 'तद्व्यलीकानां व्यसनानां चापरिहार्याणामनुकीर्तनम् । ' इति सूत्रम् ।

९ 'गमनं' ख० ।

चेटिकया प्रथनानि[1] च मर्मकथायास्तदीयायाः ॥ ३४ ॥
परिवर्जयेच्च दर्शनमस्मिन्नभ्यागते तथा गेहे।
कुर्याद्याच्ययाचनमन्ते मोक्षं च यत्नेन[2] ॥ ३५ ॥
कल्पः परिग्रहे खलु दत्तककथितोऽत्र सादरं ज्ञेयः।
इत्यनुरागाविरागौ कार्यौ शास्त्रानुसारेण ॥ ३६ ॥
गम्यः परीक्ष्य कार्यः कृत्वा बहुधाऽनुरञ्जनं रचयेत्।
अर्थादानमतः किल वैशिकमन्ते तथा मोक्षः ॥ ३७ ॥
नात्यर्थं[3] सह गम्यैः कल्पेनाऽनेन संगता भवति।
अर्थाहरणं कुरुते स्थित्वा वेश्या मनस्यस्य ॥ ३८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते।
वैशिकनाम्न्यधिकरणे रचितोऽध्यायस्तृतीयोऽसौ ॥ ३९ ॥

---

१ 'कथनानि' ख०। 'मर्मणां च चेटिकयोपेक्षणम्' इति सूत्रम्।

२ एतदेव समासेन मुग्धोपदेशेऽप्युक्तम्।

वक्रोक्त्या प्रथमं निरादरतया पश्चात्ततः केनचि-
द्दातव्यं बहु तत्र यामि भवताद् भूयोऽपि नौ संगमः।
इत्युक्तोऽपि न बुध्यते खलु यदा रागी दरिद्रो जड-
श्चेटीभिर्बहुभाषितैरपि तदा हस्तार्गलैर्वार्यते ॥ इति।

अन्यदपि तत्रैव—

योऽयं निर्दयदन्तखण्डनकरो बुद्धिप्रयोगैर्हठा-
न्नीरन्ध्रो भुजयन्त्रगूहनविधिः सोल्लासमुत्पादितः।
तेनेक्षोरिव कामुकस्य सरसस्यादाय सारं परं
वेश्याभिः क्रियते बहिर्यदि परं निष्कासनं शल्कवत् ॥ इति।

३ 'नातिसंधीयते गम्यैः' इति सूत्रम्।

# अथ चतुर्थोऽध्यायः ।

अथ यततेऽध्यायेऽसौ षष्ठचतुर्थे प्रकृष्टषट्[1]भावः ।
यस्यारातिवधूटी तक्षकदष्टप्रियेवास्ति ॥ १ ॥
निःस्वं कृत्वा प्र[2]कृतं त्यक्तुं चेदिच्छतीह सा प्र[3]गुणा ।
पूर्वं संगतिभाजा सन्धिं कुर्यात् प्र[4]यत्नेन ॥ २ ॥
अवसित[5]कार्यश्चेत् स्यादनुरागी वित्ततस्तथाऽभ्यधिकः ।
संधेयः स्यादस्याः स्यादेवं कार्यलाभोऽस्याः ॥ ३ ॥
[6]स्वयमपसृत्य परत्र स्थितिमानथ निर्मितस्व[7]कापसृतिः ।
एवं स्थलद्वयेऽपि स्वयमपसारी भवेदाद्यः ॥ ४ ॥

---

१ 'तिकष्ट' आ० पु० ग० । 'निकृष्ट' क० ।

२ 'प्रकृते' आ० पु० । प्रकृतं वर्तमानं नायकम् ।

३ 'स्वगुणा' ग० ।

४ अलक्तकवन्निष्पीडितार्थं नायकं त्यक्तुमिच्छन्ती पूर्वसंसृष्टो यो निष्कासितोऽभूत्तेन ( २६–२९ श्लोकेषु ) वक्ष्यमाणोपायैर्यतनात्सन्दधीत येन अर्थागमे अल्पकालमपि प्रतिबन्धो न स्यात् ।

५ 'अवसितकार्यश्च' आ० पु० क० ग० ।

६ स पूर्वसंसृष्टः अस्याम् अनुरागवांश्चेत् निर्विचारं संधेयः । अस्यां विरक्तोऽन्यत्र गतश्चेत् तर्हि वक्ष्यमाणन्यायेन तर्कयितव्यः—न सहसा संधेयः अन्यथा विश्वासनार्थमर्थं दत्त्वापि निष्कासितोऽहमनयेत्यपकुर्यात् । तस्य कार्ययुक्त्या षड्विधत्वमाह स्वयमपसृत्येत्यादिना ।

७ 'निर्मितस्य का–' आ० पु० ग० ।

निष्कासितापसारी स्थलयुगले स्यात्तथा द्वितीयोऽसौ ।
स्वयमपसारी पूर्वं निष्कासितनिस्सरोऽग्रेऽन्यः[1][2] ॥ ५ ॥
स्वयमपसृत्य परत्र स्थितिमानुक्तस्तथा चतुर्थोऽसौ ।
निस्सारितापसारी युगलेऽन्यत्र[3] स्थितोऽन्यः स्यात्[4] ॥ ६ ॥
संतर्क्या एते स्युः कार्यवशाचेत् पुनः प्रविष्टाः स्युः ।
तत्राद्योऽसंधेयो[5] गुणनिरपेक्षो द्वयोर्ज्ञेयः ॥ ७ ॥
स्थिरमतिशालिनि[6] संधिं धनलाभाय द्वितीयके कुर्यात् ।
समयान्यादरतोये[7](ऽ) निःसरणादर्थदो भूयात् ॥ ८ ॥

१ 'न्यतश्चान्यः' ख० ।

२ अन्यः = तृतीयः ।

३ 'त्येव' आ० पु० ग० ।

४ स्थलयुगलेऽपि ( पञ्चमषष्ठयोः ) निष्कासितापसारित्वं समानम् । इतो निष्कासितापसृतस्ततः स्वयपमसृतः-पञ्चमः । इतो निष्कासितापसृतस्तत्र स्थितः-षष्ठ इत्यर्थः । एषु कश्चित् कामुकः स्वयमेकतोऽपसृत्य अपरामुपगच्छति ततोऽपि च स्वयमेवापसरति, कश्चित् एकतो निष्कासितोऽपरामाश्रयति तयाऽपि च निष्कास्यते, कश्चिदेकतो निष्कासितोऽपरत्र स्थितिं लभते इत्येवमादिः प्रपञ्चः । तत्र क्वचिदाश्रयस्य दोषः क्वचिच्चाश्रितस्य—यत्र निष्कास्यते तत्राश्रयस्य दोषः, यत्र तु स्वयमपसरति तत्राश्रितस्येत्येवमाद्यत्र बोध्यम् ।

५ उक्तषड्विधेषु कः संधेयः कश्चाऽसंधेयः इति तर्कमाह तत्राद्य इत्यादिना ।

६ स्वयमपसृतत्वात् स्थिरबुद्धौ ।

७ 'यो' ख० । 'समानया रोषितः' इति सूत्रे पाठान्तरम् । तदनुसारं च समयाऽनादरतो यो—इति पाठो भवेत् । "इतस्ततश्च निष्कासितापसृतः स्थिरबुद्धिः, स चेदन्यतो बहु लभमानया निष्कासितः स्यात् ससारोऽपि तया रोषितो ममामर्षाद् बहु दास्यतीति संधेयः" इति सूत्रम् ।

निःसारतया त्यक्तो यदि वा स्याद् यः कद्र्यभावेन[1] ।
परया संधानेऽसौ भवति न योग्यस्तथाद्यायाः ॥ ९ ॥
आदावधिकप्रदतां प्रतिसन्धाय[2] तृतीयके संधिः ।
स्वयमपसृत्य[3] स्थितिमांस्तर्कयितव्यश्चतुर्थः स्यात् ॥ १० ॥
तत्र[4] विशेषाऽदर्शी दृष्ट्वा मय्येष तानसौ[5] रागात् ।
बहु दास्यति बहुविधमिह तर्केष्वेषं[6] स्मृतः प्रथमः ॥ ११ ॥
दृष्ट्वा तस्या दोषान् गुणबाहुल्यं विलोक्य मय्येषः ।
गुणदर्शी च सुदास्यति[7] तर्केष्वेष द्वितीयः स्यात् ॥ १२ ॥
बालो[8] नैकदृगयमिह रजनीरागोऽभि(ति)संधिमुख्योऽसौ ।

---

१ 'लाभेन' आ० पु० ।

२ अत्र छन्दोभङ्गः । '–धाय स्यात्तृती' ख० । तृतीय पूर्वतोऽधिकं दद्याच्चेत्तर्हि संधेयो नान्यथेति ।

३ इतः स्वयमपसृत्य अन्यत्र स्थितः इत्यर्थः ।

४ विशेषार्थितया यस्याः सकाशं गतस्तत्र विशेषादर्शी कमपि सुरतगतं विशेषमपश्यन् मयि च तान् = विशेषान् (विशेषादर्शीत्यत्र समासगतस्यापि विशेषशब्दस्य बुद्ध्या सन्निधापितत्वात् तानिति तदा परामर्शः-"दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ" ( साङ्ख्यकारिकायाम् ) इत्यत्र यथा ) दृष्टवान् रागाद् बहु दास्यतीति संधेयः ।

५ 'दृष्ट्यामप्येष तानसौ' क० । 'दृष्ट्यामप्येव तारसौ' ग० । 'दृष्ट्या सषतारसौ' आ० पु० । दृष्ट्यामप्येष तादृशो' ख० ।

६ 'ष्वेव' ख० ।

७ 'वसुदा' ग० ।

८ संधेयतायां तर्कद्वयमुक्त्वा सम्प्रति असंधेयतायां तर्कमाह बाल इत्यादिना । बालः=अविशेषज्ञः । नैकदृक्=नैकत्रदृष्टिः चलप्रकृतिरित्यर्थः । रजनीरागः=रजनी हरिद्रा

यत्किञ्चित्कारी वा ज्ञात्वैवं संध्यसंधी[1] च ॥ १३ ॥
निःसारितः स्वयं यः परतो यः स्यात् स्वयं तथा निसृतः।
तर्कयितव्यः सोऽपि हि तर्कास्तत्र प्रदर्श्यन्ते ॥ १४ ॥
अनुरागादागत्य हि बहु दास्यति मद्गुणैः स्फुटं ह्येषः।
भावितहृदयोऽन्यस्यां रमते न क्वापि कान्तायाम् ॥ १५ ॥
निष्कासितो मयाऽयं पूर्वमयोगेन लाञ्छयित्वा[2] माम्।
निर्यातयितुं यतते सहसा वैरानुबन्धं च ॥ १६ ॥
अभियोगादाहृतमिह[3] बहुधा विश्वास्य साध्वसौ नेतुम्[4]।

---

तस्या राग इव रागो यस्य सः अस्थिरप्रीतिरित्यर्थः। अतिसंधिः=अतिसंधानम्=वञ्चनम्। अतिसंधिमुख्यो वञ्चनप्रधानः 'अतिसंधानप्रधानः' इति सूत्रम्। यत्किञ्चनकारी कदाचिदनर्थमपि कुर्यात् इत्येवं ज्ञात्वा पूर्वोक्तपक्षद्वये संधिरुचितः, अन्तिमपक्षे चाऽसंधिरिति भावः।

---

१ 'साधु संधेयः' ख०।

२ 'भावयित्वा' ख०। 'शीलयित्वा' इति सूत्रम्। एतत्पाठद्वयमपि 'अनुरागप्रदर्शनेनानुप्रविश्य=विश्वास्य' इत्यर्थकम्।

३ अभियोगशब्देन कामिना कामिन्या वा स्वेतरस्य आत्मसात्करणाय क्रियमाणोऽनुरञ्जनात्मको व्यापारः स्वत्वरक्षार्थं धर्माधिकरणे क्रियमाणोऽभियोगो वेत्युभयमप्यत्र गृह्यते। तेन कामिना रञ्जयितुमभियुज्यमानयाऽनया ( तस्मिन्नभियोगकाल एव ) अभियोगात् न तु संप्रयोगात् यद् बहु धनं गृहीतम्, यद्वा पूर्वोक्त ( ६–३–२४ ) रीत्या धर्माधिकरणेऽभियोगं कृत्वा यद् धनं कामिनः सकाशादाहृतं तन्मां विश्वास्य नेतुं यतते, तदेव धनं निर्वेष्टुम् ( निर्वेशो भृतिभोगयोः इत्यमरः ) निर्वेशं (भृतिं) कर्तुं यतते न त्वन्यद्दास्यतीति वर्तमानेन कामुकेन सुलभधनेन सह मम भेदे ( मां भेदयितुं ) वा यतेत–येन मम लाभविच्छेदः स्यादित्याद्यकल्याणबुद्धियुक्तोऽसंधेयः, कल्याणबुद्धिः सत्यानुरागवांस्तु संधेय इति। ४ 'समानेतुम्' ख०।

निर्वेष्टुं[1] वा यतते भेदे वा[2] वर्तमानेन ॥ १७ ॥

एतेष्विह[3] संधेयो यः स्यात् यल्याणकृत् स्वयं बुद्ध्या ।
कर्ताऽकल्याणस्य तु संधेयो नैव नामाभिः ॥ १८ ॥

आनेय[4] एष यत्नाद्योऽन्यत्र स्यात्स्वयं स्थितिमान् ।
निष्कासितो मयाऽसौ पूर्वमलीकार्थतां प्राप्तः ॥ १९ ॥

अन्यां प्रार्थो(प्तो) यत्नादानेयोऽसौ मयाऽधुनेत्येवम् ।
भेदं यास्यत्येष हि संभाषणमाप्य मत्तो हि ॥ २० ॥

दर्पविघातं[6] यदि वा कुर्यामेतस्य वर्तमानस्य ।
अर्थागमकालोऽस्य हि जाता स्थानेऽस्य संवृद्धिः ॥ २१ ॥

लब्धावार(ऽ)[7]श्चायं दारावियुक्तस्तथा स्वतन्त्रश्च ।
अन्येन[8] प्रतिबद्धः पित्रा भ्रात्रा वियुक्तो[9] वा ॥ २२ ॥

---

१ 'संभोक्तुं' ख० ।    २ 'ना' ख० ।

३ इतोऽनन्तरम् 'इतो निष्कासितस्तत्र स्थित उपजपन्नेतेन व्याख्यातः ।' 'तेषूपजपत्स्वन्यत्र स्थिता स्वयमुपजपेत्' इति सूत्रद्वयं ग्रन्थकृता नाऽऽनूदितम् ।

४ विशीर्णस्य पुनः संधाने कारणान्याह आनेय इत्यादिना ।

५ 'प्रीत्या' ख० ।

६ 'दर्श' आ० पु० ख० ग० । 'अर्थ' क० सूत्रे च । 'दर्प-' सूत्रे पाठान्तरम् । पूर्वसंसृष्टं बहुधनं बहुदमानाय्य वर्तमानस्य कामुकस्य दर्पविघातं करिष्यामीति ।

७ 'लब्धाचार' ख० । 'लब्धमनेनाधिकरणम्' इति सूत्रम् । तदनुसारं च 'लब्धाधिकरणकोऽयं जाता' इति पाठः उचितः ।

८ 'नाप्रति' ख० । अन्येन धनवता प्रतिबद्धः संसृष्टः तद्द्वारा तस्य धनिन आयत्तीकरणेन लाभयोगात् । अन्येनाऽप्रतिबद्धः=अन्येन अनिषिद्धः सर्वव्यापारेषु स्वाधीनवृत्तिरित्यर्थः ।

९ 'विभक्तः (विभक्तधनः)' इति सूत्रे पाठः । 'वियुक्तः' इति तत्रैव पाठान्तरम् ।

सन्धिं कृत्वा ह्यमुना नायकमन्यं धनैर्युतं बहुभिः ।
अन्योपायैरवशं स्ववशे सम्प्रापयिष्यामि ॥ २३ ॥
[1]मानक्षतिर्यया मे तस्यामेनं विकारयिष्यामि ।
एतन्मित्रानुगता[2]ममुना वा भेदयिष्यामि ॥ २४ ॥
यदि वा चलचित्तत्वाल्लाघवमेनं समा[3]नयिष्यामि ।
अभिसं[4]धा इत्याद्या आनयने तस्य मन्तव्याः ॥ २५ ॥
दौ[5]ःशील्यं तन्मातुः कथयेयुः पीठमर्दाद्याः ।
निष्कासनस्य हेतुं पूर्वं सं[6]वृत्तरागेऽपि ॥ २६ ॥
विवशा निष्कामापि च तत्कृ[7]तया वर्तमानसंसर्गम् ।
इति च वदेयुः ख[8]लु ते कुशलाः संधानमाधातुम् ॥ २७ ॥
तस्याः साभिज्ञानैरेनं प्रत्यायेयुरनुरागैः ।

---

१ 'मानक्षतिर्यथा मे न स्यादेवं विधास्यामि' ख० ।

२ 'तानमु' ख० ।

३ अत्रेट् प्रामादिकः समानेष्यामीति भवति ।

४ 'अभिसंधय–' ख० । अभिसंधाः=अभिप्रायाः कारणानीति यावत् ।

५ संप्रति तस्याऽऽनयनार्थकानुपायानाह दौःशील्यम् इत्यादिना । मातुर्दौःशील्यं कथयेयुः=मातैवास्या दुःशीला तयैव त्वं निष्कासितः । नायिका तु त्वय्यनुरक्तैवेति ।

६ 'वृत्तानुरागे' ख० ।

७ 'कृत्वा' ख० । तत्कृत्या = मातुः प्रेरणयैव विवशाऽकामाऽपि च वर्तमानेन नायकेन सह संसर्गं कृतवतीति शेषः ।

८ 'कुरुते' आ० पु० क० ग० ।

[1]रचितोपकारयुक्तं चाभिज्ञानं भवेदत्र ॥ २८ ॥
इत्थं निर्णीता इह सुकरोपाया विशीर्णसन्धाने ।
खड्गाभिघातशीर्णप्रतिभटदारोपगीतेन ॥ २९ ॥
पूर्वोऽपूर्वा[2]त्र(द)धिकः श्रेयान् विज्ञातशीलरागत्वात् ।
भवति हि स सूपचारो यस्मादित्याहुराचार्याः ॥ ३० ॥
दुष्करसंधिः पूर्वो निर्धन इति नार्थदस्तथा तादृक् ।
अन्यादृशस्तु रक्तो भवति सुखेनेति केऽप्याहुः ॥ ३१ ॥
[3]पुरुषप्रकृतिस्तन्त्रं रागारागौ प्रतीति केऽप्याहुः ।
तेषामुत्कर्षं प्रति पूर्व[4]परज्ञानमू[5]लं स्यात् ॥ ३२ ॥
[6]गम्यादन्या भेद्या अन्याभ्यो वा तथा गम्याः ।

---

१ तेन नायकेन रचितो य उपकारोऽर्थसिद्धिरूपोऽनर्थप्रतीकाररूपो वा तेन युक्तं पूर्वानुरागस्याभिज्ञानं स्यात् कृतज्ञतासूचनार्थम् ।

२ द्विविधो हि कामी पूर्वः ( पूर्वसंसृष्टः ) अपूर्वः ( नवागतः ) च । तत्रोभयोः कः श्रेयानित्याह पूर्व इत्यादिना ।

३ पूर्वसंसृष्टो निष्पीडितार्थत्वेन निष्कासितत्वाद्दुष्करसंधिर्नात्यर्थमर्थदश्च अपूर्वस्तु सुखेनानुरज्यते, बहु ददाति चेति यदुक्तम् , तदपि न नियतम्—पुरुषप्रकृतिवैचित्र्यात् ! तथाहि कश्चिदपूर्वोऽपि दुष्करवशीकारः कदर्यश्च भवति, पूर्वसंसृष्टश्च निष्पीडितार्थोऽपि दाता निष्कासितोऽपि च स विश्वासः-इति ।

४ 'पूर्वापर–' आ० पु० ग० ।

५ '–मालं' आ० पु० ।

६ 'गम्यादन्यभिद्या अन्येभ्यो वा भवेत्तथा गम्या ।' आ०पु०ग० । संधाने संक्षेपतस्त्रिविधं कारणम्–नायकान्तरस्थम् , विशीर्णस्थम् , वर्तमानस्थं चेति । तदेव क्रमशो दर्शयति–गम्यादन्या–इत्यादिना ।

अभिघातः[1] स्थितिशालिनि संधानेनेति सिद्धान्तः ॥ ३३ ॥

संसर्गादन्यस्य हि भीतो नैवेक्षते व्यलीकानि ।

दूतान्तरानुपाते[2] कुशलो यः स्यात्तथा पुरुषः ॥ ३४ ॥

संसृष्टा यदि तेन स्यादेषा चारु[3]वारवामाक्षी ।

संसृष्टः पूर्वं किल कालैरिह वञ्चनीयः स्यात् ॥ ३५ ॥

अतिसक्तः पुरुषो यदि भर्यतो[4] बहुदेयदानशीलः स्यात् ।

स्तुतिरत्रा[5]ऽसक्ते स्यात् सक्ते कार्यस्तथाऽभिभवः ॥ ३६ ॥

एवं मानाऽहानिः सक्तं[6] नैव त्यजेत्तथा चैव ।

यदि[7] श(स)क्तश्च वशी स्यात् तस्योक्त्या प्राप्नुयादन्यम् ॥ ३७ ॥

अर्थमुपादायाऽस्मात् सक्तस्यैवानुरञ्जनं कुर्यात्[8] ।

---

१ स्थितिशालिनि=वर्तमाने नायके । अभिघातः=निराकरणम् । विशीर्णस्य प्रतिसंधानेन वर्तमानोऽबहुप्रदो विलक्षः स्वयमेवापसरतीति ।

२ 'याते' आ० पु० ग० ।

३ 'चारु' ख० ।

४ 'भवतो' ख० । भयतः=नायिका मां मा त्याक्षीदिति भयेन ।

५ असक्ते=विशीर्णेऽपि सानुरागे स्तुतिः=आदरः=अभिनन्दनं कार्यम्—स संधेय इत्यर्थः—ज्ञातभावत्वात् । सक्ते=संसृष्टेऽपि अननुरागिणि वर्तमाने नायके परिभवः अनादरः कार्यः—स त्याज्य इत्यर्थः । 'असक्तमभिनन्दत सक्तं परिभवेत्तथा ।' इति सूत्रम् ।

६ तदात्व एव सफलत्वात्सक्तमनुरागिणमत्यजन्ती कालान्तरफलाय विशीर्णेन सहाप्यच्छिन्नसंधाना स्यादिति भावः ।

७ यत्र तु तदात्वेऽन्यस्मात् संप्रयोगं विनापि महांल्लाभस्तत्र किं प्रतिपत्तव्यमित्याह—यदि सक्तश्चेत्यादिना । वशी=यथोक्तकारी ।

८ कान्तानुवृत्तोक्तविधिना ।

आयतिदृष्टिरिहादौ तद्वत् प्रीतौ च[2] लाभे च ॥ ३८ ॥
सौहार्दे च विरचयेत् संधानं सा विशीर्णपुंसो हि[3] ।
इत्थं रचितो यत्नाद्विधिरिह शीर्णस्य संधाने ॥ ३९ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे सार्धो रचितश्चतुर्थोऽसौ ॥ ४० ॥

---

१ पूर्वोक्तानुष्ठाने निरूप्यमाह–आयतीत्यादिना ।

२ 'प्रीतावलोके च' ख० ।

३ आयतिं प्रसमीक्ष्यादौ लाभं प्रीतिं च पुष्कलाम् ।
सौहार्दं प्रतिसंदध्याद्विशीर्णं स्त्री विचक्षणा ॥ इति सूत्रम् ।

Vidya Vilas Press, Gopalmandir Lane, Benares.

# अथ पञ्चमोऽध्यायः ।



षष्ठाधिकरणपञ्चममध्यायं साधु सार्थकीकर्तुम् ।
वात्स्यायनानुरागाद् यतते श्रीवीरभद्रोऽसौ ॥ १ ॥
[1]बाहुल्ये गम्यानां बहुधनलाभे तथा तेभ्यः ।
[2]स्यान्नैकस्मिंस्तस्या रुचिरुचितार्थे सङ्कुचिश्चेत् स्यात् ॥ २ ॥
देशं कालं स्थितिमथ गुणगणमात्मन्यवेक्ष्य सौभाग्यम् ।
अन्याभ्योऽतिशयादि च रात्रौ संवर्तयेद[3]र्घम् ॥ ३ ॥
गम्ये दूताः प्रेष्यास्त[4]त्प्रतिबद्धास्तथा स्वयं प्रेष्याः ।
[5]एकत्रापि च गच्छेल्लाभातिशये विहायाऽन्यान् ॥ ४ ॥

---

१ एकपरिग्रहा, अनेकपरिग्रहा अपरिग्रहा चेति त्रिविधा वेश्या । तत्राद्याया लाभ उक्तः । द्वितीयाया ( ६।६।३९–४१ ) वक्ष्यते । तृतीयायास्तु अपरिग्रहत्वेनानेकेभ्यो लभमानाया लाभविशेषा उच्यन्ते । तत्र पूर्वमपरिग्रहकारणमाह– बाहुल्ये–इत्यादिना ।

२ 'नैकस्मिंस्तस्या रुचिरुचितार्थाप्तिश्च सर्वेषु ।' ख० ।

३ '–येद्द्रवम्' ख० । 'अर्थं स्थापयेत्' इति सूत्रे । 'अर्घ–' इति तत्रैव पाठान्तरम् । देशकालात्मस्थित्याद्यवेक्ष्य तदनुरूपं रात्रौ अर्घं ( भाटकं ) नियतं कुर्यात्–एतावद् ग्रहीष्यामीति ।

४ तत्प्रतिबद्धाः=तेन गम्येन संसृष्टा आत्मीयाः ।

५ 'एकशायिनी भूयाल्ला–' ख० ।

कल्पान् परिग्रहोक्तान्[1] कुर्यादथ यौगपद्ये[2] तु ।
उभयोर्लाभे तुल्ये विनिगमकं[3] वाञ्छितद्रव्यम् ॥ ५ ॥
इत्येके[4] आचार्या भवति हिरण्यं विशिष्टमन्येभ्यः ।
वात्स्यायन इति कथयति तन्मूलं सर्वमूलत्वम्[5] ॥ ६ ॥
अप्रत्यादेयतया यदि च भवेत्तत्र चैव साजात्यम् ।
तत्र विशेषो ज्ञेयो व्यक्तिकृतः स्वर्णरूप्यादौ ॥ ७ ॥
यदि च न तत्र विशेषो जातिकृतो व्यक्तिसंभवो वापि ।
मित्रातिपातिगुणतस्तत्र विशेषोऽथवा प्रीतेः[6] ॥ ८ ॥

---

१ '–होक्तया' ख० । तावत्सु दिवसेषु अन्यनिरपेक्षानुरञ्जनेन परिग्रहकल्पमाचरेदित्यर्थः ।

२ '–पद्येन' ख० । यौगपद्ये = गम्ययौगपद्ये = यदि बहवो गम्या युगदुपस्थिताः, तेषु च एको हिरण्यम् ( कपर्दकान् ), अपरो वस्त्रम्, इतरश्च अलङ्कारं ददाति तुल्यमूल्यम्? तर्हि स्वयं हिरण्यादीनां मध्याद् यद्द्रव्यार्थिनी स्यात् तद्दायिनि गम्येऽभीष्टो लाभ इति तं स्वीकुर्यादिति भावः ।

३ '–गमनं' आ० पु० ।

४ छन्दोभङ्गभिया संधिर्न कृतः ।

५ '—मूलत्वात्' ख० । 'तन्मूलं सर्वकार्याणाम्' इति पाठे कल्पिते स्पष्टार्थता संपद्यते । अप्रत्यादेयतया = हिरण्यमन्तरा द्रव्यान्तरस्य आदातुमशक्यतया । हिरण्येन ( कपर्दकैः ) सर्वमन्यद् वस्त्रालङ्कारादिकमादातुं शक्यत इति हिरण्यदायिन एव लाभविशेष इति इतरान् विहाय हिरण्यदायी एवार्थनीय इति वात्स्यायनमतम् ।

६ सुवर्णरजतताम्रकांस्यभाण्डोपस्करास्तरणप्रभृतिषु सूत्रोक्तेषु द्रव्येषु पूर्वं पूर्वं विशिष्टं बोध्यमिति परपरद्रव्यदायिनः पूर्वपूर्वद्रव्यदायिनि विशेषो बोध्यः । गम्यैर्दीयमानेषु वस्तुषु विशेषाभावे च यो गम्यो मित्रेणानुमोद्येत, यत्र आयतिर्दृश्येत, यो गुणसम्पन्नः स्यात्, यस्मिन् वा नायिकायाः प्रीतिः स्यात्तत्र विशेषो बोध्यः । स एव चाभिगम्यः इति भावः ।

भवति[1] विशिष्टो रागी त्यागिन[2] इति केचिदाहुराचार्याः।
लुब्धो रागी त्यजति[3] हि न तु दाता निर्ममो द्रव्यम्[4] ॥ ९ ॥
तस्मान्नैष विशेषो वात्स्यायनसंमतस्ततो ज्ञेयः।
अधनाद्धनिनि विशेषो मत इह सर्वस्य संमत्या ॥ १० ॥
त्यागिप्रयोजनकृतोः[5] श्रेयानन्यो[6] मते तु केषांचित्।
एतस्य[7] तु[8] नयतोऽसौ कृतकृत्यस्तावता भूयात् ॥ ११ ॥
त्यागी तु पूर्वदानं नैव विचारेषु निर्ममः स्मरति।
आत्ययिकत्वकृतः खलु तत्र विशेषो मुनेरस्य ॥ १२ ॥
त्यागी कथितः[9] श्रेयान् कैश्चिद् विबुधैः कृतज्ञतो[10] लोके।

---

१ द्रव्यतो विशेषमुक्त्वा संप्रति गम्यतो विशेषमाह भवतीत्यादिना।

२ दातुः। ३ ददाति।

४ 'द्रव्ये' आ० पु० क० ग०। अनुरक्तो लुब्धोऽपि उपायप्रयोगेण द्रव्यं ददाति, त्यागी तु निर्ममत्वात्तेजस्वित्वाच्च प्रयासेनापि न रज्यते इति नाचार्योक्तो विशेषः साधीयानिति वात्स्यायनः।

५ '—वतोः' ख०। कदा दास्यतीत्यनिश्चितत्वात् त्यागिनः। प्रयोजनकृत् = कार्यकारी तदात्व एव कार्यकरणात्।

६ 'नयनो' आ० पु० ग०। अन्यः = द्वितीयः प्रयोजनकृदित्यर्थः।

७ एतस्य = वात्स्यायनस्य नयतः = नये मते (सार्वविभक्तिकस्तसिः सप्तम्यर्थे) प्रयोजनकृदेकवारं कार्यं कृत्वाऽऽत्मानं कृतकृत्यं मन्यते न पुनः करोति। त्यागी तु त्यागशीलत्वात् पूर्वं दत्तमेवास्यै न पुनर्ददामीति नापेक्षत इति स एव विशिष्ट इति वात्स्यायनः। तत्रापि प्रयोजनस्यात्ययिकत्वे तत्कर्तुरेव विशेषो बोध्य इति।

८ 'त्वनुनय' ख०।

९ 'पतितः' आ० पु०।

१० '–ताहेतोः' ख०।

तत्र त्यागी दृष्ट्वा दोषं पूर्वश्रमाऽदर्शी[1] ॥ १३ ॥
स्मरति पूर्वविराचितं यः स्यात् कृतविज्ञतापरिख्यातः ।
आयतितोऽत्र विशेषस्त (–षं त–) स्माद्वात्स्यायनः प्राह ॥१४॥
अर्थागमस्तु[2] मुख्यो मित्रोक्तेरत्र[3] नैव केषांचित् ।
अर्थागमस्तु सुलभो न तु मित्रं केन (च) नैवैतत् ॥ १५ ॥
अतिपाततो[4] विशेषं तत्र च वात्स्यायनो मुनिः प्राह ।
अनुनीय मित्रमत्र च तादृगिहार्थस्तु संग्राह्यः ॥ १६ ॥
अर्थागमो न मुख्योऽनर्थप्रतिघाततो मुनेर्[5]दृष्ट्या ।

---

१ पूर्वश्रमं नापेक्षत इत्यर्थः । 'चिरमाराधितोऽपि त्यागी व्यलीकमेकमुपलभ्य प्रतिगणिकया वा मिथ्या दूषितः श्रममतीतं नापेक्षते । कृतज्ञस्तु पूर्वश्रमापेक्षी न सहसा विरज्यते, परीक्षितशीलत्वाच्च न मिथ्या दूष्यत इति वात्स्यायनः । ' इति सूत्रम् । तत्राप्यायतितो विशेषः यदि त्यागिनि आयतिः अर्थाधिगमानर्थप्रतिकारादिहेतुः प्रभावोऽस्ति तर्हि तदपेक्ष्य तत्रैव विशेषो बोध्य इति भावः ।

२ सम्प्रति मित्रवचनार्थागमानर्थप्रतिघातादिषु कुत्र विशेष इत्याह अर्थागम इत्यादिना ।

३ 'रेव' ख० ।

४ 'अनिपातिनो' आ० पु० । 'प्रतिपातिनो' ख० । अतिपातत इति–यदि हि तदानीमुपेक्षितोऽर्थोऽतिपतति तदाऽर्थागम एव विशेषः । तस्मात् त्वद्वचनं श्वः कर्तास्मीति मित्रमनुनीयातिपातिनमर्थं गृह्णीयादिति भावः ।

५ मुनेः=वात्स्यायनस्य । अर्थागमानर्थप्रतिघातयोरर्थागमे विशेष इत्याचार्याः । अर्थस्येयत्ताऽस्ति । अनर्थस्तु अखण्डितप्रसरत्वादेकवारप्रसृतो न ज्ञायते क्वावतिष्ठते किं मूलघाते सर्वघाते वेति अनर्थप्रतिघाते एव विशेष इति वात्स्यायनः । तत्रापि गुरुलाघवकृतो विशेषः–लघोरनर्थाद् गुरुरर्थो विशिष्ट इत्यादि । अनर्थप्रतिकारेऽपि लघोरनर्थस्य प्रतिकाराद् गुरोरनर्थस्य प्रतिकारे विशेष इति । एवमर्थागमेऽपि लघोरर्थस्यागमाद् गुरोरर्थस्यागमे विशेष इति ।

अर्थः परिमितभावोऽतादृगनर्थः सकृद्वापि[1] ॥ १७ ॥
ज्ञेयस्तत्र विशेषो गुरुलाघवतस्तथा[2] द्वयोरनयोः ।
तत्संशयनिश्चययोस्तेन[3] विशेषः परिच्छिन्नः ॥ १८ ॥
देवकुलारामादेः[4] करणं दानं तथा परद्वारा[5] ।
तद्‍व्ययसहिष्णुपुरतो[6] वस्त्रादानं च धर्माय ॥ १९ ॥
उत्तमगणिकानामिह लाभातिशयोऽयमादरात्कथितः ।
रूपाजीवानामथ लाभातिशयं प्रवक्ष्यामः ॥ २० ॥
सर्वाङ्गालङ्कारः करणं रुचिरं तथा गृहप्रभृतेः ।
भाण्डैर्बहुलद्रव्यैस्तद्वत्परिचारकैश्चैव ॥ २१ ॥
उज्ज्वलपरिच्छदत्वं गेहेष्वथ वक्ति कुम्भदासीनाम् ।
नित्यं शुक्लं वासो योगः सौगन्धिकाद्येन ॥ २२ ॥
अन्नमपक्षुधमुक्तं स्वल्पस्वर्णोऽत्र भूषणोपचयः ।
इत्थं लाभातिशयो ज्ञातव्यः सर्ववेश्यानाम् ॥ २३ ॥
लाभा नैव तु नियता वैषम्याद्देशकालरागादेः ।
कासामपीह तासां वात्स्यायनभाषितेनैतत् ॥ २४ ॥

---

१ 'सकृच्चापि' आ० पु० ख० । २ 'गुणलाभवत–' ख० ।

३ अर्थसंशयादनर्थप्रतीकारे विशेष उपर्युक्तेनैव व्याख्यात इत्यर्थः ।

४ सम्प्रति वेश्याविशेषाणां विशिष्य ( पृथक् पृथक् ) लाभातिशयसाधनान्याह–देवकुलेत्यादिना ।

५ 'वेश्याद्रव्यस्याप्रतिग्राह्यत्वादन्यहस्तेन विप्रेभ्यो दानमित्यर्थः ।

६ 'तद्वत्–' ख० ।

७ लाभातिशयमिति शेषः ।

८ वेश्यानाम् ।

अन्यत्र[1] वारणार्थं सक्तं चाऽप्यन्यतस्तथा[3] हर्तुम् ।
हन्तुं लाभं तस्याः[4] स्वस्थलवृद्ध्यादिकर्तुं[5] वा ॥ २५ ॥
हन्तुमनर्थं स्वस्य च सक्तस्याऽन्यस्य[6] चाऽपि दोषार्थम् ।
उपकाराऽस्मृतिशीला यदि वा वैरं समाश्रित्य ॥ २६ ॥
इत्यर्थममङ्गलबुद्धिर्धनमल्पं साधु सोररीकुर्यात् ।
न धनं गृह्णीयादपि तेनाऽनर्थप्रतीघाते ॥ २७ ॥
त्यक्त्वैनमन्यनिरता स्यामहमेषैवं वा व्रजेत्परतः ।
धननाशोऽस्य[11] भवेद्वा पित्रादिर्वा समागच्छेत् ॥ २८ ॥
भविता स्थानभ्रंशश्चलचित्तस्याऽस्य चिन्तयित्वैवम् ।
गृह्णीयात्त्वरितं वसु वस्त्रादानैकनिष्ठा सा ॥ २९ ॥

---

१ अन्यत्र सक्तस्य गम्यस्य ततो वारणार्थम्—माऽन्यत्र यासीदिति ।

२ 'वा' ख० ।

३ अन्यतः=अन्यत्र ( सार्वविभक्तिकस्तसिः सप्तम्यर्थे ) अन्यस्यां सक्तम्—मद्वेषिण्यां सक्तोऽयमिति कृत्वा हर्तुं त्यक्तुम् ।

४ तस्याः=अन्यस्या नायिकायाः ।

५ स्थलं=स्थानम्=जनसंसदि विशिष्टदेशावस्थानम् । वृद्धिः=लाभातिशयः ।

६ सक्तस्य=पूर्वसंसृष्टस्य । अन्यस्य=वर्तमानस्य ।	७ 'वा' ख० ।

८ 'केवलप्रत्यर्थिनी वाऽकल्याणबुद्धिः' इति सूत्रस्थं पाठान्तरमनुसृतं ग्रन्थकृता । सूत्रे तु 'केवलप्रीत्यर्थिनी वा कल्याणबुद्धेरल्पमपि लाभं प्रतिगृह्णीयात् ।' ( केवलया प्रीत्याऽर्थिनी नार्थैः । कल्याणबुद्धेरविसंवादकात् ) इत्यस्ति ।

९ तद्द्वाराऽनर्थं प्रतिचिकीर्षन्ती आयत्यर्थिनी तु गम्याद् धनं नैव प्रतिगृह्णीयादिति ।

१० '–महमेवं' आ० पु० ख० ग० । एषैव=एषः–एव । अत्र संधिः प्रामादिकः छन्दोभङ्गभिया वा कृतः ।

११ सूत्रे तु 'नाशयत्यनर्थान्' इत्यस्ति ।

कृच्छ्राधिगतधना ये ये वा राजादिवश्यसर्वार्थाः ।
दूरादेव विवर्ज्यास्तत्सङ्गे क्काऽऽयतिस्तासाम् ॥ ३० ॥
अर्थानर्थौ येषां गमनाऽगमनप्रयुक्तमर्यादौ[2] ।
बहुदानं स्वल्पेऽपि च सा प्रेम्णा तान्[3] पथा गच्छेत् ॥३१॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे सार्थोऽभूत्पञ्चमोऽध्यायः ॥ ३२ ॥

---

१ इतः पूर्वम् "प्रतिज्ञातमीश्वरेण परिग्रहं लप्स्यते, अधिकरणं स्थानं वा प्राप्स्यति, वृत्तिकालोऽस्य वा आसन्नः, वाहनमस्यागमिष्यति स्थलपत्रं वा, सस्यमस्य पक्ष्यते, कृतमस्मिन्न नश्यति, नित्यमविसंवादको वेत्यायत्यामिच्छेत् , परिग्रहकल्पं वाचरेत ।" इति सूत्रग्रन्थो नानुदितो ग्रन्थकृता ।

२ '–मप्यादौ' ख० । 'मर्थादौ' आ० पु० । ३ 'सा स्वयं गच्छेत्' ख० ।

अनर्थौ वर्जने येषां गमनेऽभ्युदयस्तथा ।
प्रयत्नेनापि तान् गृह्य (गत्वा) सापदेशमुपक्रमेत् ॥
प्रसन्ना ये प्रयच्छन्ति स्वल्पेऽप्यगणितं वसु ।
स्थूललक्षान् महोत्साहांस्तान् गच्छेत्स्वैरपि व्ययैः ॥ इति सूत्रम् ।

अत्र गृह्येति प्रयोगो नाऽसाधुः । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति सूत्रे दुर्घटवृत्तिकृता 'क्वापि च्छन्दसि' इति सूत्रे अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वाद् भाषायामसमासे क्त्वो ल्यप्–इत्येवं 'स्वधनं त्यज्य गच्छति' इत्यत्र त्यज्येति ल्यपः साधितत्वात् गृह्येत्यत्रापि तथा बोध्यम् । 'विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्यः' इत्यनेन समासघटकपूर्वपदस्याव्ययस्य लोपे सति गृह्येति प्रयोगः साधुरिति त्वस्मद्गुरुचरणाः ( महामहोपाध्यायश्रीशिवदत्तदाधिमथाः ) । एतच्च तैः पाणिन्याचार्यकृतजाम्बवतीपरिणयकाव्यस्थस्य 'सन्ध्यावधूं गृह्य करेण भानुः' इति गृह्येति प्रयोगस्य रुद्रटालङ्कारव्याख्यायामसाधुतां प्रतिपादयन्तं नमिसाधुमाक्षिपद्भिः सतत्त्वबोधिनीकायाः सिद्धान्तकौमुद्याः 'समासेऽनञ्पूर्वे–' इति सूत्रस्थटिप्पण्यामुक्तम् । 'व्याधामोष्मं गृह्य चापं करेण' इति इति भासमहाकविकृतौ दूतघटोत्कचेऽप्ययं प्रयोगः ॥

# अथ षष्ठोऽध्यायः ।



षष्ठाधिकरणषष्ठं स्पष्टं कर्तुं समुद्यमं कुरुते ।
श्रीवीरभद्रसुकृती कृतिषु गरिष्ठो विशिष्टेषु ॥ १ ॥
अनुबध्नन्त्यप्यर्था आचरिताः काप्यनर्थसंदर्भम्[1] ।
निपुणैरनुसंधेया अनुबन्धाः संशयास्तेषाम् ॥ २ ॥
[2]दौर्बल्याच्च बुद्धेरतिरागात्ताद्दशात्तथा मानात् ।
अतिदम्भादातिहर्षादार्जवतः[3] स्तम्भतश्च विश्वासात् ॥ ३ ॥
अतिरोषादतिशयितात्तथा प्रसादान्[4]मदोद्भवाच्चैव ।
साहसतो दैवादपि भवति यदृच्छावशोऽनर्थः[5] ॥ ४ ॥
तेषां फलं निशामय निष्फलता स्यात् कृतव्ययस्यापि ।
[6]पातनकेशच्छेदौ स्याद्वैकल्यं तथाऽङ्गस्य ॥ ५ ॥
आयतिभङ्गोऽर्थस्य च भवति निवृत्तिर्भविष्यतस्तद्वत् ।

---

१ '–र्शम्' ख० । अर्थेषु क्रियमाणेषु अनर्था अप्युद्भवन्ति ते अनुबन्धशब्देनोच्यन्ते । क्वचिच्च संशया अपि आपतन्तीत्यर्थानर्थविषये अनुबन्धसंशयविचार आरभ्यते–अनुबध्नन्त्यर्था इत्यादिना ।

२ अनर्थादीनामुत्पत्तिकारणान्याह–दौर्बल्यादित्यादिना ।

३ '–दार्जयतः' आ० पु० ग० ।

४ 'प्रमादा–' ख० ।

५ 'ते बुद्धिदौर्बल्यादित्यादिसूत्रानुसारन्ते' इति बहुवचनेनोपक्रम्य 'भवति यदृच्छावशोऽनर्थः' इत्येकवचनेनोपसंहरन् प्रमादमग्न एव ग्रन्थकृत् ।

६ 'ताडन' ख० ।

आर्त्तस्य[1] च निःसरणं पारुष्यं गम्यनाशश्च ॥ ६ ॥
आदित एव निवृत्तिः कर्तव्यैषामनर्थजातानाम् ।
एवं विविच्य[2] बोधादुचिताऽपेक्षा[3]ऽर्थभूयिष्ठे ॥ ७ ॥
अर्थो धर्मः कामः कथितोऽसावर्थवर्गभेदस्तु ।
द्वेषाऽधर्मानर्थानाहुरनर्थस्य भेदांस्तु ॥ ८ ॥
एकस्मिन् क्रियमाणे स्यादनुबन्धः परस्य सिद्धिस्तु[4] ।
संदिग्धे फललाभे स्यादथवा नेति सन्देहः ॥ ९ ॥
शुद्धः संकीर्णः खलु भूयादेषोऽर्थवर्ष[5] जातः स्यात् ।
एकस्मिन् क्रियमाणे सुगमोत्पत्तौ द्विधा योगः[6] ॥ १० ॥
उत्पत्तौ तु समन्ताच्छास्त्रे योगः[7] समन्ततः कथितः[8] ।
एषामुदाहृतिः खलु कार्या ग्रन्थक्रमेणैव ॥ ११ ॥
अर्थत्रिवर्ग उक्तस्तद्विपरीतो भवेदनर्थस्तु ।

---

१ 'आर्तस्य' आ० पु० ख० ग० ।

२ 'एवंविधार्थ–' ख० ।

३ 'अर्थभूयिष्ठांश्चोपेक्षेत' इति तु सूत्रे ('अर्थभूयिष्ठांश्चेति–' अर्थबहुलाननर्थहेतूनुपेक्षेत । तत्र ह्यर्थहेतूनामेवोपायानां बाहुल्यात्' ज० मं० ) ।

४ इदमनुबन्धस्वरूपं दर्शितम् ।

५ '–क–' ख० । स्याद्वा नवेति फललाभे संदिग्धे शुद्धसंशयः । इदं वा स्यादिदं वेति संकीर्णः संशयः ।

६ '–योगाः' ख० । 'एकस्मिन् क्रियमाणे कार्ये कार्यद्वयस्योत्पत्तिरुभयतो योगः' इति सूत्रम् ।

७ 'योगाः' ख० ।

८ '–ताः' ख० ।

यस्य शुभस्य[1] प्राप्तौ ग्रहणीयत्वं धनप्राप्तिः ॥ १२ ॥
प्रार्थनमन्येषां स्यात् तेषामपि चाऽऽगमाऽऽयती तद्वत् ।
कामागमानुसारात्कथितोऽर्थोऽर्थानुबन्धोऽसौ[2] ॥ १३ ॥
यत्र च केवललाभः स्यादर्थस्याभितस्तत्र[3] ।
अर्थो गतानुबन्धः सोऽयं कथितो विचारेण ॥ १४ ॥
अर्थस्य ग्रहणे खलु लीलाऽऽयत्योः परिक्षयो यत्र ।
अर्थस्याऽथ विनिःसृतिरभिगमनं लोकनिन्द्यादेः ॥ १५ ॥
आयतिभङ्गकृदेषो (ह्य)र्थोऽनर्थानुबन्धकृत्कथितः ।
स्वेन व्ययेन गमने फलदोऽनर्थोऽप्यसम्बन्धः ॥ १६ ॥
स्वेन व्ययेन गमनेऽफलदोऽनर्थोऽर्थसङ्ग(ऽनुबन्ध)संहीनः ।

---

१ शुभस्य=उत्तमस्य नायकस्य । प्राप्तौ=अभिगमने ।

२ ग्रहणीयत्वादिभिरर्थैरनुबन्धो यस्य सः ।

३ '–भिघातनं तत्र' ख० । कस्य चिदविख्यातस्य अनुत्तमस्याभिगमने केवललाभ एव यत्र तत्र अर्थो निरनुबन्धः ग्रहणीयत्वादेरभावात् ।

४ '–लाभा–' ख० ।

५ 'आत्तस्या–' ख० ।

६ 'निन्दा–' ख० ।

७ इतः परम्–'श्रीवीरभद्रयुना वात्स्यायनसम्मतेनैव' इति श्लोकार्धो ऽधिकः ख० ।

८ '–गमनेऽफलदेनार्थोऽर्थसङ्गसंहीनः' ख० । शूरस्य महामात्रादेर्वा प्रभाववतः व्यसनप्रतीकाराद्यर्थं स्वेनापि व्ययेन गमनमनर्थोऽर्थानुबन्धः ( स्वकीयव्ययरूपस्यानर्थस्यापि व्यसनप्रतीकारादिरूपेणार्थेन अनुबद्धत्वात् ।

९ 'फलदेनार्थः सुखेन सम्बद्धः' ख० । 'कदर्यस्य सुभगमानिनः कृतघ्नस्य वातिसन्धानशीलस्य स्वैरपि व्ययैस्तथाराधनमन्ते निष्फलं सोऽनर्थो निरनुबन्धः ।' इति सूत्रम् ॥

स्वेन व्ययेन गमनेऽफलदोऽनर्थोऽसुखेन सम्बन्ध[1]ः(द्धः)॥१७॥
एवमिहार्थे योगो ज्ञेयः कामेन चैव धर्मेण।
कामेन कामयोगो धर्मस्याऽपीत्थमागमाज्ज्ञेयः॥ १८॥
[2]परितोषितोऽपि दद्याद् यदि वा नेत्यर्थसंशयः कथितः।
[3]अर्थं परित्यजन्त्या धर्मोऽसौ धर्मसंदेहः॥ १९॥
अर्थमभीष्टं दृष्ट्वा क्षुद्रे कामस्य [4]कामसंदेहः।
क्षुद्रोऽनर्थं कुर्याद् यदि वा नेत्[5]यर्थसंदेहः॥ २०॥
त्यक्तोऽसौ पञ्चत्वं यायात्तेनाऽत्र पातकोत्पत्तिः।
भूयादथवा नेति हि सन्देहः स्यादधर्मस्य॥ २१॥

---

१ कस्यापि राजवल्लभस्य क्रौर्यप्रभावाधिकस्य स्वैरपि व्ययैराराधनमन्ते निष्फलम्, अददतो निष्कासनं च दोषकरं (स हि निष्कास्यमानः क्रूरत्वात् प्रभविष्णुत्वाच्च शरीरघातादिकमनर्थं कुर्यात्) सोऽनर्थोऽनर्थानुबन्धः। एवं धर्मकामयोरप्यनुबन्धा योज्याः ' क्वचिद् धर्मो धर्मानुबन्धः, क्वचिन्निरनुबन्धः, क्वचिदनर्थानुबन्धः-इत्यादि प्रकारेण। एवमेव अर्थो धर्मानर्थकामद्वेषैः प्रत्येकमनुबद्धः, अनर्थो धर्मार्थकामद्वेषैः, अधर्मः कामानर्थधर्मैः, तथो द्वेषोऽपीत्येवमेषां संकरोऽपि ज्ञेयः।

२ शुद्धसंशयानधिकृत्याह—परितोषितोऽपि इत्यादिना।

३ इदमस्पष्टार्थं सूत्राननुसारि च। 'निष्पीडितार्थमफलमुत्सृजन्त्या अर्थमलभमानाया धर्मः स्यान्नवेति धर्मसंशयः।' इति सूत्रम्। 'यथास्वं वृत्तिर्धर्मः' इत्याचार्योक्तेः कामुकेभ्योऽङ्गार्पणेन अर्थार्जनं यथा वेश्याया धर्मः, तथा अर्थमलभमानाया निष्पीडितार्थस्य त्यागोऽपि। किं धर्मो न वेति धर्म्मसंशयः—इति च तदर्थः।

४ अभीष्टं नायकमनुपलभ्य परिचारकमन्यं वा क्षुद्रं गत्वा कामः स्यान्न वेति कामसन्देह इति भावः।

५ 'नेत्यनर्थसंदेह' ख०। छन्दोभङ्गावहोऽप्ययमेव पाठः साधुः। 'प्रभाववान् क्षुद्रोऽनभिमतोऽनर्थं करिष्यति न वेत्यनर्थसंदेहः।' इति सूत्रम्।

[1]रागाविवक्षयाऽर्थे दृष्ट्वा द्वेषस्तु[2] संशयो द्वेषे ।
इति कथिताः सन्देहाः शुद्धाः कामानुसारेण ॥ २२ ॥
अथ संकीर्णविशेषान् सन्देहेऽत्र प्रकाशितान् ब्रूमः ।
[3]अर्थोऽनर्थो वा स्यादित्यादिः संशयस्तादृक् ॥ २३ ॥
[4]अर्थः पराभिगमने संघ(है)र्षः शक्यते तथा सक्तात् ।
यत्राऽसौ कथितोऽर्थो विज्ञैरुभयत्र निश्चित्य ॥ २४ ॥
स्वेन व्ययेन गमनं परतः सक्ताच्च वित्तनाशः स्यात् ।
एष उभय[6]तोऽनर्थः कथितः शास्त्रानुसारेण ॥ २५ ॥
परतः सक्ताच्चैवं यदि भूयादर्थलाभसन्देहः ।
एष उभयतः कथितः सन्देहोऽर्थे विचारेण ॥ २६ ॥
व्ययवति पराभिगमने जातविरोधस्तथा पुमान् पूर्वः ।

---

१ सूत्रे तु 'रागस्यापि विवक्षायामभिप्रेतमनुपलभ्य विरागः स्यान्न वेति द्वेषसंशय' इत्यस्ति । अत्र किमपि ततोऽन्यथैवोपन्यस्तम् ।

२ 'द्वेषेऽनु–' ख० । 'द्वेषे नु' ग० ।

३ अर्थः स्यान्न वेत्यादि शुद्धसंशया उक्ताः । अर्थो वा स्यादनर्थो वेति सङ्कीर्णसंशयाः ।

'आगन्तोरविदितशीलस्य वल्लभसंश्रयस्य प्रभविष्णोर्वा समुपस्थितस्याराधनमर्थोऽनर्थ इति संशयः–' इत्यादि सूत्रोक्ता ज्ञेयाः ।

४ औद्दालकेरुभयतो योगानाह—अर्थः पराभिगमने—इत्यादिना ।

५ 'संघर्षतः' इति सूत्रे । 'संघर्षतः' इति तत्रैव पाठान्तरम् । अपूर्वस्याभिगमने तस्मादर्थः, सक्ताच्चापि संघर्षतः–( मा भूदनेनास्याः संप्रयोगः इति )स्पर्धमानात् अर्थः–( स हि स्पर्धया ददाति ) सोऽयमुभयतोऽर्थः । एवमुत्तरत्रापि ।

६ 'यत्र ( परस्य ) स्वेन व्ययेन निष्फलमभिगमनं सक्ताच्चामर्षिताद्वित्तप्रत्यादानं स उभयतोऽनर्थ ।' इति सूत्रम् ।

क्रोधात्स्यादपकारी न वेति सन्देह एकस्तु ॥ २७ ॥
सक्तोऽपि स्वप्रकृतिं[1] प्रत्यादास्यति न वेति वाऽन्यः[2] स्यात्।
एषोऽनर्थ उभयतः सन्देहः[3] शास्त्रदृष्ट्या स्यात् ॥ २८ ॥
[4]औद्दालकैरुभयतो योगा एवं पुरा[5] विनिर्णीताः।
अथ बाभ्रवीयदृष्ट्या योगानुभयत्र वक्ष्यामः ॥ २९ ॥
अभिगमने परतोऽर्थः सक्तादर्थस्तु[6] संगमानुदये[7]।
अर्थ उभयतः कथितः प्रथितोऽसौ कामशास्त्रेषु ॥३०॥
अभिगमने व्ययभूमाऽनभिगमनेऽनर्थसंक्रमश्च महान्।
एष उभयतोऽनर्थः कथितः प्रथितश्च तत्रैव ॥ ३१ ॥
[8]अभिगमनानभिगमने यत्र स्वीकृत्य पूर्वतः परतः।
स्यादर्थे संशीतिः[9] स्यादुभयत्राऽर्थसन्देहः ॥ ३२ ॥
प्रत्यादास्यति पूर्वः परगमने वा तथा न वेत्येवम्।

---

१ 'सक्तो वाऽमर्षितो दत्तं प्रत्यादास्यति–'इति सूत्रानुसारं 'स्वप्रत्तं' इति पाठ उचितः।

२ 'चान्यः' ख०।

३ 'संदेहाच्छा–' ख०।

४ 'निजदासिकै–' आ० पु०। 'औद्दालिकै–' क०।

५ 'पुरो–' ख०।

६ 'सक्तान–' आ० पु०।

७अनभिगमनेऽपि वशिनो रक्तात्सक्तादर्थ इति।

८ 'यत्राभिगमने ( परस्य ) निर्भयो दास्यति न वेति संशयोऽनभिगमने सक्तो दास्यति न वेति स उभयतोऽर्थसंशयः।' इति सूत्रम्।

९ 'संप्रीतिः' ख०।

परतो गमनेनार्थे[1] सन्देहस्ता[2]दृशोऽनर्थे[3] ॥ ३३ ॥
प्रचुरानर्थः परतः परतः स्यादर्थसंशयप्रभवः ।
अर्थः परतोऽनर्थः संदिग्धः स्यात्तथा परतः ॥ ३४ ॥
परतोऽनर्थः प्रचुरः परतोऽर्थ[4]स्याऽथ संशयः प्रचुरः ।
परतो[5]ऽर्थः प्रचुरः स्यात् परतोऽर्थस्याथ संदेहः ॥ ३५ ॥
संदेहः क्वचिदर्थे क्वापि तथाऽनर्थसंशयो भवति ।
इत्येवं कथिताः षड्[6] योगाः सांकर्यतो मुनिना ॥ ३६ ॥
रीत्याऽनया च कामे तद्वद्धर्मे च चारु जानीयात् ।
योगानुभयत्रा[7]सौ परिशीलितकामशास्त्रार्थः ॥ ३७ ॥
एतेषु यत्र भूयाननर्थो[8]ऽनर्थस्य वाऽधिका हानिः ।
तत्र विमृश्य सहायैः कुर्यादेषां प्रयोगं हि ॥ ३८ ॥

---

१ 'गमनेऽनर्थे' ग० ।

२ 'हात्ता–' ख० ।

३ यत्राभिगमने व्ययवति पूर्वो विरुद्धः प्रभाववान् प्राप्स्यते न वेति संशयोऽनाभिगमने च ( सक्तः ) क्रोधादनर्थं करिष्यति न वेति स उभयतोऽनर्थसंशयः ।' इति सूत्रम् । ग्रन्थकृता किमप्यन्यथैवोक्तम् , तस्य चायमर्थः–पूर्वः क्रोधाद्दत्तं=प्रत्यादास्यति न वेति व्ययवति परस्याभिगमने स प्राप्स्यते न वेति स उभयतोऽनर्थसंशय इति ।

४ 'नर्थस्य' आ० पु० ।

५ '–नर्थः' आ० पु० ।

६ 'एतेषामेव व्यतिकरेऽन्यतोऽर्थोऽन्यतोऽनर्थः, अन्यतोऽर्थोऽन्यतोऽर्थसंशयः, अन्यतोऽर्थोऽन्यतोऽनर्थसंशय इति षट् सङ्कीर्णयोगाः' इति सूत्रम् । ग्रन्थकृत्तु अत्र न सम्यङ् ।

७ 'नुभयप्राप्तौ' क० ।

८ '–न्नार्थो' क० ।

संभूय[1] च यामेकां गच्छन्त्येषां[2] परिग्रहो गोष्ठ्याः।
सा चैषां सानन्दं कुर्यादर्थं क्वचित्सङ्गे ॥ ३९ ॥
सुवसन्तादिषु[3] पूर्णं योऽमुं कुर्यान्मनोरथं मेऽद्य।
तं यास्यतीयमुक्तिं मात्रादेः कारयेदेनाम् ॥ ४० ॥
संहर्ष[4]ऽथ च जातिं गमनं कार्याणि लक्ष[5]येत्तेषाम्।
या संमति[6]स्तेषां भज[7]ति हि गोष्ठीवशीभावम् ॥ ४१ ॥
एकत्रार्थम(-र्थोऽ) नर्थः सर्वत्र स्यादथाऽन्यथाभावः।
अथवाऽनर्थः पारितो द्वयतोऽर्थः स्यादथाऽर्थेन[8] ॥ ४२ ॥
एवं योज्या अर्थेऽनर्थे संशीतयो यथा पूर्वम्।
एषां संकीर्णत्वं धर्मे कामे च सर्वतो योगः ॥ ४३ ॥
वात्स्यायनस्य चरितं परिशीलयतां प्रयत्नजातेन।
श्रीवीरभद्रकृतिना कथिता अर्थानुबन्धाद्याः[9] ॥ ४४ ॥

---

१ संप्रति समन्ततो योगान् दर्शयति सम्भूयेत्यादिना।

२ -एषा-वेश्या गोष्ठ्याः=विटगोष्ठ्याः परिग्रहः=भोग्या। 'संभूय च विटाः परिगृह्णन्त्येकामसौ गोष्ठीपरिग्रहः। सा तेषामितस्ततः संसृज्यमाना प्रत्येकं संघर्षादर्थं निर्वर्तयेत्।' इति सूत्रम्।

३ संघर्ष( स्पर्धा )कारणमाह--सुवसन्तादिष्वित्यादिना।

४ तेषां च 'संघर्षजेऽभिगमने कार्याणि लक्षयेत्' इति सूत्रम्। संघर्षजे=स्पर्धाजनिते। कार्याणि लाभान्। 'यावद्भिः परिगृहीता तेषामन्यतमस्यैकस्य।' द्वयोरन्यतरस्यैकशेषेण सह स्पर्धा तस्मादेकतोऽर्थं लक्षयेत् ... ) ( ज० मं० )

५ 'रक्षये-' आ० पु०। ६ 'संप्रथित-' आ० पु०।

७ 'भवति' आ० पु०।

८ '-र्थेन' आ० पु०।

९ '-बन्धानाः' आ० पु०।

[1]परिचारिका च कुलटा स्वैरिण्यथ कुम्भदासिका च नटी ।
रूपाजीवा गणिका शिल्पकृदाद्याः स्त्रियो वेश्याः ॥ ४५ ॥
सर्वासां तु सहाया गम्याश्च[2] स्युर्निजानुरूप्येण ।
अनुरञ्जनादिरुक्तो यश्चानर्थानुबन्धान्तः[3] ॥ ४६ ॥
रत्यर्थास्तु पुमांसो येन च नार्यस्तथा च रत्यर्थाः ।
शास्त्रार्थप्राधान्याद् योषिद्‌योगै[4]स्ततः कथितैः[5] ॥ ४७ ॥
नार्यो र[6]गरता अपि तद्वदिहार्थे र[7]ताश्च लोकैर्न[8] ।
रागः पूर्वं[9] कथितो वेश्यायोगस्तु तत्परतः ॥ ४८ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
वैशिकनाम्न्यधिकरणे षष्ठोऽध्यायः कृतः साङ्गः ४९ ॥

---

१ वेश्याविशेषानाह परिचारिकेत्यादिना ।

२ 'गम्या वा' ख० ।

३ '–बन्धानः' ख० ।

४ '–योगा–' ख० ।

५ 'कथिताः' ख० ।

६ 'नागरिका–' आ० पु० । 'नागरता–' ख० ।

७ 'नता–' आ० पु० ।

८ 'लोका ये' ख० ।

९ '–गश्च' ख० ।

सन्ति रागपरा नार्यः सन्ति चार्थपरा अपि ।
प्राक् तत्र वर्णितो रागो वेश्यायोगाश्च वैशिके ॥ इति सूत्रम् ।

## अथ औपनिषदिकं नाम सप्तममधिकरणम् ।

## अथ प्रथमोऽध्यायः ।



औपनिषादिकं सप्तममाधिकरणं कामशास्त्रसर्वस्वम् ।
व्याख्याति विश्वविदितो विमलयशा वीरभद्राख्यः ॥ १ ॥
अत्राध्यायद्वितयं सुभगङ्करणं तथा वशीकरणम् ।
योगा वृष्याः कथिता प्रथमाध्याये तदीये तु ॥ २ ॥
क्षतरागस्याऽऽनयनं वृद्धौ विधयो विचित्रयोगाश्च ।
औपनिषदद्वितीये अर्था वात्स्यायनेनोक्ताः ॥ ३ ॥
अध्यायार्थविभागं कृत्वेत्थं वीरभद्रभूपालः ।
औपनिषदिकप्रथमं प्रथितार्थं यत्नतः कुरुते ॥ ४ ॥
व्याख्यातं[2] स्मरसूत्रं विधिभिरथोक्तैस्तथाप्यभिप्रेतान् ।
अप्राप्नुवन्निहाऽर्थानौपानिषादिके यतो[3] भूयात् ॥ ५ ॥
त्यागगुणौ वयसा सह रूपं सुभगङ्करं[4] स्मृतं शास्त्रे ।

---

१ 'औषनिषादिकद्वितये' ख० ।

२ '–तस्मरसूत्रो–' ख० ।

३ 'स यत्नवान् भूपः' ख० । उक्तैर्विधिभिराभिप्रेतार्थसिद्धिमनासादयन् औपनिषदिकाधिकरणप्रोक्तैः सुभगङ्करणादिभिरुपायै रामामनोरमत्वं प्राप्तुं प्रयतेतेत्यर्थः ।

४ 'सुभगं' ख० । रूपं गुणो वयस्त्याग इति सुभगङ्करणम् । तत्र रूपं वर्णसंस्थानगतं चारुत्वम्, गुणा नायकसम्बन्धिनः पूर्वोक्ताः । ते हि स्वचमत्कारेण विरूपमपि सुभगं कुर्वन्ति । वयः कन्दर्पदर्पहेतुर्यौवनम् । तत्र हि व्यवायक्षमत्वं सौभाग्यं तनोति

एतत्सहजं प्रोक्तं प्रत्येकं कामशास्त्रेषु ॥ ६ ॥

तालीसकुष्ठतगरैः[1] सुभगङ्करणं हि लेपनं भवति ।

एतैरेव सुपिष्टैर्वर्तिं [2]लिप्त्वाऽक्षतैलेन ॥ ७ ॥

साधितमञ्जनमुक्तं सुभगङ्करणं द्वितीयमत्रैव ।

[3]उत्पलपत्रकुरुण्टैः सारविया चाऽथ शोथघ्न्या ॥ ८ ॥

---

निसर्गतोऽपि च यौवनं वनमिव तुषारप्लुष्टं वसन्तः शरीरं लहलहायमानलावण्यं विदधाति,—अत एवाभण्यते—'प्राप्ते तु षोडशे वर्षे गर्दभी अप्सरायते ।' इति ।

त्यागो दानम् । तद्धि सर्वातिशायि यतो विरूपो निर्गुणो वृद्धोऽपि वा दाता सर्वैरेवाभिगम्यते। आतिर्थङ्निकायमनुभवगोचरो हि दानमहिमा । अत एवोच्यते—

पुत्रादपि प्रियतरं खलु तेन दानं मन्ये पशोरपि विवेकविवर्जितस्य ।

दत्ते खले हि निखिलं खलु येन दुग्धं नित्यं ददाति महिषी ससुतापि पश्य ॥

इति ।

तस्मात्सौभाग्यमिच्छता नित्यस्नानोत्सादनादिसंस्कारवशाद् रूपं चेतोहारितां नेयम्, नायकगुणानां स्वस्मिन्नाधाने यत्नो विधेयः, युक्ताहारविहारादिसेवया वृष्ययोगप्रयोगैश्च यौवनं स्थिरतां नेयम्, उद्भूतं पलितादिकं च केशरञ्जनादिसंस्कारैरपह्नवनीयम्—येन पलित इत्यनादरो वैमुख्यं च न भवेत् स्त्रीणाम् ।

---

१ यत्र रूपादयो न सन्ति तत्र सुभगङ्करणे विधिरुच्यते तालीसेत्यादिना ॥ तगरं तु कन्दकमौत्तरापथिकम्, न नेपालभवम् । कुष्ठं यच्छ्वेतम् । ' ( ज० मं० )

२ 'कृत्वा' ख० । 'अक्षतैलेन=बिभीतकतैलेन। साधितमिति नरकपाले पातितमित्याम्नायः' ( ज० मं० )

३ 'उत्पलपत्रमिति यदाभ्यन्तरं न बाह्यम्, शेषाणां ( कुरण्टादीनां ) मूलम् ( ग्राह्यम् )' । ( ज० मं० ) सारविया=उत्पलसारविया । शोथघ्न्या=पुनर्नवया ।

सहदेवया (-देव्यापि) च[1] सिद्धं[2] तैलं तादृग्विधं[3] स्मृतोऽभ्यङ्गः।
मालाश्च तेन[4] युक्ता सुभगत्वं[5] प्रापयन्त्याशु ॥ ९ ॥
पद्मोत्पलमथशोषित[6]मिह युक्तं नागकेसरैः शुष्कैः[7]।
चूर्णं मधुघृतयोगादवलीढं[8] तादृशं भवति ॥ १० ॥
तानि[9] च तगरतमालैस्तालीसैश्चैव चारु युक्तानि।
अनुलिप्य[10] हेमघटितकमाक्षि तरक्षोर्मयूरस्य[11] ॥ ११ ॥
दक्षिणहस्ते धृतमिह सुभगङ्करणं परं मतं लोके[12]।

---

१ 'सु–' ख०।

२ सिद्धमिति उल्लिखितौषधैः कषायं कल्कं कृत्वा तैलविधानेन पक्वम्। तैलं तिलानां ग्राह्यम्।

३ 'विधं मुनिः प्राह' ख०। ४ तेन=उल्लिखतौषधचूर्णेन।

५ 'सभ्यत्वं' ख०।

६ 'पेषित–' ख०।

७ मधुघृते विषमपरिमाणे ग्राह्ये।

८ वमनविरेचनादिना पूर्वं शरीरं शोधयित्वाऽनन्तरमवलीढम्। तादृशम्=सुभगङ्करणम्। एकमासं प्रयोगेण शक्त्युपचये सति, न तु तदैवेति ज्ञेयम्।

९ तानि पूर्वोक्तानि पद्मोत्पलनागकेसराणि।

१० शरीरे लिप्त्वा सुभगो भवतीति शेषः।

११ मयूरस्येति यो न विशीर्णवर्हः। तरक्षोर्वेति यो मत्तः, स हि ग्रीष्मे माद्यति। अक्षीति दाक्षिणं वामं च ग्राह्यम्। द्वयोरेव सामर्थ्यमित्याम्नायः।' (ज० मं०)

१२ इतोनन्तरम् 'तथा बादरं मणिं शङ्खमणिं च तेषु चाथर्वणान् योगान् गमयेत्' इति सूत्रं नानूदितं ग्रन्थकृता। 'बादरं मणिमिति बदरस्य बदरीवृक्षस्योत्तरशिफाघटितां वृत्तगुलिकाम्। शङ्खमणिमिति दक्षिणावर्तशङ्खनाभिघटितम्। तथैवेति सुवर्णेनालिप्य हस्ते धारयेत्' (ज० मं०)

विद्यातन्त्राद्[1] विद्यायोगादिह यौवने[2] रुचिराम् ॥ १२ ॥
मासं संवत्सरमथ परतः संधा[3]रयेदिमामुचितम्।
मत्वा बालामथ तां लाल[4]सभूतेषु गम्येषु ॥ १३ ॥
योऽस्याः संह(घ)र्षादिह बहु वसुदद्यात्तदीयतां तस्याः।
कुर्यादितीह कथितः सौभाग्ये वर्धनोपायः ॥ १४ ॥
[5]गणिका यौवनद[6]र्पा(दर्पित)दुहितुः शीलादि चारु संवीक्ष्य।
[7]एतद्धनेन देयां कथयित्वा स्थापयेदेवम् ( नाम् ) ॥ १५ ॥
सा खलु मातुरविदिता नागरिकाणां सुतै[8]र्महार्धनिभिः।
प्रीत्यतिशयं विदध्याद्दृष्टि[9]र्गान्धर्वशालादौ ॥ १६ ॥

---

१ 'वियात्तन्त्राद् वियायोगानिह' ख०। यन्त्रतन्त्रादिग्रंथेभ्योपीदृशान् योगान् जानीयादित्यर्थः।

२ अनुष्ठानविशेषेणापि क्वचित् सौभाग्यं भवति। तत्पूर्वं परिचारिकाविषये प्राह यौवने इत्यादिना। स्वामी परिचारिकां प्राप्तयौवनां मासं संवत्सरं वा ( सूत्रे तु संवत्सरमात्रमित्यस्ति ) तथा संधारयेद् यथान्यैर्नाभिगम्यते। ततो रक्षणयोगात् कामिषु तदर्थमत्यन्तगृध्नुषु सत्सु योऽस्याः स्पर्धया बहु द्रव्यं दद्यात् तस्मै तां विसृजेदिति।

३ 'संवास–' ख०।   ४ 'ललाम–' ख०।

५ संप्रति गणिकायाः सौभाग्यवर्धनोपायमाह–गणिकेत्यादिना।

६ 'दर्पाद्–' ख०।

७ 'एतावद्धनदेयां' ख०। योऽस्या एतावद्धनं दास्यति सोऽस्याः पाणिं ग्रहीष्यतीति संसाध्य स्थापयेत् पण्यसधर्मत्वात्।

८ 'मति' ख०।

९ 'दृष्ट्वा' ख०। गान्धर्वशाला=संगीतशाला। आदिना कलाविदग्धभिक्षुक्यादिभवने सरस्वतीभवनोद्यानादिषु च दृष्टिर्दर्शनम्। उक्तस्थानेषु स्वं संदर्शयन्तीयं कामुकान् लोभयेदिति भावः।

तावद्दातुस्तस्य तु सा पाणिं ग्राहयेत्ततस्तस्याः।
ब्रूयात्तावदलाभे स्वीयं वस्वप्यतः[1] प्राप्तम् ॥ १७ ॥
प्रच्छन्नं[2] वा तैः सह संयोगं स्वयमजानती भूत्वा।
रचयित्वाऽथ ज्ञात्वा धर्मस्थेषु प्रकाशनं कुर्यात् ॥ १८ ॥
मोचित[3]कन्याभावां मनसिजसूत्रग्रहात्[4]तथा कुशलाम्।
आभ्यासिके[5] च[6] योगे निपुणां कन्यां स्वकीयेषु ॥ १९ ॥
सख्या वा दास्या वा सुभगामेनामवासृजन्त्येताः[7]।
इत्युपचाराः कथिताः केचिच्छास्त्रानुसारेण ॥ २० ॥
पाणिग्रहणविधातुर्वेश्याकन्या[8] तु वत्सरं वश्या।

---

१ 'स्वन्यतः' ख०। तत्तावदर्थमलभमाना तु स्वेनाप्येकदेशेन (स्वधनस्याप्येकदेशं तत्र योजयित्वा) दुहित्रे एतद्दत्तमनेनेति ख्यापयेत्' इति सूत्रम्। इदं च सौभाग्यख्यापनार्थं बोध्यम्।

२ पूर्वोक्तविध्यसंभवे योऽभिप्रेतस्तेन तस्याः कन्याभावं प्रच्छन्नं मोचयेदिति।

३ यस्यास्तु न कश्चित् कन्याभावं मोचयति तस्यास्तदर्थं विधिमाह मोचितेत्यादिना। सख्या वा दास्या वा मोचितकन्याभावाम्। (अङ्गुलिकर्मणा हारितकौमाराम्) इत्येवं सम्बन्धो बोध्यः। एवं कृते कथं सौभाग्यमिति सौभाग्यप्राप्तिकारणमाह 'मनसिजसूत्रग्रहात्तथा निपुणाम्' इत्यादि।

४ 'ग्रहां' ख०।

५ आभ्यासिके योगे पूर्वोक्तवाडवकप्रभृतौ। तथा कामशास्त्रयोगविज्ञां हि विदग्धेत्यभिपतन्ति नागरिगाः-इत्ययमेव पन्थास्तस्याः सौभाग्यस्य।

६ 'केषु योगैर्निपुणां' ख०।

७ एताः गणिकाः अवासृजन्ति वैशिके व्यवहारे प्रवर्तयन्ति।

८ 'कन्यास्तु वत्सरं वश्याः' आ० पु० क० ग०।

ऊर्ध्वं तस्मात् कालात् कथितः किल कामचारोऽस्याः ॥२१॥
तस्मिन्नप्यथ काले यस्यां रात्रावसौ[1] हि सापेक्षः ।
तस्यामन्यान्[2] हित्वा यायादित्येव शास्त्रार्थः ॥ २२ ॥
इति वेश्यापाणिग्रहमाह स सौभाग्यवर्धनं वीरः ।
एतेन व्याख्याता कन्या रङ्गोपजीविस्य[3] ॥ २३ ॥
उपकुर्यादेषां[4] यः सातिशयं चारु तौर्यत्रितये ।
तस्मै दद्यादेनां यः स्याद्रङ्गोपजीवी तु ॥ २४ ॥
सुभगङ्करणान्येवं पाणिग्रहणानि पण्यकन्यानाम् ।
उक्त्वा राजकुमारः संप्रति यतते वशीभावे[5] ॥ २५ ॥
कनक[6](क)णामरिचानां माक्षिकामिश्रेण चारुचूर्णेन ।
लिप्तध्वजस्य पुंसः संसर्गः[7] स्याद्वशीकरणम् ॥ २६ ॥
वातोद्भ्रान्तदलानि[8] हि मृतनिर्माल्यं[9] कलापिनामस्थि[10] ।

१ असौ पाणिग्राहः ।

२ 'मन्यं' ख० ।

३ रङ्गोपजीविनाम् ।

४ नृत्यगीतवाद्येषु ।

५ अभिप्रेतसिद्ध्यर्थं वशीकरणयोगान् वर्णयितुं यतते इत्यर्थः ।

६ कनकं धत्तूरः । अत्र तद्बीजानि ग्राह्याणि । कणा पिप्पली ।

७ तथा संसर्गं कुर्याद् यथा प्रयोज्या न जानाति लिप्तध्वजो मामभिगच्छतीति ।

८ 'नानाकन्ददलानि' ख० । वातोद्भ्रान्तपत्रं वामहस्तेन ग्राह्यम् ।

९ 'शव–' ख० ।

१० 'मयूरास्थि' इति सूत्रेऽस्ति । तस्य कलापिनामस्थि इति ग्रंथकृन्मतेऽर्थः । 'मयूरास्थि जीवंजीवकास्थि, न केकिसम्बन्धि ग्राह्यम् ।' ( ज० मं० )

संचूर्णितमवचूर्णनाविधिना[1] नारीवशीकरणम् ॥ २७ ॥
मण्डलकर्य्याश्चूर्णं मधुसंयुक्तं स्वयं प्रमीतायाः[2]।
स्नानादिह सामलकं कथितं परमं वशीकरणम् ॥ २८ ॥
वज्रस्नुह्याः[3] खण्डं[4] कृत्वा खलु चारु[5] गण्डकस्याऽथ[6]।
चूर्णैर्गन्धकशिलयोरभ्यक्तं[7] सप्तकृत्वस्तु ॥ २९ ॥
संशोष्य[8] चूर्णयित्वा मधुना लिप्तध्वजस्य संयोगः।
प्रोक्तोऽसौ सत्या अपि शास्त्रे परमो वशीकारः ॥ ३० ॥
कृत्वैतेन च धूमं रात्रौ तद्धूमसंच्छन्नम्[9]।
सौवर्णं चन्द्रमसं दर्शयतीति स्फुटं शास्त्रे ॥ ३१ ॥
वानरपुरीषमिश्रैरेतैर्यामवकिरेदसौ कन्याम्।
नान्यस्तामिह लभते यत्नशतेनापि संयुक्तः ॥ ३२ ॥

---

१ सूत्रे वशीकरणमिति सामान्यनिर्देशोऽस्ति। एवं चानेन योगेन नरनारीणामुभयेषामपि वशीकरणं भवतीत्यभिप्रयन् जयमङ्गलाकार आह 'चूर्णेन अवचूर्णनं स्त्रीणां शिरसि, पुरुषाणां पादयोः' इति।

२ स्वयंमृतायाः। मण्डलकर्य्यः=मण्डलकारिकाः जलजन्तुविशेषः 'या मण्डलेन पानीये संघशो भ्रमन्ति' ( ज० मं० ) 'मण्डलकारिका गृध्री' इति वृत्तिकृत्।

३ 'बद्धः स्नुह्याः' ख०।

४ 'खण्डे' आ० पु०।

५ 'चारु' इति नास्ति ख०।

६ '–कश्चापि' ख०।

७ 'मनःशिलागन्धपाषाणचूर्णेन' इति सूत्रम्।

८ 'शङ्खे च' ख०।

९ '–मसङ्गसंछ–' ख०।

खण्डान्यथ च वचाया लिप्तान्याम्रोद्भवैः शुभैस्तैलैः।
उत्कीर्य शिंशपायाः स्कन्धे संस्थापयेदयनम्[2] ॥ ३३ ॥
आचक्षतेऽनुलेपनमेतत् खलु देवकान्तनाम्नेह।
एष च परमः प्रोक्तः शास्त्र उपायो वशीकरणे ॥ ३४ ॥
उत्कीर्य यं च वृक्षं तनुशकलानीह खादिरसारस्य।
स्थाप्यन्ते षण्मासादग्रे तद्गन्धभाञ्जि स्युः ॥ ३५ ॥
अनुलेपनमिदमुक्तं शास्त्रे गन्धर्वकान्तनाम्नेह।
आचक्षते च परमं वशकरणं कामशास्त्रज्ञाः ॥ ३६ ॥
सहकारतैलमिश्रास्तगरविमिश्राः प्रियङ्गवश्चैव।
उत्कीर्य नागकेसरमयनविनिहितास्ततोऽपहृताः ॥ ३७ ॥
अनुलेपनमिदमुक्तं वशकरणं नागकान्तनाम्नेह।

---

१ 'गण्डकानि' इति सूत्रे 'खण्डकानि' इति तत्रैव पाठान्तरम्।

२ '-दथताम्' आ० पु०। '-दथ तान्' क०। अयनम्=षण्मासान्।

३ देवकान्तम्=देवप्रियम् (देवसत्त्वजनमनोहारि)।

४ आम्रतैललिप्तानीत्यत्रापि योज्यम्।

५ '-मासादेवैतद्ग-' ख०। त्रिलोकशब्दवत् षडवयवो मासः षण्मासस्तस्मादिति मध्यमपदलोपी समासोऽत्र बोध्यः।

६ खादिरसारशकलानि यं वृक्षमुत्कीर्य धृतानि तत्पुष्पगन्धवन्ति भवन्तीति।

७ प्रियङ्गुकुसुमानि।

८ इमानि देवगन्धर्वनागकान्तान्यनुलेपनानि देवगन्धर्वनागसत्त्वेष्वेव जनेषु प्रयोज्याणि। सत्त्ववर्णनं सामान्यतो रतिरहस्यादौ विशेषतश्च भरतमुनेर्नाट्यशास्त्रस्य द्वाविंशेऽध्याये वर्तते। तत्तत्रैव कणेहत्य निरीक्षणीयम्।

समशैलाञ्जनसहितं[1] पुण्यं वैशदं[2] च चक्षुष्यम् ॥ ३८ ॥
उष्ट्रस्याऽस्थि रसेन च भावितं[3] दग्धं हि भृङ्गराजस्य ।
उष्ट्रास्थ्यञ्जनिकास्थं[4][5] मृतसै(तस्यै[6] वाऽस्थ्ना दृशोर्दत्तम् ॥ ३९ ॥
एतेन व्याख्यातं[7] भासश्येनोरगाशिनामस्थ्नां[8] ।
अञ्जनमित्थमुदीरितमिह[9] वशदं वीरभद्रेण ॥ ४० ॥
पानं[10] सशर्करस्य च वस्तोरणमुष्कासिद्धदुग्धस्य[11] ।
उक्तो वृषत्वयोगो वात्स्यायनकामशास्त्रेषु ॥ ४१ ॥
क्षीरेण च सह पानं भवति विदार्यास्तथात्मगुप्तायाः[12] ।

---

१ स्रोतोऽञ्जनम् ।

२ 'कादम्बचक्षुष्यम्' ख० ।

३ भावितं त्रिःसप्तकृत्वः ।

४ 'उष्ट्राख्याञ्ज–' आ पु० क० ख० ग० । 'उष्ट्रास्थ्यञ्जनिकायाम्' इति सूत्रे 'उष्ट्रास्थिनलिकायाम्' इति जयमङ्गलाकारसंमतः पाठः । स्पष्टार्थश्चायम् । एतदनुसारम्–'उष्ट्रास्थ्नो नलिकास्थं' इति पाठः कल्पनीयः ।

५ '–ञ्जनिकं स्यात्' ख० ।

६ तस्यैव=उष्ट्रस्यैव । अस्थ्ना=अस्थिशलाकया ।

७ 'त्वाख्यातं' आ० पु० । ८ '–स्थ्नाम्' ख० ।

९ '–मिदमिह' आ० पु० ।

१० वशीकृतापि प्रयोज्या रन्तुमसमर्थस्य नाल्पीयसेऽपि प्रमोदायेति रमणशक्तिसंपादकान् वृष्ययोगानाह पानमित्यादिना । इतः पूर्ववर्ति—'उच्चटाकन्दश्चव्या यष्टीमधुकं च सशर्करेण पयसा पीत्वा वृषो (व्यवायक्षमः) भवति' इति सूत्रं नानूदितं ग्रंथकृता ।

११ वस्तः छागः, उरणः मेषः, तयोरन्यतरस्य मुष्केण ( वृषणेन ) सिद्धस्य (क्वथितस्य) दुग्धस्य गोपयसः । 'वस्तोरणसिद्धमुष्कस्य' आ० पु० ग० ।

१२ आत्मगुप्ता=कपिकच्छूः ।

ताद्दक् क्षीरिकया सह पानं क्षीरस्य चैताद्दक् ॥ ४२ ॥
पयसा सशर्करेण हि शृङ्गाटकसेरुचारुमधुका[2]नि ।
पिष्टानि साधु कृत्वा सहितानि क्षीरकाकोल्या ॥ ४३ ॥
मन्दानलेन पक्त्वा घृतमध्ये यावदर्थभोजेऽस्यै[3] ।
भवति समर्थः पुरुषोऽनन्ता[4]भिः स्त्रीभिरासङ्गे ॥ ४४ ॥
[5]आत्मरसैश्वटकानां निस्तुषतिलभावनं विधायेह ।
धूममाषचूर्णो(र्णं)निजगुप्तायाः फलं चैव ॥ ४५ ॥
शृङ्गाटकं कसेरुं क्षीरेणाज्येन चेदम[6]थ सितया ।
पायसमेतैः पक्वं भुक्त्वा वृषवद् भवेत् स्त्रीषु ॥ ४६ ॥
क्षीरेणैव विदार्या मोरट[7]याऽथो प्रियालबीजानाम् ।

---

१ वृषत्वकरामित्यर्थः । तत्र विदार्याः कन्दः, कपिकच्छ्वाः मूलम्, क्षीरिकायाश्च फलानि ग्राह्याणि ।

२ मधुकं मधूकम् (महुआ)-तत्फलमत्र ग्राह्यम् । मधुकं यष्टीमधु वा ।

३ '-र्थमालिह्य' ख० । यावदर्थभोजे यावत्तृप्तिभक्षणे ।

४ इयमतिशयोक्तिर्योगस्यास्य विशिष्टप्रभावं द्योतयति योगानां प्रभावातिशयप्रतिपादनाय एवंविधा अतिशयोक्तयो वैद्यकग्रन्थेषु बहुत्र लभ्यन्ते । यथा—

गोक्षुरकः क्षुरकः शतमूली वानरि नागबलातिबला च ।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति ॥

(योगतरङ्गिण्याम्) इत्यादौ ।

५ अयं श्लोकः ख० पुस्तकातिरिक्तपुस्तकेषु त्रुटितः ।

६ '-दमापच्य' ख० ।

७ 'स्वरसः क्वाथः प्रिया-' ख० । 'मोरत्थार्थो पिपाल-' आ० पु० क० म० । 'मोरटा इक्षुमूलम्' (ज० मं०) 'मोरटं मूलमैक्षवम्' इत्यमरात्-इक्षुमूलार्थको मोरट-

पाने स्त्रीषु बहुविधं पुरुषः सामर्थ्यमाप्नोति ॥ ४७ ॥

निजगुप्तया विदार्या शर्करया सर्पिषा मधुना ।

गोधूमचूर्णरचितां भुक्त्वा स्यात् पोलिकां शस्तः ॥ ४८ ॥

[1]चटकरसैः संसिद्धात्तण्डुलतः पायसं विनिर्वर्त्य ।

मधुना[2]ऽऽज्ये च भुक्तं सूते संभोगसामर्थ्यम् ॥ ४९ ॥

मध्वाज्यशर्कराणां मधुकस्याऽथ 'द्विकं[3]' द्विकं हि पलम्[4] ।

कर्षेण मधुरसा[5]याः पयसः प्रस्थेन चैवेह ॥ ५० ॥

अमृतमिदं हि षँडङ्गं[6] मेध्यं वृष्यं प्रयुक्तमायुष्यम् ।

युक्तरसं हि निगदितं वात्स्यायनवीरभद्राभ्यां[7] ॥ ५१ ॥

छागघृतं गोक्षीरं कल्कं मधुकस्य चैव पिप्पल्याः ।

पक्वं सह च कषायै[8]र्गुडाभीरुश्वदंष्ट्राणाम् ॥ ५२ ॥

---

शब्दः क्लीबे । स्त्रीलिङ्गस्त्वयं शब्दो मूर्वावाचकः, द्राक्षावाचको वा प्रयोगानुसारं मूर्वैव ग्राह्या 'मूर्वादेवी मधुरसा मोरटा–' इत्यमरः। 'मूर्विकायां तु मोरटा' इति मेदिनी ।

---

१ 'चटकाण्डरसभावितैस्तण्डुलैः पायससिद्धं मधुसर्पिर्भ्यां प्लावितम्–' इति सूत्रम् ।

२ 'मधुनाऽल्पेन च' ग० ।

३ इदं पदं त्रुटितं ख० पुस्तके ।

४ 'फलम्' आ० पु० ।

५ मधुरसाया 'तिक्तवल्लिकाया' ( ज० मं० ) ।

६ मध्वाज्यादिषट्पदार्थनिष्पन्नत्वात् षडङ्गमिति । मेध्यं मेधायै हितम् । युक्तरसं योगवाहि ।

७ '–भद्रेण' ख० ।

८ अत्र छन्दो भङ्गः । 'गुडशतमूलीश्वदंष्ट्रानाम्' इति पाठकल्पने तु न दोषः । ( शतमूली=शतावरी ) । अभीरुः शतावरी । श्वदंष्ट्रा गोक्षुरकः । 'शतावरीश्वदंष्ट्रा-

पुष्यारम्भे[1] प्राशनमन्वहमेतस्य वृष्यमायुष्यम् ।
मध्ये युक्तरसं ननु कथितं श्रीवीरभद्रेण ॥ ५३ ॥
क्षुण्णं[2] श्रीपर्णीफलमथ च[3] सभीरुः श्वदंष्ट्राख्या ।
आ[4]प्रकृतिनीरपक्वा कथितो (तं) नीरश्च (रं च)तु[5]र्भागम् ॥५४॥
पुष्यारम्भेणा[6]ऽस्य प्राशनमुक्तं दिने दिने प्रातः ।
मध्ये युक्तरसं ननु वृष्यं चैवाथ चायुष्यम् ॥ ५५ ॥
यवचूर्णं समभागं युक्तं चूर्णैस्तथा श्वदंष्ट्रायाः ।
पूपलिकामश्नीयादुत्थाय (द्विपल-)मन्[7]वहं प्रातः ॥ ५६ ॥
एतन्मेध्यमुदाहृतमायुष्यं वृष्यमथ च युक्तरसम् ।
श्रीवीरभद्रकृतिना नानाशास्त्राणि संवीक्ष्य ॥ ५७ ॥
आयुर्वेदाद्वे[8]दाद्विद्यातन्त्रात्तथाऽऽप्तवाक्येभ्यः ।

---

गुडकषाये' इति सूत्रम् । 'गुन्द्राभीरुश्वदंष्ट्राणाम्' ग० । तत्र गुन्द्रा भद्रमुस्तकापराख्या 'नागरमोथा' इति ख्याता । 'स्याद्भद्रमुस्तको गुन्द्रा' इत्यमरः ।

---

१ पुष्यनक्षत्रे प्राशनमारब्धव्यमिति । 'पुष्यः सर्वार्थसाधकः' इति शास्त्रात् ।

२ 'गुप्ता' ख० ।

३ 'मथ साऽभीरुः' इति पाठ उचितः । अभीरुः शतावरी तया सहिता श्वदंष्ट्रा गोक्षुरकः ।

४ आप्रकृत्यवस्थानात् ।

५ 'नीराच्चतुर्भागः' ख० ।

६ 'रम्भणम' ख० ग० ।

७ 'यैवान्वहं प्राप्तः' ख० ।

८ अथर्ववेदात् तत्र हि वृष्यायुष्यादयो बहवो योगाः समाम्नाताः । तत्प्रपञ्चश्च कौशिकसूत्रे ( अथर्ववेदीये ) द्रष्टव्यः । विद्यातन्त्रात् मन्त्रवादेभ्यः ओषधितन्त्रप्रभृतिभ्यश्च ।

योगा एते ज्ञेयाः प्रीते प्रीतिप्रदा नियम् ॥ ५८ ॥

अशुचिद्रव्ययुतानिह जीवाऽऽघातक्षमांस्तथा नैव ।

संन्दिग्धानुपयुञ्ज्याद्देहक्षैण्यप्रदांश्चैव ॥ ५९ ॥

ब्राह्मणसुहृदभिनन्दितमिह शिष्टैर्यच्च निन्दितं नैव ।

मङ्गल्यं च भवेद्यत्तद्भोक्तव्यं सुखे शक्तम् ॥ ६० ॥

श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।

औपनिषदाधिकरणे प्रथमोऽध्यायः कृतः सार्थः ॥६१॥



१ ये शुक्रशोणितादिभिः संयोज्याशनपानार्थं दीयन्ते । यथा—

भृङ्गस्य पक्षयुगलं शुकमांसयुक्तं स्वानामिकारुधिरकर्णमलं स्वबीजम् (वीर्यम्) ।

एतानि लेपविधिनाऽप्यथ भक्षणाद् वा कुर्वन्ति वश्यमखिलं जगदप्यकस्मात् ॥

इति,—

हृत्पादचक्षुर्नासानां मलं पूगे प्रदापयेत् ।

तत्पूगो भक्ष्यते येन यावज्जीवं वशे भवेत् ॥ इति च (कामरत्ने)इत्यादियोगेषु ।

२ योगद्रव्यमात्रासन्देहयुतान् ।

# अथ द्वितीयोऽध्यायः ।



औपनिषदद्वितीयं दोर्द्वैताऽद्वैतवारितद्वैतः ।
श्रीवीरभद्रनामा कामागमनिर्णयं कुरुते ॥ १ ॥
[1]यो रञ्जयितुमशक्तो भवति हि चण्डस्फुरत्स्मराऽऽवेगाम्[2] ।
संतनुयात् स तु योगानुक्तान् वात्स्यायनेनेह ॥ २ ॥
करमर्दनमारचयेत्[3] संबाधस्येह पूर्वमादरतः ।
रत्यारम्भं कुर्यादस्या रसलाभकालेषु ॥ ३ ॥
श्रान्तार्तयोरथापि च चण्डे वेगे तथाऽति[4]वयसोऽपि ।
आख्यातमौ[5]परिष्टकमानयनं नष्टरा[6]गस्य ॥ ४ ॥
अथवा[7]ऽपद्रव्याणि हि योज्यान्यत्रेति काममार्गज्ञाः[8] ।
तानि च वृष्यतया ननु [9]कर्मसहिष्णूनि गदितानि ॥५॥

---

१ द्विविधं सुरतम्–अपत्यफलं रतिफलं च । आद्यसिद्ध्यर्थं वृष्या योगा उक्ताः । द्वितियसिद्ध्ये नष्टरागप्रत्यानयनमाह यो रञ्जयितुमित्यादिना ।

२ '–वेगात्' आ० पु० ।

३ क्षोभणद्वारा रागोद्दीप्तये ।

४ 'च वयसो–' आ० पु० क० ग० ।

५ औपरिष्टकमत्रपूर्वोक्तं (२।९) न ग्राह्यम् । अत्रौपरिष्टकशब्देन उपरिष्टाद्भवं कर्म बाह्यरतविस्ताररूपम्, अङ्गुलिरतादिकं च बोध्यम् ।

६ '–न पूर्णरागस्य' ख० ।

७ 'सद्द्रव्याणि' ख० ।

८ '–ज्ञैः' ख० ।

९ स्मरसद्मक्षोभणक्षमाणि ।

हेमरजतकालायसदशनगवलताम्र(म्र)साध्यानि[1] ।
त्रापुषसीसमयानि[2] च मृदुशीतानीह[3] तान्याहुः ॥ ६ ॥
एताद्धि बाभ्रवीयाँ[4] वात्स्यायनसंमते तु तत्साम्याम् ।
ध्वजमानान्तरयुक्तं[5] बिन्दुभिरधिकैः कठोरान्तम्[6] ॥ ७ ॥
एँते[7] द्वे संघाटी त्रिप्रभृति स्यात्तु चूडकं क्रम(श)तः ।
लतिकामेकामिह वा व्य(व)सनैरावेष्टितां कुर्यात्[8] ॥८॥

---

१ कालायसं कोहम् । दशना गजदन्ताः । गवलं महिषश्रृङ्गम्–'गवलं माहिषे-श्रृङ्गे' इत्यमरः । 'यसरीतितामसा–' ख० । ( रीतिः पित्तलम्–''आरकूटोऽस्त्रियां द्रव्यं–रीतिः'' इति पित्तलपर्यायेषु रभसः । )

२ 'त्रपुष' ख० । 'त्रपुस' आ० पु० । 'त्रापुस–' ग० । त्रापुषं त्रपु(लाक्षा)-निर्मितम् । (त्रपुजतुनोः षुक्) ।

३ 'शीतलानि' ख० ।

४ उल्लिखितद्रव्यमयानि कृत्रिमसाधनानि विधेयानीति बाभ्रवीया मन्यन्ते । किञ्चिदेव कस्याश्चित् प्रियं भवतीति सात्म्यानुसारं दारुमयान्यपि तानि योज्यानीति वात्स्यायनमतम् ।

५ '–मुक्तं–' ख० । ध्वजप्रमाणयुक्तं कृत्रिमसाधनं विधेयमिति । इदं वलय-मिव पिनद्धं स्तब्धं ध्वजं संपीड्य तिष्ठति ।

६ '–रत्वम्' ख० ।

७ आकारप्रकारभेदेन तत्संज्ञाभेदानाह–एते इत्यादिना । एते द्वे वलये विशिष्ट-सन्धितया घटिते संघाटी इत्युच्येते । ध्वजस्यायामानुसारं त्रीणि चत्वारि वा वलयानि यथायोघटितानि चूडकम् । सीसकादिमयीमेकां लतिकामिव लतिकां तदाकारत्वात् ध्वजे वेष्टयेदित्येकचूडकः ।

८ 'बहुधा वसनैः सुवेष्टितं–' ख० ।

कथितोऽयमेकचूडः कञ्चुकमथ जालकस्तरूपाख्यम्[1] ।
मुखयुग्मकस्थरन्ध्रः[2] स्थूलोऽप्यथ कर्कशः कथितः ॥९॥
उक्तो[3] वृषणगुटिकया[4] युक्तो मानेन योजितः[5] कट्याम्[6] ।
नालकमलाबुकस्य च तैलाद्यैर्भावितो वेणुः[7] ॥ १० ॥
अपविद्धयोगनिचया इत्याद्याः शास्त्रदृष्टितः सुलभाः ।
[8]अपविद्धाऽव्यवहाराद् व्यधनं नन्तु दाक्षिणात्यानाम् ॥११॥
[9]व्यधनकृतौ तु विनाशः संभावित इति नोदितस्तथा स्पष्टः ।

---

१ '–कस्तनूपाख्यम्' ख० ।

२ '–क क्षुरप्रः' ख० ।

३ 'चुक्रो–' आ० पु० । 'वुक्को–' ख० ।

४ 'गुडि–' आ० पु० ।

५ 'मनुजेन जोषितः' क० ।

६ "उभयतो मुखच्छिद्रः स्थूलकर्कशपृषतगुटिकायुक्तः प्रमाणवशयोगी कट्यां बद्धः कञ्चुको जालकं वा" इति सूत्रम् ।

७ '–तं विष्वक्' ख० । उल्लिखितसंस्थानसंघटनाभावेऽलावुनालवेण्वादि योज्यम् । वेण्वलावू नालयोरग्रं प्रमृष्टं कार्यम् । तैलादिभावनया वेण्वादिमसृणतां गतं कर्मक्षमं भवति ।

८ अविद्धे ध्वजे योजनीया योगा उक्ताः । संप्रति विद्धे ध्वजे योज्यानाह–अपविद्धेत्यादिना । अपविद्धस्य अविद्धस्य ध्वजस्य अव्यवहारात् असंप्रयोगात् दाक्षिणात्या बाल्य एव ध्वजस्य कर्णयोरिव व्यधनं कुर्वन्ति यूनामपि ध्वजस्य व्यधनं विधीयते । तद्विधि-रपि 'युवा तु शस्त्रेण छेदयित्वा–' इत्यादिना सूत्रकृता विशदीकृतः । व्यधने विनाशः संभाव्यत इति ग्रंथकृता स उपेक्षितः ।

९ 'व्यथनं' आ० पु० ।

१० इदं पद्यं ख० पुस्तके त्रुटितम् ।

श्रीवात्स्यायनमुनिना तद्वच्छ्रीवीरभद्रेण ॥ १२ ॥

[1]हयगन्धाशैवालैर्बृहतीफलशवरकन्दसंघातैः।

माहिषनवनीतेन च नीलद्विष[वज्र]कर्णवज्ररसैः ॥१३॥

एकैकेन तु मर्दनमिह मासिकवर्धनं विनिर्दिष्टम्।

एतैरेव कषायैः पक्के तैले तु षाण्मास्यम्[2] ॥ १४ ॥

बृहतीफलरससहितं बीजं त्रपुसस्य दाडिमस्यापि।

अपि हस्तिकर्णकन्दः पक्को मृद्वग्निना तैले ॥ १५ ॥

परिमर्दनपरिषेकौ वृद्धिकरौ द्वौ विकल्पतः कथितौ।

अवबुध्येतत्याद्यानाप्तेभ्यो वर्धने योगान् ॥ १६ ॥

[3]स्नुहीकण्टककृतचूर्णैः पुनर्नवालाङ्गलीजटामिश्रैः।

वानरपुरीषसहितैः [4]कीर्णानैवान्यकामा स्यात् ॥१७॥

---

१ लघुना सूक्ष्मेण च ध्वजेन स्त्रीणां तृप्तेरभावात् तद्वर्धनविधय उच्यन्ते–हयगन्धेत्यादिना। इतः पूर्ववर्ति "एवं वृक्षजानां जन्तूनां शूकैरुपलिप्तं......स यावज्जीवं शूकजो नाम शोफो विटानाम्" इति सूत्रं नानूदितं ग्रंथकृता। हयगन्धा अश्वगन्धा। शैवालस्थाने सूत्रे 'जलशूकम्' अस्ति। द्विपकर्ण हस्तिकर्णाकारपत्रमटवीभवमौषधम्। वज्ररसैः वज्रवल्लीरसैः।

२ वर्धनमिति शेषः।

३ उक्तव्यतिरिक्तकार्यसिद्धये प्रकीर्णकन्यायेन चित्रयोगानाह–स्नुहीत्यादिना। 'स्नुहीकण्टक–' इत्यत्र छन्दोभङ्गः। 'स्नुक्कण्टक–' इति पाठकल्पने तु न दोषः। 'कर्कटककृत्तिचर्णैः' ख०। ( कर्कटककृत्तिः कर्कटकचर्म )।

४ उल्लिखितौषधचूर्णं यस्या उपरिक्षिप्यते सा नान्यं कामयेत इति।

सोमलताऽथावल्गुजभृङ्गौ लोहोऽथ जिह्विका चैव ।[1][2]
चूर्णैरेतेषामिह सह च तथा व्याधिघातेन ॥ १८ ॥[3]
जम्बूफलस्य रसतो निर्यासेनाऽथ तद्धनं रचितम् ।
अनुलिप्ते सम्बाधे गमनाद्रागो विनष्टः स्यात् ॥ १९ ॥[4]
चूर्णितगोपालिकया बहुपादिकयाऽथ जिह्विकाचूर्णैः ।[5]
माहिषतक्रविमिश्रै रचितस्नानक्रियायास्तु ॥ २० ॥[6]
नीपाम्रातककुसुमैर्जम्बूकुसुमैरथापि संयुक्तम् ।[7]
अनुलेपनं प्रतनुते दौर्भाग्यं तत्स्रजश्चैव ॥ २१ ॥[8]
आदरकृतः प्रलेपः फलतः किल साधु कोकिलाक्षस्य ।[9]

---

१ 'वनतुम्बी' ख० । अवल्गुजं वाकुचीफलम् । भृङ्गो भृङ्गराजः ।

२ 'लोहोपजिह्विका–' इति सूत्रम् । तदनुसारं 'लोहोपजिह्विके' इति पाठ उचितः । लोहं लोहचूर्णम् । 'उपजिह्विका या वल्मीकं चिनोति' ज० मं० ।

३ '–घातः स्यात्' आ० पु० क० ग० । व्याधिघातः आरग्वधः । 'व्याधिघातकः सुवर्णशेफालिका तस्या पत्रत्व( ङ् )निर्यासः' (ज० मं०) ।

४ उक्तौषधिलिप्तसंबाधायाः स्पर्शाद् ध्वजोत्थानं न स्यादित्यर्थः ।

५ गोपालिका शारिवा । 'गोपी श्यामा गोपवल्ली गोपा गोपालिका च सा' इति तत्पर्यायेषु वाचस्पतिः । 'बहुपादिका रुण्डिका या वर्षासु भवति' (ज० मं०) ।

६ माहिषतक्रमिश्रैरुल्लिखितौषधिचूर्णैः कृतस्नानायाः स्त्रिया गमनाद्रागो नश्यतीत्यर्थः ।

७ 'नीपापूत' आ० पु० । नीपः कदम्बः । आम्रातकः 'अंबाडा' इति ख्यातः ।

८ 'श्चैवम्' ख० ।

९ कोकिलाक्षः 'तालमखाना' इति ख्यातः । अत्र श्वेतकोकिलाक्षो ग्राह्यः ।

हस्तिन्याः संतनुते संहतिमिह चैकरात्रं हि ॥ २२ ॥

सर्षप(जक)सुगन्धयोगात् पद्मोत्पलकन्दचारुचूर्णानि ।

पिष्टानि सह च मधुना लेपे मृग्या विशालत्वम् ॥ २३ ॥

आमलकानि शुभानि तु भावनमासाद्य वल्गुजाफलतः ।

सोमार्कयोश्च दुग्धैः स्नुह्याः क्षीरैस्तथा निपुणम् ॥ २४ ॥

श्वेतीकरणमिदं स्यात् केशानां साधु भाषितं मुनिभिः ।

प्रत्यानयनमथोक्तं कथयामस्तन्मतेनैव ॥ २५ ॥

मदयन्तिकाकुटजयोर्बीजैर्मूलैश्च सूक्ष्मपर्णीनाम् ।

गिरिकर्णिकया चैव स्नानं तादृगू विनिर्दिष्टम् ॥२६॥

अभ्यङ्गः कृष्णीकृतिरेतैरेवेह पक्वतस्तैस्तैः (ले)।

---

१ स्मरसद्मसंकोचम् ।

२ स्मरमन्दिरस्येति शेषः ।

३ 'नया साधु' ख० ।

४ 'क्षारैः' इति जयमङ्गलाकारसंमतः पाठः । तन्मते सोमार्कादीनां क्षारान् कृत्वा परिस्राव्य जलं ग्राह्यम् ।

५ 'केतीकरण' आ० पु० ।

६ उक्तयोगप्रयोगेण श्वेतीकृतानां केशानां पुनः कृष्णीकरणम् ।

७ मदयन्तिका मल्लिका 'कुटजकः यस्येन्द्रयवाः फलानि' ज० मं० ।

८ 'श्लक्ष्णपर्णी' इति सूत्रे । 'श्लक्ष्णपर्णी काश्मीरी' ( ज० मं० ) गिरिकर्णिका विष्णुक्रान्ता । 'आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता' इत्यमरः ।

९ तादृक्=प्रत्यानयनम्=श्वेतीकृतकेशानां पुनः कृष्णीकरणम् ।

१० कषायकल्कीकृतैरुल्लिखितैरेवौषधिभिस्तैले सुपक्वैरभ्यङ्गोऽपि केशानां कृष्णीकारकः ।

क्रमतः प्रत्यानयनं कथितं शास्त्रानुसारेण ॥ २७ ॥
श्वेताश्व[1]स्य च मुष्कस्वेदो यदि सप्तकृत्वः स्यात् ।
[2]आलक्तकस्य योगाद[3]स्य श्वेतोऽधरो भवति ॥ २८ ॥
प्रत्यानयननिदानं तस्य च मदयन्तिकादि पूर्वोक्तम् ।
बहुपादिका च कुष्ठं तगरं सुरदारु ताली च (तालीसम्) ॥२९॥
एतैरुपलिप्तो यो वंशः स्याद्वज्रकन्दकैश्चैव ।
शब्दश्रवणादस्य हि वश्या स्यान्नाऽत्र सन्देहः ॥ ३० ॥
धत्तूरकफलयुक्तादभ्यवहारान्महानिहोन्मादः ।
प्रत्यानयनं कथितं भुक्ताज्जीर्णाद् गुडादस्य ॥ ३१ ॥
बहुपादिका च तगरं कुष्ठं हरितालमथ शिला चैव ।
एतद्भक्षितबर्हिणै[4]ः स्पृशति पुरीषेण लिप्त[5]स्तु ॥ ३२ ॥
हस्तो[6] यद्वस्तु न तद्दृश्यं भवतीति चित्रयोगज्ञाः ।
[7]क्षीराक्तृत्युदकं स्या(न्मिश्रं) तृणभस्मतैलाभ्याम् ॥३३॥

---

१ 'श्वेतायाश्च सुपुष्पैः' ख० ।

२ अलक्तकमेव आलक्तकम् ( स्वार्थेऽण् ) 'श्वेताश्वस्य मुष्कस्वेदैः सप्तकृत्वो भावितेनाऽलक्तकेन लिप्तोऽधरः श्वेतो भवति' इति सूत्रम् ।

३ 'योगेऽप्यस्य' ख० ।

४ अत्र छन्दोभङ्गः ।

५ 'बर्हिणयुवतिपुरीषेण' ख० । 'लिप्तहस्तस्य' ख० ।

६ 'हस्ते' ख० । 'हरितालमनःशिलाभक्षिणो मयूरस्य पुरीषेण लिप्तहस्तो यद्द्रव्यं स्पृशति तन्न दृश्यते' । इति सूत्रम् ।

७ 'क्षीरैः सेचनत. स्याद्दृष्टस्तृणभस्मतैलाभ्याम् । ' ख० ।

अभयाम्रातकयोरथ पिष्ट्वा[1] श्रवणप्रियङ्गुकाभिश्च।
लिप्तमिह[2] लोहभाण्डं ताम्रं स्यान्नात्र सन्देहः॥ ३४॥
श्रवणप्रियङ्गुतैलैर्निर्मोकस्याऽथ पट्टवस्त्रस्य।
वर्त्या दीपात्पश्यति काष्ठं सर्पाकृतिं परितः[3]॥ ३५॥
गोः[4]क्षीरस्य च पानं श्वेतायाः श्वेतवत्सायाः[5]।
आयुष्यं च यशस्यं तद्वृद्धिप्राशिषः[6] शस्ताः॥ ३६॥
श्रीवीरभद्रकृतया वात्स्यायनसूत्रतत्त्वसंकथया।
अवगतकामविचारो भवतु जनो निन्दिताद्विरतः॥ ३७॥
काममिवाऽस्मात् प्रत्ययमर्थं धर्मं तथाऽखिलं लोकम्[7]।
बुद्ध्वा कुरुते यात्रा[8] या अविगीताः पुराणेषु॥ ३८॥
श्रीवात्स्यायनमुनिरपि चक्रे यद्ब्रह्मचर्यमास्थाय।

---

१ 'पिष्टैः' ख०। अभया हरीतकी। 'हरीतक्याम्रातकयोः' इति सूत्रम्। जयमङ्गलाकारमते तु 'हरीतकाम्रातकयोः' इति पाठः। 'हरीतकमिति पत्रंतरथिता यस्य चटचट इति प्रतीतिः। आम्रातकः प्रसिद्धः। तयोः पत्रमित्यर्थः। श्रवणप्रियङ्गुका ज्योतिष्मतीति' ( ज० मं० )

२ 'लिप्तं हि' क०।

३ विस्मायनमेतत्।

४ 'गोक्षीरस्य' आ० पु० क० ख० ग०।

५ 'श्वेतजीववत्सायाः' आ० पु० क० ख० ग०।

६ 'तद्वद्धपुषः प्रपोषाय' ख०।

७ लोकवृत्तम्।

८ 'कुरुतात् कृतयो या' ख०। 'कुरुते यत्नाद्' क०। यात्राः=व्यवहारान्।

तदधीत्य[1] कामशास्त्रं[2] ये दुर्मार्गा न ते शिष्टाः[3] ॥ ३९ ॥
वेदेषु नाऽभिचारा नागमविद्यासु[4] वाममार्गाः किम्[5] ।
तद्वदिहापि विगीता अर्थाः केचिन्न दोषाय ॥ ४० ॥
विदिताखिलतत्त्वा अपि मुनयो नैवेह निन्दिताचरणाः ।
पशवस्त्वनियतविषया दोषस्तस्मान्न शास्त्रस्य ॥ ४१ ॥
इत्यत्रयथार्थ[6] निबन्धानवलोक्याऽसौ स्मरागमे निपुणः ।
अकृत स्फुटतत्त्वानि हि वात्स्यायनकामसूत्राणि ॥४२॥
श्रीरामचन्द्रनन्दनवीरश्रीवीरभद्रदेवेन ।
एकान्तमार्यमतिना निर्णीतः कामसूत्रार्थः ॥ ४३ ॥
यः कर्णति वसुदाने पार्थति समरोत्सवावदानेषु ।
धर्मे धर्मति रूपे नकुलति सहदेवति ज्ञाने ॥ ४४ ॥
शरदिन्दुबिम्बगङ्गास्मरहरसदृशाच्छकीर्तिचन्द्रेण ।
हरभालानलविषमप्रतापतापेन तेनेह ॥ ४५ ॥
सप्ताधिकरणमेतत् षट्त्रिंशत्परिमितस्फुटाध्यायम् ।
वात्स्यायनकृतशास्त्रं व्याख्यातं वीरभद्रेण ॥ ४६ ॥
दृष्ट्वैतदस्फुटार्थान्यपि सूत्राणीह कामशास्त्रस्य ।

---

१ '-दवेत्य' ख० ।

२ 'शास्त्रे' ख० ।

३ 'शिक्ष्याः' ख० ।

४ 'विद्याश्च' ख० ।

५ 'मार्गाणाम्' ख० ।

६ '-थाय' ख० ।

बुद्ध्वा रचयतं[1] धीरो[2] लीलाश्वेतोभुवोऽनुमताः ॥ ४७ ॥
यावन्मुरभिदि लक्ष्मीः शम्भोर्वामाङ्गमद्रिजा यावत् ।
तावदसौ स्मरकुतुकं ग्रन्थः प्रख्यापयन्नस्तु ॥ ४८ ॥
हरलोचनहरलोचनरसशशिभिर्विश्रुते[3] समये ।

---

१ 'ति' ख० ।

२ 'धीरो' ख० ।

३ हरलोचनानि त्रीणि । रसाः षट् । शशी एकः । अङ्कानां वामतो गतिः । तेन सम्वत् १६३३ मितः समय एतद्ग्रन्थनिर्माणस्येति ।

इत्येतज्जगतां हिताय मुनिना वात्स्यायनेनोदिते
शास्त्रे कामपुमर्थसार्थकरणे "कन्दर्पचूडामणिः" ।
आर्याभिर्नृपवीरभद्ररचितं व्याख्यानमर्थद्युता
टिप्पण्या खलु रामचन्द्रकुशलेनाऽपूरि विद्वन्मुदे ॥ १ ॥
श्रीमद्विक्रमनृपतेरब्दे शशिवसुनवेन्दु (१९८१) संख्याते ।
आश्विनविजयादशमीदिवसे पूर्णोऽयमारम्भः ॥ २ ॥
विज्ञानयुगे ह्यस्मिन् विज्ञानमिदं रहस्यमसुलभ्यम् ।
वज्ञानिक्या दृष्ट्याऽधीत्य लभन्तां जना मोदम् ॥ ३ ॥
रचयन्तु वश्यहृदयां गृहिणीं तद्धृदयकामनापूर्त्यां ।
रक्षन्तु चाऽपवादेनाऽस्पृष्टं स्वं कुलं विमलम् ॥ ४ ॥
संवर्धयन्तु वंशं सत्पुत्रैर्धर्ममर्थमथ कामम् ।
संप्राप्य वीर्यतेजोनिधयः पुरुषायुषं सुजीवन्तु ॥ ५ ॥
सहजप्रेमरसाला छद्माऽपेता विनीतशुचिशीला ।
सुमना उपायनिलयः सरला स्थितिहेतुरमलचरिता या ॥ ६ ॥
यस्यामायतते मे धर्मश्चार्थश्च कामश्च ।
यस्याः समस्तचेष्टा भवन्ति मम सौख्यसिद्धये तस्यै ॥ ७ ॥

फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्मेरः ॥ ४९ ॥
श्रीवीरभद्रकृतिना शास्त्रेऽसमबाणशासनानुसृते ।
औपनिषदाधिकरणे चरमोऽध्यायः कृतः साङ्गः ॥ ५० ॥



---

प्रियपत्न्यै सुखदेव्यै प्रभावतीत्यपरनाममाहितायै ।
प्रेमोपहारवेषा सुखप्रभैषा समर्प्यते समुदम् ॥ ८ ॥
सर्वे भवन्तु सुखिनः सर्वे पश्यन्तु मङ्गलानि सदा ।
विलसन्तु चापि भुवने गुणगृह्याः सन्ततं सन्तः ॥ ९ ॥



सोयं सटीकः **कन्दर्पचूडामणिः १४५ पत्राङ्कात्**
समाप्तिं यावत् काशीस्थ न्यायोपाध्याय काव्यतीर्थ-
**पंडित ढुण्ढिराजशास्त्रिणा** संस्कृतो
**विद्याविलास यन्त्रालये जय-**
**कृष्णदासगुप्तमहोदयेन**
मुद्रयित्वा प्रकाशितः ।



# टिप्पणीपरिशिष्टम्.

(१) अधि० १। पृ० ६। श्लो० १७ 'आयासजं जनाना०' इत्यत्र 'आयासजं जनाना०' इति ख० पुस्तकीयः पाठः समीचीनः। आयासजम् = आयासः सुरतसंमर्दस्तज्जन्यमिति तदर्थः।

(२) अधि० १। पृ० ७। टि० पं० ६ अन्ते—

वस्तुतस्त्वयमर्थः—यत्रोभयोः (भोग्ययोः) सुखं स कामः-इति यत्कामस्य लक्षणमुक्तं तत् न शुद्धं लक्षणम्। यतः—इदम्=अव्यवहितपूर्वोक्तं कामस्य लक्षणं बाललालनाचारेण=बाललालनक्रियायां याति=अतिव्याप्तं भवति=लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वमित्येवं रूपातिव्याप्तिदोषग्रस्तं भवति। यतः उल्लिखितं लक्षणं लक्ष्ये कामे वर्तमाने सत् अलक्ष्ये बाललालनेऽपि वर्तते, तत्रापि उभयोः (लालयितृलालनीययोः) सुखस्य सत्त्वात्। अतः स्वाभिमतमदुष्टं कामलक्षणमाहाऽग्रिमेण (लीलायामिह यस्यामित्यादिना) पद्येन। कामस्य लक्षणान्तराणि यथाः—१ इष्टविषयाभिलाषः कामः। २ स्त्र्यादिविषयकोऽभिलाषः कामः। ३ स्त्रीपुंसव्यतिकरतृष्णा कामः। ४ स्त्रीषु जातो मनुष्याणां स्त्रीणां च पुरुषेषु वा। परस्परकृतः स्नेहः काम इत्यभिधीयते। ५ आत्मनोऽनुकूलेषु सुखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तद्गुणानुसंधानाऽभ्यासेन यो रत्यात्मको गर्धः स कामः। इति। ६ "कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः।" (दशकु० उ० २) "श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाऽधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः (सामान्यकामः)। स्पर्शविशेषविषयात्त्वस्याभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिः प्राधान्यात् कामः" इति काम लक्षणं सूत्रे। 'तस्मात् स्प्रष्टव्यविशेषविषयो विशेषः कामः' इति जयमङ्गलाकारः॥

(३) अधि० १। पृ० ७। श्लो० २१—मनसिजसूत्रम् = कामसूत्रम्। नागरासङ्गः = नागरैः "अग्राम्यमण्डनः प्राज्ञः शुचिः श्रीमांश्च

गायनः । नर्मगोष्ठीप्रतिष्ठश्चषड्गुणो नागरः स्मृतः ।" इति लक्षितैश्चतुरैर्जनैरासङ्गः संपर्कः ।

(४) अधि० १ । पृ० ७ । श्लो० २३--शास्त्रकथंताऽवबोधविधुरस्य=शास्त्राणां (शास्त्रसंबधिनी=शास्त्रप्रतिपाद्या कथंता=(कथमिदं कार्यमित्येवंरूपा) इति कर्तव्यता तस्याः ('कथान्तावबोध-' इति पाठे तु शास्त्रकथानाम्=शास्त्रीयवादानाम् अन्तः=सिद्धान्तः तस्य) अवबोधः=ज्ञानं तेन विधुरस्य=रहितस्य=शास्त्रप्रतिपादितेतिकर्तव्यताज्ञानशून्यस्य ।

(५) अधि० १ । पृ० ७ । टि० पं० १६ अन्ते-एतदेवाभिलक्ष्य कामेन संबन्धो नित्य इत्युक्तं कौटलीयेऽर्थशास्त्रे (८ । ३)-"नित्यश्च कामेन संबन्धः कृतकर्मणः फलोपभोगार्थः" इति ।

(६) अधि० १ । पृ० ८ । श्लो० २५-"विशेषस्य सामान्यस्य वा कामस्य संप्रयोगपराधीनत्वात् स्त्रीपुंसयोरुपायमपेक्षते । सा चोपायप्रतिपत्तिः कामसूत्रात्-" इति सूत्रम् । स्त्रीपुंसयोः संप्रयोगो हि धर्मरत्यर्थपुत्रसंबन्धपक्षवृद्धयादिबहुफलप्रेप्सामूलो नान्तरेणोपायप्रतिपत्तिं घटत इति तदर्थं युक्तं कामशास्त्रप्रणयनमितिभावः । अन्यदप्युक्तम् :—

"स्वनारीरक्षणं पुंसां परनार्यनुरञ्जनम् ।
बन्धभेदेङ्गितज्ञानमेतत् फलमुदाहृतम् ॥"

इति (स्मरदीपिका) ।

"असाध्यायाः सुखं सिद्धिः सिद्धायाश्च नुरञ्जनम् ।
रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम् ॥"

इति (रतिरहस्यम्)

(७) अधि० १ । पृ० ९ । श्लो० ३—प्राग्यौवनाच्च युवतिरिति-"प्राग्यौवनात् स्त्री प्रत्ता च पत्युरभिप्रायात् ।" इति सूत्रम् । 'प्राग्यौवनाद् युवतिः' इति सूत्रीयं पाठान्तरमनुसृतं ग्रन्थकृता । तत्र युवतिरिति विशेषवाच्यपि सामान्यपर्यायो बोध्यः । तदाह जयङ्गलाकारः--"प्राग्यौवनात् स्त्री कामसूत्रं तदङ्गविद्याश्चाधीयित पितुर्गृह एव । तरुण्याः परिणीतत्वादस्वतन्त्रायाः कुतोऽध्ययनम् । 'युवतिः' इति पाठान्तरम् । तत्र स्त्रीपर्यायो द्रष्टव्यः ।" इति ।

(८) अधि० १। पृ० ६। श्लो० १० - तदङ्गविद्याः = कामशास्त्रस्याऽवयवभूता विद्याः एताभिर्विना तदप्रवृत्तेः। ज्ञेयाश्चान्यास्तथा मूलात् = अन्या अत्रा ऽनुक्ताः कलाः मूलात् कामसूत्रात् ज्ञेयाः। तत्र चतुः षष्टिकला द्विधा--'पाञ्चालिकी चतुःषष्टिः' इति सूत्रे संकेतिता आलिङ्गनाद्या बाभ्रव्यप्रोक्ताः सांप्रयोगिकाधिकरणे सविस्तरं वक्ष्यमाणा इह शास्त्रे प्रधानभूताः 'कामस्य तदात्मकत्वात्' (सूत्रे), गीताद्याश्च तन्त्रान्तरे दृष्टाः उद्दीपनादिरूपेण कामस्याङ्गभूता इतीहोद्दिष्टाः। तत्र गीताद्याः शैवतन्त्रोक्ताः भागवतस्यश्रीधरकृतायां व्याख्यायां काव्यादर्शस्य च प्रेमचन्द्रतर्कवागीशकृतटीकायाम् (३।१६२), भामहोद्दिष्टाः काव्यालङ्कारसूत्रवृत्तिटीकायां कामधेनौ (१।३।७), रामचन्द्रबुधेन्द्रकृते शृङ्गारशृङ्गाटकनाम्नि रुक्मिणीवल्लभव्याख्याने, (शास्त्रान्तरोक्ताः चतुःषष्टिमूलकलाः) जयमङ्गलायां च क्वचित् क्वचिद् भेदेन परिगणिताः जैनागमीये ग्रन्थान्तरे च स्त्रीणां चतुःषष्टिर्भिन्ना, पुरुषाणां च भिन्ना परिगणिता। सेयं कलाचतुःषष्टिरुपविद्येत्युक्ता महाकविराजशेखरेण काममीमांसायाम् (२ अ० )—"उपविद्यास्तु चतुःषष्टिः। ताश्च कला इति विदग्धवादः।" इति। उपकलाः चतुःशतम् "अन्या उपकलाः प्रोक्तास्तासां संख्या चतुःशतम्।" इति भामहोक्तः। "आस्वेवान्तरनिविष्टानामन्तरकलानामष्टादशाधिकानि पञ्चशतान्युक्तानि" इति तु जयमङ्गलाकारः। कलानां ज्ञानस्य सामान्यं प्रयोजनमुक्तं ग्रन्थकृता—'अबलाः कलासु कुशलाः' इत्यादिना वक्ष्यमाणपद्येन। व्यक्तिभेदेन विशिष्टं फलं तु सूत्र प्रोक्तम् :—

"आभिरभ्युच्छ्रता वेश्या शीलरूपगुणान्विता।
लभते गणिकाशब्दं स्थानं च जनसंसदि॥
पूजिता सा सदा राज्ञा गुणवद्भिश्च संस्तुता।
प्रार्थनीयाऽभिगम्या च लक्ष्यभूता जायते॥
योगज्ञा राजपुत्री च महामात्रसुता तथा।
सहस्रान्तः पुरमपि स्ववशे कुरुते पतिम्॥
तथा पतिवियोगे च व्यसनं दारुणं गता।
देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति॥

गायनः। नर्मगोष्ठीप्रतिष्ठश्चषड्गुणो नागरः स्मृतः।" इति लक्षितै-श्चतुरैर्जनैरासङ्गः संपर्कः।

(४) अधि० १। पृ० ७। श्लो० २३--शास्त्रकथंताऽवबोध-विधुरस्य=शास्त्राणां (शास्त्रसंबधिनी=शास्त्रप्रतिपाद्या कथंता=(कथमिदं कार्यमित्येवंरूपा) इति कर्तव्यता तस्याः ('कथान्ताव-बोध-' इति पाठे तु शास्त्रकथानाम्=शास्त्रीयवादानाम् अन्तः=सिद्धान्तः तस्य) अवबोधः=ज्ञानं तेन विधुरस्य=रहितस्य=शा-स्त्रप्रतिपादितेतिकर्तव्यताज्ञानशून्यस्य।

(५) अधि० १। पृ० ७। टि० पं० १६ अन्ते-एतदेवाभिलक्ष्य कामेन संबन्धो नित्य इत्युक्तं कौटलीयेऽर्थशास्त्रे (८। ३)-"नित्यश्च कामेन संबन्धः कृतकर्मणः फलोपभोगार्थः" इति।

(६) अधि० १। पृ० ८। श्लो० २५-"विशेषस्य सामान्यस्य वा कामस्य संप्रयोगपराधीनत्वात् स्त्रीपुंसयोरुपायमपेक्षते। सा चोपा-यप्रतिपत्तिः कामसूत्रात्-" इति सूत्रम्। स्त्रीपुंसयोः संप्रयोगो हि धर्मरत्यर्थपुत्रसंबन्धपक्षवृद्धयादिबहुफलप्रेप्सामूलो नान्तरेणोपाय-प्रतिपत्तिं घटत इति तदर्थं युक्तं कामशास्त्रप्रणयनमितिभावः। अन्य-दप्युक्तम्:—

"स्वनारीरक्षणं पुंसां परनार्यनुरञ्जनम्।
बन्धभेदेङ्गितज्ञानमेतत् फलमुदाहृतम्॥"

इति (स्मरदीपिका)।

"असाध्यायाः सुखं सिद्धिः सिद्धायाश्च नुरञ्जनम्।
रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम्॥"

इति (रतिरहस्यम्)

(७) अधि० १। पृ० ९। श्लो० ३—प्राग्यौवनाच्च युवतिरिति-"प्राग्यौवनात् स्त्री प्रत्ता च पत्युरभिप्रायात्।" इति सूत्रम्। 'प्राग्यौ-वनाद् युवतिः' इति सूत्रीयं पाठान्तरमनुसृतं ग्रन्थकृता। तत्र युवति रिति विशेषवाच्यपि सामान्यपर्यायो बोध्यः। तदाह जयङ्गला-कारः--"प्राग्यौवनात् स्त्री कामसूत्रं तदङ्गविद्याश्चाधीयीत पितुर्गृह एव। तरुण्याः परिणीतत्वादस्वतन्त्रायाः कुतोऽध्ययनम्। 'युवतिः' इति पाठान्तरम्। तत्र स्त्रीपर्यायो द्रष्टव्यः।" इति।

(८) अधि० १ । पृ० ६ । श्लो० १० -तदङ्गविद्याः = कामशास्त्रस्याऽवयवभूता विद्याः एताभिर्विना तदप्रवृत्तेः । ज्ञेयाश्चान्यास्तथा मूलात् = अन्या अत्रा ऽनुक्ताः कलाः मूलात् कामसूत्रात् ज्ञेयाः । तत्र चतुः षष्टिकला द्विधा--'पाञ्चालिकी चतुःषष्टिः' इति सूत्रे संकेतिता आलिङ्गनाद्या बाभ्रव्यप्रोक्ताः सांप्रयोगिकाधिकरणे सविस्तरं वक्ष्यमाणा इह शास्त्रे प्रधानभूताः 'कामस्य तदात्मकत्वात्' (सूत्रे), गीताद्याश्च तन्त्रान्तरे दृष्टाः उद्दीपनादिरूपेण कामस्याङ्गभूता इतीहोद्दिष्टाः । तत्र गीताद्याः शैवतन्त्रोक्ताः भागवतस्यश्रीधरकृतायां व्याख्यायां काव्यादर्शस्य च प्रेमचन्द्रतर्कवागीशकृतटीकायाम् ( ३ । १६२ ), भामहोद्दिष्टाः काव्यालङ्कारसूत्रवृत्तिटीकायां कामधेनौ (१ । ३ । ७), रामचन्द्रबुधेन्द्रकृते शृङ्गारशृङ्गाटकनाम्नि रुक्मिणीवल्लभव्याख्याने, (शास्त्रान्तरोक्ताः चतुःषष्टिमूलकलाः) जयमङ्गलायां च क्वचित् क्वचिद् भेदेन परिगणिताः जैनागमीये ग्रन्थान्तरे च स्त्रीणां चतुःषष्टिर्भिन्ना, पुरुषाणां च भिन्ना परिगणिता । सेयं कलाचतुःषष्टिरुपविद्येत्युक्ता महाकविराजशेखरेण काममीमांसायाम् (२ अ० )—"उपविद्यास्तु चतुःषष्टिः । ताश्च कला इति विदग्धवादः ।" इति । उपकलाः चतुःशतम् "अन्या उपकलाः प्रोक्तास्तासां संख्या चतुःशतम् ।" इति भामहोक्तः । "आस्वेवान्तरनिविष्टानामन्तरकलानामष्टादशाधिकानि पञ्चशतान्युक्तानि" इति तु जयमङ्गलाकारः । कलानां ज्ञानस्य सामान्यं प्रयोजनमुक्तं ग्रन्थकृता—'अबलाः कलासु कुशलाः' इत्यादिना वक्ष्यमाणपद्येन । व्यक्तिभेदेन विशिष्टं फलं तु सूत्रे प्रोक्तम् :—

"आभिरभ्युच्छ्रिता वेश्या शीलरूपगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥
पूजिता सा सदा राज्ञा गुणवद्भिश्च संस्तुता ।
प्रार्थनीयाऽभिगम्या च लक्ष्यभूता जायते ॥
योगज्ञा राजपुत्री च महामात्रसुता तथा ।
सहस्रान्तःपुरमपि स्ववशे कुरुते पतिम् ॥
तथा पतिवियोगे च व्यसनं दारुणं गता ।
देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति ॥

नरः कलासु कुशलो वाचालश्चाटुकारकः ।
असंस्तुतोऽपि नारीणां चित्तमाश्वेव गच्छति ॥
कलानां ग्रहणादेव सौभाग्यमुपजायते ।
देशकालौ त्वपेक्ष्यासां प्रयोगः संभवेन्नवा ॥" इति ।

(९) अधि० १। पृ० १४। टि० प० ७ अन्ते—इह = गोष्ठ्याम् याः लोकानां कान्ताः मनोहारिण्यः तथा उज्ज्वलाः = अग्रास्याः ताः पण्यस्त्रियः कला वा संपूज्याः—इति सम्बन्धः। गुणग्राहकताख्यापनार्थमुत्साहवर्धनार्थं च पूजा उचितैव ।

(१०) अधि० १। पृ० १५। टि० पं० ४ अन्ते—'दैवतिकी रथयात्रा-' इति पाठे तु दैवतिकीः = देवतासंबन्धिनीः रथयात्राः देवतारथयात्रोत्सवान् (यत्र विविधानर्घवसनालङ्कारशृङ्गारिता देवताप्रतिमा रथेष्वारोप्य नगरादौ भ्राम्यन्ते महता समारोहेण) इत्यर्थो बोध्यः ।

(११) अधि० १। पृ० १७। श्लो० ४७—इमाः क्रीडाः सरस्वतीकण्ठाभरणेऽपि (५।९३-९६) किञ्चिद्भेदेन संगृहीताः—

"अष्टमीचन्द्रकः कुन्दचतुर्थी सुवसन्तकः।
आन्दोलनचतुर्थ्येकशाल्मली मदनोत्सवः॥
उदकक्ष्वेडिकाऽशोकोत्तंसिका चूतभञ्जिका।
पुष्पावचायिका चूतलतिका भूतमातृका ॥
कदम्बयुद्धानि नवपत्रिका बिसखादिका।
शक्रार्चा कौमुदी यक्षरात्रिरभ्यूषखादिका ॥
नवेक्षुभक्षिका तोयक्रीडा प्रेक्षादिदर्शनम्।
द्यूतानि मधुपानञ्च प्रकीर्णानीति जानते ॥" इति ।

सूत्रस्य मूलपुस्तकेषु वृत्तौ च "स्पृहयन्तीव्रतम्, यक्षचतुर्थी, आलोलचतुर्थी, मदनोत्सवः, दमनभञ्जिका, होलाका, अशोकोत्तंसिका, पुष्पावचयिका, चूतलतिका, इक्षुभञ्जिका" इत्यधिकमस्ति। तच्चोल्लिखित (स. कं.) संग्रहेण भूयसा संवदति।

(१२) अधि० १। पृ० १८। श्लो० २०--पीठमर्दस्य लक्षणानि पञ्चसायके (१।५), दशरूपके (२।४), साहित्यदर्पणे (३।७६),

काव्यालङ्कारे रुद्रटकृते (११।१३, १४), शृङ्गारतिलके रुद्रटकृते (१।३९, ४०), प्रतापरुद्रीय (१। ३८), अग्निपुराणे (३३८। ३९, ४०), रसरत्नाहारे [५२, ५३], काव्यानुशासने वाग्भटकृते [५।६२], रसमञ्जर्यां चापि क्वचित क्वचित् किञ्चिद्भेदेन द्रष्टव्यानि। एवं विटविदूषकयोरपि तत्र तत्र यथासंभवं द्रष्टव्यानि।

(१३) अधि० १। पृ० १९। श्लो० ५८--सर्वजनसंमानभाजनतां प्राप्तुं यथावसरं श्रोतृवर्गमपेक्ष्य संस्कृतेन वा प्राकृतेन [देशभाषया] वा गोष्ठीं (कायकलादिविषयां) प्रवर्तयेत्। न तु सर्वदा सर्वत्र केवलं संस्कृतेनैव, केवलं देशभाषयैव वा यतः "कश्चिदेव संस्कृतं वेत्ति देशभाषां च" (ज. मं.)।

"नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया।
कथां गोष्ठीषु कथयँल्लोके बहुमतो भवेत्॥"

इति सूत्रम्।

आसीत् कोऽपि समयो यत्र संस्कृतं सर्वजनभाषाऽऽसीत्। अनन्तरं चाऽऽसीत् सोऽपि समयो यत्र तत्तद्देशे संस्कृततरासु विभिन्नभाषासु जनताव्यवहारसाधनतां गतास्वपि संस्कृतं सर्वदेशसाधारणी भाषा (इंग्लिशभाषायां 'लिंग्वाफ्रेङ्का' (Linguafranca) (इत्यभिहिता) यद्द्वारा ऽयदेशं गतो जनस्तद्देशभाषानभिज्ञोऽपि संस्कृतेन व्यवहरन् निर्बाधं सञ्चरतिस्म। तदिदमुदटङ्कि महाकवि। श्रीहर्षेण "अन्योन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु।.........................................सौवर्गवर्गो न जनैरचिह्नि॥" इति दमयन्तीस्वयंवरे नानादिग्देशागतेषु अन्योन्य प्रातिस्विकभाषानवबोधभयात् (संस्कृत्रिमाभिः = प्रकृतिप्रत्ययादिसंस्कारेण निर्वृत्ताभिः संस्कृताभिर्वाग्भिः) संस्कृतभाषयैव व्यवहरत्सु राजसु संस्कृतभाषी देवगणो जनैः पृथक्तया न ज्ञातः इत्यर्थः)। ततः कालक्रमेण ह्रासं भजमाना सेयं 'संस्कृतं नाम दिव्या वाक्' सांप्रतमंगुलिगण्यानामेव जनानां ज्ञानस्य गोचर इति 'हतविधिलसितानां ही विचित्रो विपाकः।'

देशविशेषवशेन भाषाविशेषाश्रयणं च काव्यमीमांसायां दर्शितम्—

"गौडाद्याः संस्कृतस्थाः परिचितरुचयः प्राकृते लाटदेश्याः

सापभ्रंशप्रयोगाः सकलमरुभुवष्टक्कभादानकाश्च । आवन्त्याः पारियात्राः सह दशपुरजैर्भूतभाषां भजन्ते यो मध्ये मध्यदेशं निवसति स कविः सर्वभाषाप्रवीणः ॥" इति ।

( १४ ) अधि० १ । पृ० २० । टि० पं० २२ अन्ते—"पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥" ( ऐ० ब्रा० ) इति च—.

( १५ ) अधि० १ । पृ० २० । टि० पं० २३ श्रुतेः इत्यनन्तरम्–किञ्च वैदिकवाङ्मये शूद्रापर्यायतया प्रयुक्तो रमाशब्दोऽपि शूद्रा रत्यर्थैव, न पुत्रार्था धर्मार्थावेति स्पष्टमाचष्टे। तथा च यास्ककृतं तन्निर्वचनम्—"रामा रमणायोपेयते न धर्माय कृष्णजातीया" इति । श्रूयते च धर्म्यकर्मप्रवृत्तस्य तद्गमननिषेधः—"नाग्निं चित्वा रामामुपेयात्" [ तै. सं. ५ । ३ । ८ । ६ ] इति—। "संवत्सरं न मांसमश्नीयात्, न रामामुपेयात्" [ तै. आ. ५ । ८ । ४६ ] इति च । तदेव च स्मृतिः स्पष्टमाह—"द्विजस्य भार्या शूद्रा तु धर्मार्थे न भवेत् क्वचित् । रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्तिता ॥" [ वैष्णवधर्मशास्त्रे २६ अ. ] इति ।

( १६ ) अधि० १ । पृ० २४ । श्लो० ९–एवंमनोवृत्तिः=एवंविधा मनोवृत्तिः=एवं विधोऽभिप्राय इत्यर्थः ।

( १७ ) अधि० २ । पृ० ३४ । टि० पं० ६ तुरगाः, इत्यनन्तरम्–[ इदं दैर्घ्यपरिमाणजातोत्थानस्य ध्वजस्य बोध्यम् ] ।

( १८ ) अधि० २ । पृ० ३४ । टि० पं० १८ अन्ते—कचित्तु शशादीनामुपस्थपरिमाणे विशेषोऽप्युक्तः । यथा विवेकविलासे—"लिङ्गं षडङ्गुलानि स्यादष्टौ वा स्फुटं शशः स पुमान् । नव दश चैकादश वा तदपि पुनर्यस्य स वृषाख्यः ॥ द्वादश यल्लिङ्गं स्यात्त्रयोदशादीनि वाङ्गुलानि भवेत् । जातोद्भवस्य मानं हयाख्यया निगदितः सोऽपि ॥" इति । एतदनुसारं हरिण्यादीनामुपस्थगाम्भीर्यपरिमाणेऽप्ययमेव विशेषो बोध्यः ।

( १९ ) अधि० २ । पृ० ३६ । टि० पं० १० स्येव इत्यनन्तरम्—रसप्राप्तौ विसृष्टिसुखाधिगमे तृप्ता हि स्त्री गर्भं धत्ते । तृप्तिश्च भाव·

प्राप्तिनिबन्धनैव। इतः परम् भावप्राप्तिर्हि शुक्रविसृष्टिनिबन्धना। इत्यारभ्य '—मनास्थितिस्तत्र जायते॥'' इति।' इत्यन्ता टिप्पणी [ ] एवंविधकोष्ठकान्तर्गता बोध्या। तावतोंऽशस्य आनुषङ्गिकत्वात्। प्राप्तभावा [तृप्तैव] स्त्री गर्भं धत्ते, नेतरथा—इत्येतन्मतं पाश्चात्यानां तद्विदां तु नाभिमतम्। तन्मते गर्भाशयवर्तिना 'ओवम' [Ovem] इत्याख्येन स्त्र्यण्डेन शुक्रकीटानां 'स्पर्मेटोजोआ' [Spermatozoa] इत्याख्यातानां संयोग एवं गर्भस्थितेर्निमित्तम्। स्त्रियाभावप्राप्तिर्भवतु मा वा भवतु, स चेज्जातो जाता गर्भस्थितिरिति—इति प्रसक्तानुप्रसक्तम्।

(२०) अधि० २। पृ० ५५। टि० पं० ४ अन्ते—एवम् "यत्राभिनवया वध्वा लतयेव मधौ द्रुमः। स्वयमालिङ्ग्यते कान्तः स स्यान्नवलतोत्सवः। [हरविजयमहाकाव्यटीकायाम् १७। ६३]'' इत्यादीनि भेदान्तराण्यपि।

(२१) अधि० २। पृ० ५७। टि० पं० १०—दनुभवः। इत्यनन्तरम्—वक्षःस्तननाभ्यादिप्रदेशेषु मदावहानां नाडिकानामपरान्ता विद्यन्त इति तत्र चुम्बनमर्दनादौ कृते स्त्री शीघ्रमुद्दीप्तमदा भवतीति समाधिसाक्षात्कृताखिलसूक्ष्मतत्त्वानां प्राच्यानां शास्त्रकृतां चुम्बनाद्यर्थं तत्तत्स्थानोपदेशस्य रहस्यम्। पश्चात्यास्तद्विदोऽपि अविरतप्रवृत्तैर्निपुणैरनुसन्धानैस्तदुक्तमेवार्थं द्रढयन्ति, पल्लवयन्ति चेति परं प्रशंसावादार्हाः। तत्र "सेन सैक्स लाइफ एण्ड सेन सैक्स लिविङ्ग" नाम्नः कामशास्त्रविषयकग्रन्थस्य प्रणेता सूक्ष्मदर्शी डाक्टरः स्तनयोरुत्पादक (कामावह) शिराभिः सम्बन्धमित्थं प्रतिपादयति—"स्त्रियाः स्तनमण्डलमखिलाभिरुत्पादकशिराभिः साक्षात् सम्बद्धमस्ति। तस्य युक्तग्रहणविधिना स्पर्शः (मर्दनं) तस्याः सकलानि कामाधिष्ठानानि समुत्तेजयति" इति। विदुषितरा डाक्टरा 'मेरी कारमाइकल स्टोप्स' नामधेया "मैरिडलव्" नाम्नि कामशास्त्रग्रन्थे एकस्याः स्त्रिया वृत्तान्तोल्लेखपुरःसरं स्तनचुम्बनविषये इत्थं प्रतिपादयति—"..................तस्याः पतिः ओष्ठौ कपोलौ च मुक्त्वा स्थानान्तरं कदापि नाचुम्बत्। परमेकदा नितान्तमुल्लासितमदनो-

त्तरङ्गा सा पत्युः शिरसा श्रोष्ठाभ्यां च स्वस्तनमण्डलस्य संपीडनमनुभवितुं बलवदुत्कण्ठिताऽजायत ।......................सलज्जं तथा कर्तुं पतिं प्रार्थयत । स तस्याः स्तनमण्डले एकमेव लघुचुम्बनमार्पयत् । विषयस्याऽस्य नितान्तमनभिज्ञोऽसौ नाऽज्ञानाद् यत् पतिकृतं स्तनचुम्बनं स्त्रियं रागार्द्रां विधत्ते, तां यन्त्रयोगाय सज्जां ( प्रोद्दीप्तमदनां ) विधातुं च प्रथमो निश्चिततमश्चोपायोऽस्तीति ।'' इति ।

( २२ ) अधि० २ । पृ० ४८ । टि० पं० १५ अन्ते—''आश्लेषचुम्बनरतोत्सवभूषणादि क्रीडादुरोदरपणः प्रतिभूरनङ्गः । भोगस्तु यद्यपि जये च पराजये च यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥'' इति [ शार्ङ्गधरपद्धतौ ] ।

( २३ ) अधि० २ । पृ० ६३ । टि० पं० ४ ( ज. मं. ) । इत्यनन्तरम्—एवम् ''नकारबहुलाक्षिप्तहस्तान्तं स्वाञ्चिताधरम् । रभसा गण्डसंस्पर्शैः स्फीतं तच्चुम्बनं विदुः ॥'' ( कामावतारे ) इत्यादयोऽन्या अपि चुम्बनकल्पना द्रष्टव्याः । प्रशस्तचुम्बनविषयिणी सूक्तिर्यथा—''केशेषूत्कटधूपवाससुरभिष्वासज्य वामं करम्, हस्तौ द्वावपि दक्षिणेन सहितौ संगृह्य नात्यायतम् । यो हर्षः पिबतो बलात् प्रियतमावक्त्रेन्दुमुत्पद्यते, तेनाऽऽप्यायितमन्मथो हि पुरुषो जीर्णोऽपि न क्षीयते ॥'' इति ( ईश्वरदत्तप्रणीते 'धूर्तविटसंवाद' नाम्नि भाणे ) ।

( २४ ) अधि० २ । पृ० ६३ । टि० पं० ८ सप्रयोगः । इत्यनन्तरम्—तदुक्तं 'धूर्तविटसंवाद' भाणे ईश्वरदत्तेन—''स्तब्धता च कामस्य महान् शत्रुः'' इति ।

( २५ ) अधि० २ । पृ० ६५ । टि० पं० ८ अन्ते—एव मन्यत्रापि ''नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः । पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः'' इति काव्यप्रदीपव्याख्यायां वैद्यनाथः ।

( २६ ) अधि० २ । पृ० ६५ । टि० पं० ८ अन्ते—( मध्यत्वमित्यर्थः ) ।

( २७ ) अधि० २ । पृ० ६७ । श्लो० १९—''ग्रीवायां स्तनपृष्ठे च वक्रो नखपदनिवेशोऽर्धचन्द्रकः'' इति सूत्रम् । ''वक्रो नखाङ्कः

कथितोऽर्धचन्द्रो ग्रीवास्तनोत्सङ्गविभूषणं यः ।'' इत्यन्यत्र। एवञ्च कपोलस्यार्धचन्द्रस्थानत्वेनानुक्तेः "सुरभिकुसुमभाजो रूपशोभां दधत्यास्तरलहरिणदृष्टेः काननोर्वीरमण्याः। सुरत इव मृगव्याविभ्रमे ऽन्योऽर्धचन्द्रस्फुटकरजनिपातैः पाटयामास गण्डम्॥'' (हरविजये ४१।२६) इत्यत्र गण्डे (कपोले) अर्धचन्द्रवर्णनमशास्त्रीयमिति न वाच्यम्। पर्याप्तं हि रतवेगे शास्त्रोक्ततत्तत्पदोल्लङ्घनेनापि नखपदादीनां निवेशनस्य शास्त्रकारेणाभ्यनुज्ञातत्वात्। यदाह सूत्रकारः— "शास्त्राणां विषयस्तावद् यावन्मन्दरसा नराः। रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः॥'' (२।२) इति यद्वा तथावर्णनं मतान्तरानुसारं स्यात्। मतान्तरे सामान्येन गण्डस्य नखक्षतस्थानत्वं च पूर्वं (७ श्लोकस्य टिप्पण्याम्) दर्शितमेव॥

(२८) अधि० २। पृ२ ६६। श्लो० ३१—कामसूत्रस्य इंग्लिशभाषायामनुवादकर्ता इंग्लैण्डीयो विद्वान् अत्रत्यम 'पश्यतो युवति— दूरान्नखोच्छिष्टपयोधराम्।' इत्यादि सूत्रस्थं श्लोकमनूद्य अधस्ताट्टिप्पण्यां प्रतिपादयति—"अस्मात् पद्यात् प्रतीयते यत् प्राचीनसमये स्त्रियः स्तनमण्डलं वस्त्रावृतं न कुर्वन्तिस्म (तदनावृतं, दृश्यमेवाऽतिष्ठत्)। इदं च 'अजण्टा' भिधगुहा (न्तर्निर्मितभव्यभवनभित्तिगतेषु) चित्रेषु, अन्यगुहागतेषु चित्रेषु च दृश्यते। यत्र वयं राज्ञी प्रभृतीनां महिलोत्तमानामपि स्तनमण्डलमनावृतमुपलभामहे" इति। रामायणे तदनुसारिष्वन्यप्रबन्धेषु च ("रक्षोऽभिचारचरुभाण्डमिव स्तनं यो देव्या विदेहदुहितुर्विददार काकः।'' अनर्घराघवे) वर्णितं काकेन सीतादेव्याः स्तनविदारणमप्युक्तार्थं प्रमाणयति॥

(२९) अधि० २। पृ० ७०। टि० पं० ७—मनोहारी एव। इत्यनन्तरम्—समयमातृकायां (५।४५) "दन्ताभिरो यस्ताम्बूललीलामात्ररुचिः सदा।'' (यथा दन्तानां ताम्बूलचर्वणेन किञ्चित् कालं रागो जायते तथैव योऽल्पकालमात्रं रुचिरनुरागः स दन्तराग इत्याख्यायते—इत्यर्थः) इति रागभेदेषु दन्तरागलक्षणमप्युक्तार्थं पुष्णाति॥

(३०) अधि० २। पृ० ७२। टि० पं० २३ अन्ते— इतोऽग्रेवर्तमानं "विशेषके कर्णपूरे पुष्पापीडे ताम्बूलपलाशे तमालपत्रे

चेति प्रयोज्यागामिषु नखदशनच्छेद्यादीन्याभियोगिकानि" इति सूत्रं नानूदितं ग्रन्थकृता ॥

( ३१ ) अधि० २ । पृ० ७३ । टि० पं० ६ स्थले, इत्यनन्तरम्—भरतकृते नाट्यशास्त्रे ( २२ अध्याये ९४ श्लोकात् १४० श्लोकपर्यन्तम् ) ।

( ३२ ) अधि० २ । पृ० ७३ । टि० पं० २३ अन्ते—भारतीयकामशास्त्राचार्यैर्यथा भारतीयतत्तद्देशस्त्रीणां सात्म्य ( कामसम्बन्धी स्वभावविशेषः ) वर्णितम्, तथैव यूरोपीयकामशास्त्राचार्येण 'हैवेलाक ऐलिस' महाशयेनापि ( यस्य 'साइकोलोजी आफ सैक्स' नामा षड्भागात्मको महाकायः कामशास्त्रग्रन्थो यूरोप, अमेरिकायां च लब्धसमधिकः प्रचार आस्ते ) स्वग्रन्थे यूरोपीयत्तत्तद्देशभवानां स्त्रीणां सात्म्यं विशदं वर्णितम् । अत्र वक्ष्यमाणम्, ग्रन्थान्तरेषूक्तं च भारतीयतत्तद्देशस्त्रीणां सात्म्यं तत्तद्ग्रन्थकाराणां काले तथा स्थितं भवेत्, परं साम्प्रतं तत्तासु न घटते साम्प्रतिकं सात्म्यन्तु ततो भूयसा भिन्नमस्ति । सो ऽयं भेदः कालकृत एकतमीयं कालकृतं भेदं महाकविर्भवभूतिः साधु निदर्शितवान् ( उत्तरराम चरिते राम मुखेन )—"पुरा यत्र स्रोतः पुलिमधुना तत्र सरिताम्, विपर्यासं यातो घनविरलभावः क्षितिरुहाम् । बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्" ( २ । २७ ) इति ।

( ३३ ) अधि० २ । पृ० ७६ । टि० पं० ३ विशेषः । इत्यनन्तरम् तथाविधा एव रहसि प्रकाशन्ते नागरिकाः" इति सूत्रम् । "नागरिका इति पाटलिपुत्रिकाः ।" इति जयमङ्गलाकारः । तदिदं भ्रान्तिविलसितम् न हि पाटलिपुत्रस्य "नगर" नाम्ना व्यवहारः क्वाप्युपलभ्यते । तस्मात् जयपुरसमीपे 'टोंक' तः पञ्चचत्वारिंशन्मीलानि उत्तरपूर्ववर्ति "बूँदी" तः पञ्चचत्वारिंशन्मीलानि उत्तरपूर्ववर्ति "नगर" नामकं नगरमासीदिति 'कारलाइल, साहिबकृतगवेषणानुसारं यत्तन्नगरनामकं नगरं पुराऽऽसीत्तदेव "नागरिकाः" इत्यत्र विवक्षितं सूत्रकारस्येति नव्याः ।

( ३४ ) अधि० २ । पृ० ८३ । टि० पं० ३ अन्ते—"तस्मात् पुमान् दक्षिणतो योषामुपशेते" ( जै० उ० १ । ५३ । ३ ) इति च ।

( ३५ ) अधि० २ । पृ० ८५ । टि० पं० ५ इत्यनन्तरम्--( नायकः ) "संकुचितौ ( नायिकापादौ स्वबस्तिदेशे निदध्यादिति कार्कटकम् ।" इति सूत्रम् ।

( ३६ ) अधि० २ । पृ ८५ । टि० पं० १८ इति । इत्यनन्तरम्--"स्वगुल्फकरयुग्मेन गृहीतकण्ठा । परियेन तु ( ऽ ) । मणितैर्या रतिः स्याच्चेत् पद्मबन्ध उदाहृतः ॥" इति दीनालापनिकाशुकसप्तत्याम् ।

( ३७ ) अधि० २ । पृ० ८६ । टि० पं० ८ अन्तेजलान्तर्मैथुनं हि स्मृतिकारैर्निषिद्धम् । तथा च गौतमवचनम्—"अप्सु मिथुनसंयोगे नरकः" इति । भार्गववचनं च—"रेतः सिक्त्वा जले चैव कृच्छ्रं चान्द्रायणं चरेत् ।" इति ।

( ३८ ) अधि० २ । पृ० ८८ । श्लो० ३४—छागलमैणेयमित्याद्या इति—एवं "योषितादौ हृदि न्यस्य कराभ्यां धार्यते कुचौ । यथेष्टं ताडयेद् योनिं क्रोधबन्धः प्रकीर्तितः ॥" इति गीतगोविन्द ( ११६ श्लो० ) टीकायां शङ्करमिश्रेणोदाहृत क्रोधबन्धः, बन्धान्तराण्यपि च रतिरत्नप्रदीपिकास्मरदीपिकानागरसर्वस्वादिप्रबन्धेभ्यो ज्ञेयानि । चतुरशीतिबन्धाश्च दीनालापनिकाशुकसप्तत्यां महीशूरमहाराजकृष्णराजकृते सौगन्धिकापरिणये चोक्तास्ततो ज्ञेयाः ।

( ३९ ) अधि० । पृ० ९० टि० पं० ३ साध्वी । इत्यनन्तरम्—धर्मशर्माभ्युदये ऽपि ( १५ । ५५ । )—"ओष्ठखण्डननखक्षतत्रस्ताडनस्तनकचग्रहणाद्यैः । मत्सरादिव मिथो मिथुनानां कामकेलिकलहस्तुमुलोऽभूत् ॥" इति ।

( ४० ) अधि० २ । पृ० ९४ । टि० पं० १० अन्ते—तीव्र अपि नखराद्याघाता रसावेशान्न पीडाकराः प्रतीयन्ते—इत्युक्तं कूर्माचलाधिपतिरुद्रदेवप्रणीते श्यैनिकशास्त्रे ( २ परिच्छेदे )—"यथा प्रसह्य मानिन्याश्चुम्बनालिङ्गनादिकम् । अयाससाध्यमप्यन्तर्न नाम मुदमश्नुते ॥ प्रहारो नखदन्तादेर्यथैव स्मरसङ्गरे । उपघातस्तथैवाऽत्र रसावेशान्न वा रुजे ॥" इति ( न नामेति काकुः । अन्तर्मुदमश्नुत्येवेत्यर्थः । अत्र=मृगयायाम ) । ईश्वरदत्तप्रणीते धूर्तविटसंवादभाणेऽप्ययं विषयः साधु समर्थितः—नखदशननिपाताः केन प्रकारेण सवेदना अपि प्रीतिमुत्पादयान्ति ( इति प्रश्नउत्तरम् ) नखदशननिपाताः सवेदना अपि प्रीतमद्भ्यां सुखमुत्पादयन्ति । कुतः—यथा

प्रतोदो ऽवहितं करोति जवे हयं सारथिसंप्रयुक्तः। तथा रतौ दन्तनखावपातः स्पर्शैकतानं हृदयं करोति ॥" इति।

(४१) अधि० २। पृ० १०४। श्लो० २२—"यन्त्रं यत्नादयान्त्रितस्मृतिभूः।" इति पाठान्तरमत्र साधीयः।

(४२) अधि० २। पृ० १०६। श्लो० ३५—इदं भ्रमरकमेव दीनालापनिका शुकसप्तत्यां भ्रमणनाम्ना चतुरशीतिबन्धेषु संगृहीतम्—यथैकान्ते तु शय्यायां सम्मुखी पुरुषोपरि। यभेत मणितैर्दीनैः सैवो परतिरुच्यते ॥ कुर्वत्युपरतिं या चेद् भ्रमयेद् भ्रमणं विदुः।" इति।

(४३) अधि० २। पृ० १०७। टि० पं० ११० अन्ते—अमेरिकास्थः एम० डी० इत्युपाधियुक्तः 'मैक्स ह्यूनर महाशयो ऽपिस्वग्रन्थे इदमेव प्रतिपादयति—"यत्रान्यत् किमपि प्रतिविधानं कर्तुं न शक्यते तत्र 'रोहूलूडर' महाशयविचारानुसारं प्राकृतिको पायेन अतृप्तां स्त्रियं तर्पयितुं सुरते तस्या मदनच्छत्र (क्लिटोरिस) घर्षणमेव पत्युः कृते परमोपयुक्ताऽभ्युपपत्तिः।" इति। अशिष्टत्वात्तु नेदं प्रयोज्यमिति शिष्टाः।

(४३) अधि० २। पृ० १०९। टि० पं० ७ अन्ते—अस्यैव 'इन्द्रियपानम्, इत्यपरा संज्ञा। यथा "...सदोन्मदा इन्द्रियपानलुब्धाः। कर्णाटदेशेकथितास्तरुण्यः॥" (ना० स० २०। ७) इति (इन्द्रियपानलुब्धाः औपरिष्टकलम्पटा इत्यर्थः।

(४४) अधि० २। पृ० ११४। टि० पं० ३ भवन्ति। इत्यनन्तरम्—यद्वा वक्रकर्म=औपरिष्टकम्, तत्कर्तुमपि निरता भवन्तीति।

(४५) अन्ये तु इदं (रागवत्) रतं प्रथमसमागमे, प्रवासकाले, प्रवासप्रत्यागमने, कोपशान्तौ चेति चतुरवस्थमामनन्ति। तदेतत् कोपापगमादागतस्य रतस्य सर्वरतातिशायित्वं प्रतिपादयता सम्यक् प्रपञ्चितमीश्वरदत्तेन 'धूर्तविटसंवाद' भाणे—

"गते तु कोपे प्रथमे समागमे प्रवासकाले पुनरागमे तथा।
वदन्ति चत्वारि रतानि कामुकास्ततो भवान् किन्वधिकं व्यवस्यति॥

अत्र ब्रूमः—यत्तावत्प्रथमसमागमे रतम्, तदप्यलब्धविस्रम्भायां कामिन्यामज्ञातगाधमिव सरः शङ्कावगाहं भवति। यदपि प्रवासकाले रतम्, तच्छोकाभिभूतत्वान्मन्दरागायाः सास्राविलाक्षमुखो-

ह्यमानहृदयोद्वेगकारणमरम्यं करुणं ग्रहोपसृष्टं चन्द्रमण्डलमिव न मां प्रीणयति। यदपि प्रवासादागते रतम्, तदपि अकृतप्रतिकर्मतया प्रियया व्रीडितया व्यञ्जितं दुर्दिनगान्धर्वमिव मन्दरागं भवति। यत्पुनः कोपापगमादागतम्, तत् सुरासुरापविद्धमन्दरपीडिते सर्वौषधिप्रक्षेपाप्यायितवीर्ये भगवति सलिलनिधौ यदुत्पन्नममृतसंज्ञकं किमपि श्रूयते आयुर्वयोवस्थापनं रसायनं तदप्यतिवर्तते।

कुतः—कोपापगमे नार्यास्तमेव हृदयेन भावमजहन्त्याः।

सुरतमतिरभसमानिभृतकररुहदशनभरजर्जरं भवति॥" इति।

(४६) अधि० २। पृ० १२४। टि० पं० अन्ते—एतदेव नागरसर्वस्वकृता आत्मरागोद्दीपनार्थं सामान्येनोपदिष्टम् (ना० स० १६। १४)—"सुन्दर्यामनिशं यस्यां रमते चित्तमात्मनः। सैवेयं भावनीया स्यादात्मरागसमुद्भवः॥" इति। एतदेव च पाश्चात्या विद्वान् 'आगस्ट फोरेल' महाशयोऽपि 'सैक्शुअल क्वैश्चन' नाम्नि स्वीये कामागमग्रन्थे वैशद्येनोपदिदेशः—"मद्विचारे अधोनिर्दिष्ट उपदेशः पत्युः (यथासंभवं भार्यायाश्च) कृते उपकारी स्यात्। यदा तस्य कामः कामः कयाचित् (समधिक सौन्दर्यशालिन्या) अन्यया स्त्रिया (स्वरामणीयकेन) उद्दीपितः स्यात्, तद्वशीभावस्य (तद्विरहजन्यस्यऽवसादस्य) च भयं स्यात्, तदा तस्य स्वभावनासाहाय्येन स्वविमोहिकाया रमण्या रूपादिगुणानां स्व भार्यायामारोपणं (स्वभार्यायास्तद्रूपतया भावनं) कर्तुं दृढः प्रयत्नो विधातु मुचितः। अल्पेनैवाऽध्यवसायेन अयं प्रयोगः सिद्धिं यास्यति। एवं कृते स स्वरागं स्वभार्यायां द्रढयिष्यति, तस्याश्चापि स्वविषयं रागं वर्धयिष्यति। अनेनोपायेन यः पररामारामणीयकसमुद्दीपितः मदनाग्निर्दाम्पत्यंसुखसमुच्छेदोद्यतो नितरामभीषयत्, स एव कदाचित् पारस्त्रिकीमभिनवां प्रेमभावनामलाषस्फूर्तिं चोल्लास्य अभिज्ञातदाम्पत्य—सुखपरिपोषाय सम्पद्येत॥" इति।



(४७) अधि० ३। पृ० १३६। टि० पं० ६ चैव खं इत्यनन्तरम्—वैजयन्तीकोषेऽपि 'विस्तीर्णजानुर्विकटा—' इत्यादिना अष्टाविंशतिर्दोषवत्यः कन्यकाः परिगणिताः।

# टिप्पण्यामनिर्दिष्टाः कतिचित् ख पुस्तकीयाः पाठभेदाः ।

| पृ० | पं० | |
|---|---|---|
| १ | १५ | शालिवाहनो— |
| ३ | २ | स्थितये मनुस्तस्य । |
| ,, | ५ | संक्षेपमस्य वार्हणस्तस्य ( ? ) । |
| ,, | १२ | पृथक् तं कन्यासंयुक्तकं- |
| ,, | १३ | नारायणः प्रसङ्गात्— |
| ,, | १४ | चक्रे सुवर्णनामा |
| ,, | १५ | मारदर्शने सुष्ठु । |
| ,, | १७ | किमपि किञ्चिदत्र । |
| ५ | २ | ·विभागस्त्रिवर्गस्य । |
| ,, | ४ | अर्थाद्यानभिधानं सेवे— |
| ,, | ११ | नैवाभावोऽस्तु तेन कस्यापि । |
| ,, | १३ | ·प्राधान्यमब्रवीद्राजा । |
| ,, | १४ | नन्वर्थी राज्यभाग्भवति । |
| ६ | २ | अधिकारादिवदेषां— |
| ,, | ३ | विद्यापण्यादीना— |
| ,, | ११ | तस्य वैशिष्ट्यम् । |
| ,, | १४ | आयासजं जनाना— |
| ८ | ८ | शश्वत्कान्तोऽपि— |
| ,, | १४ | परिघाकृति— |
| ९ | १३ | नेपथ्य संप्रयोगः सम्यग् युक्तिस्तथेन्द्रजालस्य, |
| ,, | १४ | पुष्पास्तरणे रचना— |
| १० | १० | विद्यानामाप्य सम्पदं— |
| ११ | ८ | उत्फुल्लपुष्पनिकरा— |
| ११ | १४ | सम्पादयेद् गृहं— |

| पृ० | पं० | |
|---|---|---|
| ,, | १५ | यद्वाऽन्यत्स्वीयरञ्जने— |
| १२ | ७ | नियतः। |
| ,, | ९ | पक्षेऽहीने हीने पूर्णास्ताः— |
| ,, | ११ | भोजनयुक्तं विहृत्यैव। |
| १३ | ८ | कलयेत्। |
| ,, | ६ | संगीतके प्रदोषे प्रान्ते-- |
| ,, | ११ | यथवा स्वयमेव नायको गच्छेत्। |
| १४ | ५ | यात्रावरणे च- |
| ,, | १० | तन्त्रोक्ता। |
| ,, | १२ | हारिताः शश्वत्। |
| १५ | १ | —मुद्याने पात— |
| ,, | ५ | दैवतिकी रथयात्रा— |
| ,, | १० | गमनं जलशालायै ग्रीष्मेगते च तेजसां धाम्नि। |
| ,, | ११ | चाथ मासान्ते। |
| ,, | १२ | सृजतु सभां— |
| १७ | १ | मदनार्थिनाऽऽत्र-- |
| ,, | ४ | कथिता नवपुत्रिका। |
| ,, | ६ | वारयोषिताश्चैव। |
| १६ | ४ | वृत्तं समाचरेत्तत्र। ('समाचरन्नेतु' इति पाठान्तरम्) |
| ,, | १२ | परगर्हितस्वरूपां— |
| २० | २ | भूमीतट |
| २१ | १ | -ऽशिष्टोदरवर्णजायाश्च। |
| २२ | ५ | अस्याः |
| २४ | १ | ममादृता प्राप्ता। |
| ३५ | ६ | योगतः |

# ❀ शुद्धिपत्रम् ❀

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २० | ०तोद्यक्तुः | ०तोद्युक्तः |
| ६ | ६ | ०षष्ठिक० | ०षष्टिक० |
| १० | २ | ०षष्ठि० | ०षष्टि० * |
| १२ | १८ | (ज. म) | (ज. मं) * |
| ,, | २२ | सम्यग जीर्ण० | सम्यग् जीर्ण० |
| १४ | २० | विलासिन्यः | वारविलासिन्यः |
| १६ | १२ | जगर्ति | जागर्ति |
| १८ | १६ | शुश्रुते | सुश्रुते |
| २४ | १२ | स्बप्न | स्वप्न † |
| ,, | १५ | संमृष्टा | संसृष्टा |
| ,, | १६ | ०दैश्चर्यं | ०दैश्वर्यं |
| २६ | १६ | पिषेः...इत्प्रत्ययस्य | पिशेः....इतन्प्रत्ययस्य |
| २७ | २२ | ०लय | ०लयं |
| ,, | २६ | वदयत | वदयते। |
| २६ | १० | भवेद | भवेद् |
| ,, | १५ | गमताद...त्पति० | गमनाद्...त्पत्ति० |
| ,, | २४ | सम्वान्धि० | सम्बन्धि० † |
| ३२ | १ | र्निरतिः | निरतिः |
| ३५ | ६ | योग्यत | योग्यतः |
| ३६ | १४ | विवृतो | विवृतौ |
| ,, | १६ | पङक्ति | पङ्क्ति० |
| ३७ | २ | काण्डते० | कण्डूते० |
| ,; | १२ | विनिहते | विनिहिते |
| ३६ | १६ | तस्यः | तस्याः |
| ,, | २४ | गभः | गर्भः |

* एवमन्यत्रापि शोध्यम्। † एवमन्यत्रापि वबयोर्विपर्यासः शोध्यः।

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४० | ५ | शुश्रुते | सुश्रुते |
| ,, | ,, | ०योपद्यते | ०योपपद्यते |
| ४० | ८ | आरम्मात् | आरम्भात् |
| ,, | २४ | ०मङ्गसाद० | ०मङ्गसाद० |
| ४१ | १४ | रपष्टार्थ० | स्पष्टार्थ० |
| ,, | १४ | स्व. | ख० |
| ४५ | ६ | वृणामहा० | वृणीमहा० |
| ४७ | १५ | स्पष्टर्थः | स्पष्टार्थः |
| ,, | १७ | 'तथाहि | तथाहि |
| ,, | २१ | सगीत० | संगीत० |
| ५० | ११ | ०नेनव | ०नैनैव |
| ,, | १४ | विदा | विदां |
| ,, | २४ | अभ्यप० | अन्याप० |
| ,, | २४ | गात्र | गात्रं |
| ५२ | १५ | स्थियया | स्थित्या |
| ,, | २० | ०त्सङ्ग | ०त्सङ्गे |
| ५३ | १ | ०क्तयेतद० | ०क्त्यैतद० |
| ५७ | २३ | भवतिति | भवत्विति |
| ५६ | १६ | व्रयात् | ब्रूयात् |
| ६० | ११ | सत्यधरे | अधरं विहाय |
| ,, | १६ | ०वोतरं | ०वोत्तरं |
| ६१ | २४ | निद्राऽवेश० | निद्राऽऽवेश० |
| ६२ | १७ | प्रयुङ० | प्रयुङ्० |
| ,, | १६ | प्रयोक्ता | प्रयोक्त्री |
| ७३ | ५ | सम्तोष० | सन्तोष० |
| ७४ | ७ | षष्ठीष्ठा | षष्ठी (ष्ठा) |
| ७५ | १ | ०परीन्तका० | ०परान्तिका० |
| ८४ | ३ | ०यानाम् | ०याणाम् |
| ८६ | १६ | ०योघ्रातिः | ०योघ्रतिः |
| ,, | १७ | जैहय्यम् | जैहयम् |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९० | १० | ०रुपमितिःसाध्वी | ०रूपणं साधु |
| ९१ | १६ | दूत्काकौ | दूत्कारकौ |
| ९३ | २२ | सवृतेन | संवृतेन |
| ९८ | २३ | र ौ | रतौ |
| ,, | २४ | त्यप्यु० | इत्यप्यु० |
| १०० | १४ | ०दिष्ध्येतां | ०दिष्वेतां |
| ,, | १८ | नाकेन | नायकेन |
| १०३ | ५ | ०पारण | ०पारेण |
| १०४ | २० | यत्त | यत्तु |
| १०५ | १९ | ( ष्ट कम् | ( ष्ट ) कम् |
| १०८ | १७ | ०गभर्स्य | ०गर्भस्य |
| १०९ | १५ | मुस्वर० | मुखर० |
| ११० | २६ | 'परिचर्या' | 'परिचर्यामूर्वो०' |
| ११ | ५ | भवन्वे० | भवत्वे० |
| ११२ | ११ | स्वच्छान्दचारि-चारिण्य० | स्वच्छन्दचारिण्य० |
| ११३ | ६ | ०च्छात्रिक० | ०च्छत्रक० |
| ११४ | २२ | ०ग्रहणेल | ०ग्रहणेन |
| ११६ | २० | ०तीत्पति | ०तीत्यति |
| ११८ | ५ | रचिततस्मा० | रचितस्मा |
| ,, | ६ | ०क्रमोदिह | ०क्रमेदिह |
| १२० | १ | उप च (सं) क्रमे० | उपच ( समुप ) क्रमे० |
| १२१ | १४ | हिरता | हिता |
| १२३ | १० | भेदद् | भेदाद् |
| ,, | २४ | प्रवृत्तरता० | प्रवृत्तस्ता० |
| १२७ | २४ | ०चे ग्रहणे | ०चेतोग्रहणे |
| १२८ | ७ | सांप्रयो० | सांयो० |
| १३१ | २५ | ०वती, भवति | ०वती भवति, |
| १३२ | ६ | दलाभे | तदलाभे |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १० | ०च्छसि तम | ०च्छसि तमादत्स्व |
| १३७ | १४ | गृहीत | गृहीतं |
| १४० | २२ | दर्शन | दर्शनं |
| १४१ | ६ | लज्जागमा० | ०लज्जापगमा० |
| १४३ | ११ | ०णो क्रमेत | ०णोपक्रमेत |
| १४४ | ४ | ०पयेत्त | ०पयेत्तु |
| ,, | ११ | ०द्धाप | ०द्धापि |
| १४६ | १२ | ०दिनीं इयं | ०दिनीमियं |
| १४८ | १९ | ०वाहेजे | ०वाहने |
| १४९ | १७ | सा स्व० | स्वा स्व० |
| १५१ | १३ | स गान्ध० | सा गान्ध० |
| १५३ | १३ | (ऽ) | (ऽ) |
| १५४ | ९ | ह्स्व्याध्व० | ह्स्व्यध्व० |
| १५६ | १३ | प्रहे | प्रह्वे |
| १५७ | ५ | ०णयती मां | ०णत्रतीमां |
| ,, | ११ | गीतरती गीतवैरश्व युजीकां तुकै० | गीतरतां गीतवैराश्वयुजीकौतुकै० |
| १६० | १५ | ०विसवा० | ०विसंवा० |
| १६१ | ८ | किं कृता | किंकृता |
| ,, | २१ | विकार। | न्विकारः |
| १६६ | १४ | विसुखी | विमुखी |
| १६८ | १ | ०शीलश्च | ०शीलः |
| ,, | १४ | ०रहितम् | रहितत्वम् |
| १६९ | ४ | ०का धात्रीम् | ०काधात्रीम् |
| १७० | २३ | वर्णनने | वर्णनन |
| १७१ | १६ | मालतीपितरं | मालती पितरं |
| ,, | १७ | ०स्थितार्थ० | ०स्थितानर्थ० |
| ,, | १९ | नायकागुणा० | नायकगुणा० |
| १७२ | २० | ०श्या भवने | ०श्याभवने |
| १७४ | १६ | संभारभारगौ० | संभारगौ० |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७५ | शीर्षे | भार्यासंप्रयुक्ताधिकारणम् | भार्याधिकारिकम् |
| ,, | १४ | ०णी वृत्त० | णीवृत्त० |
| १७६ | ६ | ०ग्रहत्त० | ०ग्रहणत्व० |
| १८० | ३ | वृत्तिद्वार:० | वृत्तिर्द्वार० |
| ,, | १७ | चीरवस्त्रह० | वस्त्रह० |
| ,, | १६ | ०णी नारी | ०णीं नारीं |
| १८१ | ४ | निषेधो युक्तः | निषेधोद्युक्तः |
| ,, | ५ | ०यानां कार्य० | ०यानां च कार्य० |
| ,, | १६ | शुक्लान्यानि | शुक्लान्यन्यानि |
| १८२ | २० | ०वत्य० | ०त्रत्य० |
| ,, | २२ | रज्ज्वा | रज्ज्वाः |
| १८३ | १६ | ०सामान्यो निर्देशः। सुरासवकुम्भीस्थापनं शूद्रभार्यायाः कृत्यम्। सुरां पीत्वा......सुरापाननिषेधात् क्रयविक्रय. | सामान्यतो निर्देशः। परम्—सुरां पीत्वा......सुरापाननिषेधात् सुराकुम्भीस्थापनं शूद्रभार्यायाः कृत्यम्, क्रयविक्रय. |
| १८६ | ८ | गुहजन० | गुरुजन० |
| १८८ | ५ | ०योषाऽप्यपुनर्भू० | ०योषाऽथ पुनर्भू० |
| १६० | २० | ०स्यां अकपट० | ०स्यामकपट० |
| १६१ | १४ | ०शालित्वात् | ०शीलत्वात् |
| ,, | १७ | त्तरकालमनुकम्पेत 'तत इत्यु कलहितां | 'तत इत्युत्तरकालमनुकम्पेत कलहितां |
| १९७ | २ | शसक्ता | श (स) क्ता |
| १६६ | ६ | आदाय ? | आदाय |
| २०२ | १२ | ०रीदं मधि० | ०रीदमधि० |
| ,, | १८ | पारिदारिकम् | पारदारिकम् |
| २०३ | शीर्षे | *दारापरीक्षणम् | परदारपरीक्षणम् |

* दाराशब्दस्याऽसाधुत्वं न शङ्क्यम्, दारशब्दस्य टाबन्तस्यापि सत्त्वात्। तथा चोक्तम्—"क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्। क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः॥" इति।

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ६ | प्रतिपा० | प्रतिपा० |
| ,, | १२ | वाच्यानि | वाक्यानि |
| ,, | २२ | ०पदानां — | ०पदानाम् . |
| २०४ | १५ | आशाभृतां | आशां भृतां |
| २०६ | १२ | ०परिग्रहोऽभ्रगन्तव्यः | परिग्रहोऽभिगन्तव्यः |
| २०८ | शीर्षे | २योऽध्यायः | १मोऽध्याय |
| ,, | १४ | क्षणे मूर्च्छा | क्षणे क्षणे मूर्च्छा |
| ,, | २३ | प्रवृत्तिश्च | प्रवृत्तिश्च |
| २०९ | १३ | उज्ज्वलपुरुषकामित्व | उज्ज्वलकामित्व० |
| ,, | १५ | अवेक्षया | अपेक्षया |
| २१० | १९ | व्यभिचारं प्रतिनिवृत्तेः | व्यभिचारान्निवृत्तेः |
| २१३ | २३ | ०शौण्डीय० | शौण्डीर्य० |
| २१६ | ७ | निरत्या० | निरपत्या० |
| ,, | ८ | गोष्ठ्याम् (ऽ) | गोष्ठ्याम् । |
| २१७ | शीर्षे | दारासाधनम् | परदारसाधनम् । |
| ,, | १५ | धनलोभेन—मिच्छति | या धनलोभेन——— मिच्छति सा |
| २१९ | १५ | तदपाय० | तदुपाय० |
| २२१ | शीर्षे | दारावशीकरणम् | परदारवशीकरणम् |
| २२३ | २१ | न्यासं निक्षेपं च | न्यासं ( निक्षेपं , च |
| २२५ | १४ | आत्मापज्ञं | आत्मोपज्ञ |
| २२८ | १० | परीक्षिणाषु | ०परीक्षिणीषु |
| २२९ | शीर्षे | दाराभावपरीक्षणम् | परदारभावपरीक्षणम् |
| ,, | ७ | कृच्छ्र त् | कृच्छ्रात् |
| ,, | २३ | प्रीतियाजिनी | प्रीतियोजिनी |
| २२४ | ६ | ०प्रविश्य तस्या० | ०प्रविश्य च तस्या० |
| २३५ | १६ | येनाप्रत्यक्षी० | येन प्रत्यक्षी० |
| २३६ | १७ | ०द्योक्ते | ०द्योक्तं |
| २३९ | ३ | ०यानाम् | ०याणाम् |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४० | २१ | करित | कारितः |
| २४२ | १६ | ताम येन त्वयाभर्ता | नामभूतं येन त्वया भार्या |
| २४२ | १६ | भार्या चास्य | भार्या चास्य |
| २४४ | ६ | येन कुप्यसी० | येन न कुप्यसी० |
| ,, | १५ | सोऽपि मूढो | सोऽपि मूढां |
| २४५ | ८ | पूर्वस्तुता० | पूर्वप्रस्तुता० |
| २४५ | १२ | ०नया नाम आ० | ०नया आ० |
| २४५ | १६ | तथा | तया |
| २४७ | ७ | अनुकरणे | अनुकरणं |
| २४८ | ६ | वलाखेषा ( ऽ ) | वेलाऽस्वेषा |
| २४८ | ११ | 'प्रवेशेन' | 'प्रवेशेन' रव० |
| ३४८ | १८ | ०प्रविष्टः' । | ०प्रविष्टः' । ख. |
| २५४ | २ | पविष्टा | प्रविष्टा |
| २५४ | १३ | भूथैयै पु० | भूपैयैं० |
| २५७ | १४ | स्त्रियो पु० | स्त्रियो हि पु० |
| २५७ | १५ | वर्तयान्ति | र्वर्तयन्ति० |
| २५७ | १६ | ०निवृत्ति० | ०निर्वृत्ति० |
| २५९ | १ | संसृयं | संसृष्टः |
| २६२ | ६ | रणित मु (ण उ) गृह्य | रत्तिणमु ( ण उ ) पगृह्य |
| २६५ | ८ | वेश्यानां आ० | वेश्यानामा० |
| २६६ | १२ | मुखेषु ऽ | मुखेषु ? |
| २६७ | ७ | पष्ठा० | षष्ठा० |
| २६८ | १७ | अन्याश्च | अन्याभ्यश्च |
| २७१ | ६ | लासयिता | लास (ल) यिता |
| २७१ | १० | वशमो० | वशगो० |
| २७१ | १३ | त तुः | ते तु |
| ,, | १४ | सूचिताः । नायक० | सूचिता नायक० |
| २७२ | ५ | ०चाराऽशीलार्जवः कृतविसंवादः | ०चारौ शीलश्चार्जवकृत-विज्ञताऽविसंवादाः |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७२ | ७ | उपपात्तिः | उपपातिः |
| ,, | १९ | विशेषणगुणा० | विशेषगुणाः० |
| २७३ | १२ | ( गुणः ) | गुणः |
| ,, | १९ | नाभिहृद | नाभिह्रद |
| ,, | २१ | सूत्रे प्रह्व० | सूत्रे प्रह्वयोः प्रह्व० |
| २७४ | ४ | ०ष्यैरभि० | ०ष्यैरभि० |
| ,, | ६ | यद्भ्रा | यद्धा |
| ,, | २२ | गम्यादोत् | गम्या दोषात् |
| २७५ | २ | सखेदः | खेदः |
| २८० | २४ | ०नंभिगम० | ०नभिगम० |
| ,, | १६ | ०प्रयोगस्यं | प्रयोगस्य |
| ,, | १८ | नित्युं | नित्यं |
| ,, | १३ | ०णोपाप० | ०णोपाय० |
| २९१ | ८ | दत्तकार्य० | दत्तकाचार्य० |
| ,, | १६ | ०स्तामर्थ० | ०स्ता अर्थ० |
| २९४ | १० | तद्व्यव० | तद्व्यव० |
| ,, | १३ | शुद्धये | शुद्ध्यै |
| ,, | ,, | शुद्धयया० | शुद्धयाया० |
| ,, | १९ | ०निर्मात० | ०निर्मापित० |
| ,, | २२ | ०पाषिका० | ०प्राशिका० |
| २९५ | ११ | नादूदि० | नानूदि० |
| ,, | १२ | ०रणां ना० | राणां च ना[illegible] |
| ,, | १३ | ०पूति० | ०पूर्ति० |
| ,, | २४ | ०कार्येन | ०कार्ये न |
| २९६ | १७ | साहाय्यं | साहाय्यं |
| ,, | २२ | सरव्या | सख्या |
| ,, | ,, | पूरर्थित० | पूरयित० |
| ,, | २४ | प्रन्न० | अन्न० |
| २९८ | २३ | ०दानश्चे० | दानतश्चे० |
| ,, | २४ | यथा दीय० | यथादीय० |
| २९९ | १६ | प्रदानान् | अप्रदानात् |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३०१ | ६ | ०कृतिं जघन० | ०कृतिजघन० |
| ३०५ | ६ | ०रोगो० | ०रागो० |
| ,, | ११ | तृतीय | तृतीयः |
| ,, | ,, | दद्याश्चे० | दद्याच्चे० |
| ३०६ | ६ | ०भयोगे० | ०मयोगे० |
| ३०७ | २० | ०कोऽयं जात | ०कोऽयं |
| ३०८ | १४ | भवति। | भवति यद्वा णय धातोः प्रापणमप्यर्थ इति तस्येदं रूपम्।— |
| ३०९ | ५ | ०त्याद्रु० | ०त्याहु० |
| ,, | १८ | स विश्वासः | सविश्वासः |
| ३१० | १८ | ०नन्दत | ०नन्देत |
| ३११ | ३ | यत्ताद्वि० | यत्नाद्वि० |
| ३१३ | १३ | मूल्यम्? | मूल्यम् |
| ३२३ | २० | 'संघर्षतः' इति तत्रैव | 'संहर्षतः' इति तत्रैव |
| ,, | २१ | संधर्षतः | संघर्षतः |
| ३२९ | ६ | वनामिव तुषारप्लुष्टं | वनामिव |
| ३३० | १ | रमृतो | स्मृतो |
| ३३१ | ९ | ०ध्याद्द० | ०ध्याद्दृ० |
| ३४१ | १३ | द्वितयि० | द्वितीय० |
| ३४२ | ३ | ०साम्याम् | ०साम्यात् |
| ,, | ७ | कोहम् | लौहम् |
| ,, | २१ | यथायोघ० | यथायोगं घ० |
| ३४४ | ३ | ०द्विष० | ०द्विप० |
| ,, | ११ | कीर्णानै० | कीर्णा नै० |
| ३४६ | ,, | ०सन्द्र० | ०सभ्र० |
| ,, | २० | घिष्णु० | विष्णु |
| ३४७ | ८ | धत्तर० | धत्तूर० |
| ३४८ | २० | तद्वद्रू० | तद्वद्व० |
| ३५० | १६ | वज्ञानिक्या | वैज्ञानिक्या |